# प्रकाशकीयं कथनम्

कोषोऽयं स्वीयस्रोतसाधनैर्यथाशक्यं ज्ञान-भक्तिसम्बन्धिनि आध्यात्मिकविषये तत्रापि विशेषतोऽद्वैतवेदान्तस्य गभीरविषये लिखितानां ग्रन्थानां प्रकाशनं कुर्वन् वर्तते । तदनुक्रमेणैव २०७७ वैक्रमाब्देऽपपि शरत्कुमारभट्टराईवर्येण लिखितेषु ग्रन्थेषु गुरुशिष्यसंवादत्मिकाया ब्रह्मसूत्रकारिकाया महत्त्वपूर्णस्य ग्रन्थस्य प्रकाशनावसरं प्राप्य कोषोऽयं हर्षप्रकर्षमनुभवति। प्रमुख उपनिषदानां कारिका रूपेण।

ग्रन्थेऽस्मिन् परमसिद्धान्ताः सङ्क्षेपेण समुल्लिखिताः सन्ति । अस्माद् जिज्ञासवो मुमुक्षवः साहज्येन ज्ञानं लब्धुं शक्नुवन्तीति विश्वसितुं शक्यते । अतो ग्रन्थोऽयं समेषां जिज्ञासूनां मुमुक्षूणां कृते पठनीयः सङ्ग्रहणीयश्च वर्तत इति वयमाशास्महे । एतादृशस्य महत्त्वपूर्णस्य ग्रन्थस्य प्रकाशनदायित्वं प्राप्तवानयं कोषो लेखकं प्रति हार्दीं कृतज्ञतामर्पयति। अस्य ग्रन्थस्य पूर्णरूपेण प्रकाशनं योग्यं विधाय साहाय्यं कृतवान् कोषस्यास्य मुमुक्षु विद्वान् आजीवनसदस्यो दानवीरो ध्रुवप्रसाद-रेग्मीवर्यो धन्यवादा-र्होऽस्ति । धन्यवादः। ॐ ब्रह्मार्पणमस्तु।

संवत् २०७९ माघः ४

श्रीराजर्षिजनकस्मृतिकोषः

# शुभाशंसा

ज्ञानार्थकाद्विद्धातोर्घञ्प्रत्ययेन निष्पन्नो वेदशब्दो ज्ञानप्रतिपादकशब्दराशिरूपमर्थं द्योतयति । प्रत्यक्षानुमानादिप्रमाणैर्बोद्धुमशक्ययोर्धर्मब्रह्मणोर्ज्ञानं यः कारयति, स एव वेद इति परिभाषा विहितास्ति। धर्मब्रह्मप्रतिपादकमपौरुषेयं वाक्यं वेदः । बाह्यप्रमाणेभ्यो धर्मज्ञानं नहि सम्भवति । तथैव ब्रह्मज्ञानञ्च लौकिकप्रमाणेभ्यो भवितुं नार्हति । प्राणिनामभ्युदयनिःश्रेयसयोः कृते धर्मब्रह्मणोरुभयोज्ञानमत्यावश्यकं वर्तते । एतस्यैव उद्देश्यविशेषस्य परिपूर्तये ऋषिमाध्यमेन वैदिकं वाङ्मयं प्रकटीकृतं वर्तते । विभिन्नासु शाखासु परम्परासु च विभक्ते वैदिकवाङ्मये विविधा धर्मानुष्ठानपद्धतय उपदिष्टा वर्तन्ते, येषामेकत्रीकरणेन धर्मनिर्णयार्थं महर्षिणा जैमिनिना मीमांसासूत्राणि रचितानि । एवमेव ब्रह्मप्रतिपादकानां विभिन्नानां वेदमन्त्राणां तात्पर्याणां निष्कर्षीकरणाय भगवता वेदव्यासेन ब्रह्मसूत्रग्रन्थो विरचितः । एतद्दर्शनद्वयं पूर्वमीमांसोत्तरमीमांसा चेत्यपि निगद्यते। वेदस्योत्तरस्यान्तिमस्य वा खण्डस्य विचारकत्वाद्वेदान्तदर्शनमुत्तरमीमांसेति कथ्यते।

ब्रह्मसूत्रं भिक्षुसूत्रं शारीरकमीमांसासूत्रमित्यादिभिर्विविधनामभिः परिचीयते। निवृत्तिपरायणानां संन्यासिनां विशेषतोऽध्ययनप्रवृत्तिदर्शनादिदं भिक्षुसूत्रमितीर्यते । शारीरकशब्दस्यार्थो भवति – शरीरान्तर्निवासी जीवात्मा । तत्स्वरूपविषयविचारकत्वादेवेदं शारीरकमीमांसासूत्रमिति प्रोच्यते। न्याय-वैशेषिकादीनि अन्यानि आस्तिकदर्शनानि पदार्थानां स्वरूपनिर्धारणाय तान् याथार्थ्येन परिचायनाय च प्रवृत्तानि सन्ति चेद् वेदान्तदर्शनं जीवात्मनोर्वास्तविकस्य स्वरूपस्य निर्धारणाय प्रवृत्तमस्ति । संसाररहस्यमन्वेष्टुं भौतिकाध्यात्मिकदार्शनिकानां प्रवृत्तावस्थायां वेदान्तदर्शनस्य दृष्टिरियमेवास्ति यत्, अन्वेष्टा कोऽस्तीति

जिज्ञासायाः समाधानात् पूर्वं तत्कृतमन्वेषणमप्रामाणिकमेवास्ते । तस्मात् सर्वप्रथमं स्वास्तित्वस्यैवान्वेषणमावश्यकं भवति । आत्मनः तस्यैव वास्तविकस्य स्वरूपस्य नाम ब्रह्मेति प्रदत्तं वर्तते । वेदान्तदर्शनं तज्जिज्ञासायाः खलु प्रारभ्यते – **अथातो ब्रह्मजिज्ञासा** (ब्र.सू.१।१।१) ।

ब्रह्मसूत्रस्य पञ्चपञ्चाशदुत्तरपञ्चशतसङ्ख्यकानि सूत्राणि चतुर्भिरध्यायैः प्रत्यध्यायश्च चतुःपादात्मकसंरचनायां विभाजिता वर्तन्ते । प्रथमः समन्वयाध्याय इत्यभिधीयते, यत्र सर्वेषामुपनिषद्वाक्यानां तात्पर्यमद्वितीयस्य ब्रह्मतत्त्वस्य प्रतिपादनेऽस्तीति प्रदर्शितमस्ति । साङ्ख्य-न्याय-वैशेषिकादिदर्शनानां सिद्धान्तान् प्रस्तुवन्तीव प्रतीयमानानि वाक्यानि च वस्तुतोऽद्वितीयस्य ब्रह्मतत्त्वस्य प्रतिपादन-रूपिणि मूलतात्पर्ये न हि कञ्चन विरोधमुत्पादयन्तीति द्वितीयेऽध्याये प्रतिपादितं वर्तते । अतः एवायमविरोधाध्याय इति कथ्यते । अध्यायेऽस्मिन् कपिल-कणादादिमहर्षीणां सिद्धान्तानां खण्डनं कृतमिव लक्ष्यते परन्तु मीमांसाशास्त्रेण प्राचीना मर्यादेह परिपालितास्ति – 'न हि निन्दावाक्यं निन्दितुं प्रवर्ततेऽपितु विधेयं स्तोतुम् । कस्यापि निन्दावाक्यस्य तात्पर्यं निन्दैव न भवति, अपि तु प्रासङ्गिकस्यार्थस्य प्रशंसापि भवति ।

वस्तुतः सर्वेषामेव दिव्यदर्शिनामृषीणां तत्त्वज्ञानित्वात् तेषु अद्वितीयस्य ब्रह्मतत्त्वस्य ज्ञानं भवत्येव तथापि संसारस्य नैकविचारवतामधिकारिणां कृते साधनप्रक्रियाणामुपदेशक्रमे विभिन्नाः सिद्धान्ता अजायन्त । स्वर्गप्राप्तरुपायस्यान्वेष्ट्रे जैमिनिना ब्रह्मतत्त्वो-पदेशस्यावश्यकता न भवति । तथैव द्रव्यगुणादिपदार्थानां वास्तविकं स्वरूपं बुभुत्सुभ्यां कणाद-गौतमाभ्यामात्मतत्त्वसाक्षात्कारस्य मार्ग-दर्शनमपि नोचितम् । मानवानां रुचेरावश्यकतायाश्चानुसारेण-र्षिभिर्दर्शनानां प्रणयनात् तत्र तत्र दृश्यमानौ विरोध-विभेदौ वस्तुतो

न हि तेषु, अपितु अस्मन्मनस्सु वर्तेत इति मन्तव्यम् । वेदान्तदर्शने नैकेषामृषीणां सिद्धान्तानामालोचनायां सत्यामपि त ऋषयो भ्रान्ता नासन्नित्यभिप्रायोऽद्वैतसिद्धिकारस्य मधुसूदनसरस्वतीस्वामिनो वर्तते- 'न हि ते ऋषयो भ्रान्ताः' (मधुसूदनी टीका, श्रीशिवमहिम्नःस्तोत्रम् ७) ब्रह्मसूत्रस्याविरोधाध्यायस्याध्यायनकाले सर्वदैव तथ्यमिदमवधेयम् ।

ब्रह्मसूत्रस्य तृतीयोऽध्यायः साधनाध्याय इत्युच्यते यस्मिन् तत्त्वसाक्षात्काराय अन्तरङ्ग-बहिरङ्गसाधनानि वर्णितानि सन्ति । निष्कामं कर्म, योगाभ्यासः, उपासना चेति सर्वाणि बहिरङ्गसाधनानि वर्तन्ते । श्रोत्रियस्य ब्रह्मनिष्ठस्य गुरोः सकाशाद् वेदान्तशास्त्रस्य श्रवण-मनन-निदिध्यासनानि तत्त्वज्ञानार्थमन्तरङ्गसाधनानि सन्ति ।

चतुर्थोऽध्यायः फलाध्याय उच्यते, यस्मिन् तत्त्वज्ञानफलस्य मोक्षस्य, तत्स्वरूपस्य, तत्प्रकाराणाञ्च चर्चा विहितास्ति । प्रसङ्गत उपासनासाध्या क्रममुक्तिर्ज्ञानसाध्या सद्योमुक्तिश्च परिचर्चिते स्तः । एवं वेदान्तदर्शनस्य समेषां प्रमेयानां सङ्कलनाद् ब्रह्मसूत्रं वेदान्तस्याकरग्रन्थ इत्युच्यते ।

ब्रह्मसूत्रे भगवत्पादेन श्रीशङ्कराचार्येण भाष्ये रचिते तदाधारितानां टीकाग्रन्थानां व्याख्याग्रन्थानाञ्च एकं विपुलं वाङ्मयं निर्मितं दृश्यते । मूलसूत्रेषु श्रीशङ्कराचार्यस्य भाष्यम्, भाष्ये वाचस्पतिमिश्रस्य भामतीटीका, तस्याः कल्पतरुटीका, तत्र च परिमलटीकेति पञ्च-सोपानात्मकं वाङ्मयं ब्रह्मसूत्रस्योपलब्धं वर्तते । अन्यैर्विद्वद्भिः सन्दर्भतः कृताः टिप्पण्यो व्याख्याश्चासङ्ख्याताः सन्ति । एतावदेव न, अर्वाचीनसमये तु विविधासु लौकिकभाषासु च व्याख्यानुवादा विधीयमाना वर्तन्ते । अस्मिन्नेव क्रमे ब्रह्मसूत्रस्य विपुलवाङ्मयपङ्क्तौ पुनश्च एको नवीनो ग्रन्थो ब्रह्मसूत्रकारिका युज्यमाना वर्तते । एतद्-ग्रन्थस्य रचयित्रा श्रीशरत्कुमारभट्टराईवर्येण शाङ्करभाष्यानुकूल एवार्थो प्रस्तुतो वर्तते, स च अनुष्टुप्छन्दोबद्धपद्यरचनारूपेण वरीवर्ति । अस्य

ग्रन्थस्य तत्समच्छन्दसि धर्मशास्त्रवेदान्तदर्शनाचार्येण प्राध्यापकवरेण डा.लक्ष्मीकान्तपन्थीवर्येणाऽतिसरलभाषया सुखसंवेद्यशैल्या च संस्कृतेऽनुवादो विहितः। एतदर्थमहं डा.लक्ष्मीकान्तपन्थीवर्यञ्च धन्यं वदामि अतो वयमिमं ग्रन्थं वैदेशिकविदुषामग्रेऽपि प्रस्तोतुं शक्नुमः।

ग्रन्थेऽस्मिन् चतुर्णामध्यायानां पादानां तदन्तर्गतानामधिकरणानाञ्च समुल्लेखनपुरःसरं गुरुशिष्ययोः संवादात्मकशैल्याऽधिकरणान्तर्गता विवेच्यविषया वर्णिताः सन्ति। पादटिप्पणीरूपेणाधिकरणसम्बद्धानांश्रुतिवाक्योद्धरणानाञ्चप्रस्तवनाद्ग्रन्थस्यप्रामाणिकता वर्धितास्ति चेदनुसन्धातॄणां कृते चायं ग्रन्थ उपयोगी सम्पन्नोऽस्ति। भौतिकवादस्य झञ्झावातयुते समाजेऽस्मिन् ब्रह्मसूत्रमध्येतुकामस्य प्राप्तिरपि दुर्लभैव, धैर्येण तदध्ययनानन्तरं मनने विचारविमर्शे च लग्नो जनः ततोऽपि दुर्लभो भवति चेत् स्वविचारेणान्ये च लाभान्विता भवन्त्विति धिया मातृभाषयानूद्य प्रकाशनपरा जनास्तु कराङ्गुलिषु गणनशक्या हि केवलम्। अद्वैतवेदान्तविषयिण्याः स्थिरनिष्ठाया ग्रन्थप्रणयनोत्साहस्य परिश्रमस्य च कृते शरत्कुमार-भट्टराईवर्यस्य यावत्यपि प्रशंसा विधीयेत, सा स्वल्पैव।

अन्ते, शरत्कुमारवर्यस्य दशाब्दीशः परिष्कृतस्य वेदान्तविचारस्य रूपेण दृष्टादस्माद् ग्रन्थादधिकाधिका अध्येतारो लाभान्विता भवेयुः। एवञ्च ग्रन्थस्यास्य लेखकाय पाठकेभ्यश्च सर्वेभ्यः प्रत्यगात्मनो विद्येश्वरभवतः कृपया वेदान्तविद्याया वास्तविकस्य फलस्यावाप्तिर्भूयादिति प्रार्थयामि।

स्वामी रमणानन्दः
महेश-संन्यासाश्रमः, देवघट्टः

# सम्मतिः

सूत्रसाहित्येन समृद्धमस्ति संस्कृतवाङ्मयम् । ब्रह्मसूत्रम्, धर्मसूत्रम्, योगसूत्रम्, साङ्ख्यसूत्रम्, न्यायसूत्रम्, वैशेषिकसूत्रम्, बार्हस्पत्यसूत्रम्, शिक्षासूत्रम्, कल्पसूत्रम्, व्याकरणसूत्रम्, छन्दःसूत्रम्, ग्रहगणितीयसूत्रम्, यतस्ततः सूत्रमेव समाकर्ण्यते । सूत्रग्रन्थानान्तु भाण्डागारं खलु संस्कृतवाङ्मयम् । आधुनिकस्य विज्ञानस्य गणितस्य च समेषां सूत्राणामेकत्रीकरणेनापि संस्कृतवाङ्मयस्य सूत्रसमवायेन समताङ्गन्तुं न शक्नोति । आधुनिकसंसारस्य कस्मिँश्चिदपि वाङ्मये तावन्ति सूत्राणि न विद्यन्ते, यावन्ति संस्कृतवाङ्मयभाण्डागारे विलसन्ति । सूत्रसाहित्यम्, शब्दभाण्डागारम्, पर्यायविज्ञानम्, दार्शनिकचिन्तनम्, काव्यप्रयोगः, नीतिचेतना, धर्मचेतनेत्यादिसमग्रदृष्टिभिः सर्वोपरि वर्वर्ति संस्कृतवाङ्मयम् ।

एवञ्च संस्कृतवाङ्मयभाण्डागारे निहिताः सूत्रग्रन्थाः केवलं सूत्रग्रन्थरूपेण नहि स्वसत्तां भावयन्ति, अपि तु तेषु सूत्रग्रन्थेषु नैकैराचार्यैर्भाष्य-टीका-व्याख्या-वार्तिकानि च विरचितानि सन्ति । इह प्रकृतविषयस्य ब्रह्मसूत्रस्यैव सन्दर्भ उत्थाप्येत । ब्रह्मसूत्रस्योपरि आचार्यशङ्करः, आचार्यरामानुजः, आचार्यनिम्बार्कः, आचार्यवल्लभः, आचार्यमध्वः, आचार्यबलदेवश्च पृथक् पृथग् भाष्याणि व्यरचयन् । तेषु भाष्येषु रचितानां टीका-व्याख्या-वार्तिक-विवरणानामपरा सुदीर्घा पङ्क्तिश्च प्रेक्ष्यते । केवलं ब्रह्मसूत्रस्यैव सूत्रभाष्यादीनां समग्रपक्षाणामध्ययनेन तत्तत्कृतिगतं वैविध्यं याथार्थ्यञ्च निश्चेष्यामीति विचार्य केनचित् पूर्णं जीवनमर्प्यते चेदपि तदध्ययनस्य पूर्णत्वं सुदुष्करं खलु ।

परमकारुणिकेन महर्षिणा व्यासेन यदा ब्रह्मसूत्राख्यः सूत्रग्रन्थो निरमायि, तच्चिरकालाद् अनन्तरमेव अद्वैतवेदान्तजगति आचार्य-

शङ्करस्य समुदयः समीक्ष्यते। आचार्यशङ्करपूर्वमपि अद्वैतवेदान्तस्य ग्रन्थसंरचनात्मके समुन्नयने केषाञ्चनाचार्याणां महत्त्वाधायिका भूमिका दृश्यते तथापि आचार्यशङ्करस्य ब्रह्मसूत्रभाष्यप्रणयनानन्तरमेव विवरणानाम्, वार्तिकानाम्, टीका-व्याख्यानाम्, विविधाग्रन्थानाञ्च रचनयाद्वैतवेदान्तस्य भाण्डागारमधिकतरं समृद्धं प्रतिभाति ।

अद्वैतवेदान्ते प्रस्थानत्रयी प्रसिद्धास्ति, यत्र श्रुतिप्रस्थानरूपेण उपनिषद्, स्मृतिप्रस्थानरूपेण भगवद्गीता, न्यायप्रस्थानरूपेण च ब्रह्मसूत्रं परिगण्यन्ते । विशेषत आचार्यशङ्करप्रणीतस्य भाष्यस्यैव व्याख्यानक्रमेऽद्वैतवेदान्तस्य सैद्धान्तिके धरातलेऽद्वैताचार्याणां वादत्रयस्य प्रस्थानत्रयस्य वा प्रसिद्धिर्वर्तते, यत्र नवमशताब्द्या आचार्यस्य वाचस्पति-मिश्रस्यावच्छेदवादः, तस्याः खलु शताब्द्या अपरस्याचार्यस्य सर्वज्ञातमुनेः, एकादशशताब्द्या आचार्यस्य प्रकाशात्मयतेश्च प्रतिबिम्बवादः, अष्टमशताब्द्या आचार्यस्य सुरेश्वरस्याभासवादश्च समुल्लेखनीयाः सन्ति ।

ब्रह्मसूत्रस्य शाङ्करभाष्यमाधृत्याद्वैताचार्यैः प्रणीतेषु टीका-व्याख्या-वार्तिक-विवरणेषु पूर्वोक्तं वादत्रयं प्रायः निर्दिष्टमनुभूयते । आचार्य-वाचस्पति-मिश्रकृता भामतीटीका, आचार्य-सर्वज्ञात्ममुनिरचितं सङ्क्षेपशारीरकम्, पद्मपादाचार्यप्रणीतायाः पञ्चपादिकाया उपरि रचितं प्रकाशात्मयतेर्विवरणम्, सुरेश्वराचार्यस्योपनिषद्भाष्यवार्तिकम्, प्रणववार्तिकम्, मानसोल्लासः, नैष्कर्म्यसिद्धिरित्यादिग्रन्थेषु च अमी त्रयो वादाः सङ्केतिता व्याख्याताश्च संलक्ष्यन्ते । प्रकाशात्मयतेर्विवरणस्य व्याख्यानार्थं विद्यारण्यस्वामिना पुनर्विवरणप्रमेयसङ्ग्रहाख्यो ग्रन्थश्च विरचितोऽवाप्यते ।[१]

---

१. भाष्यटीकाविवरणं तन्निबन्धनसङ्ग्रहः ।
व्याख्यानव्याख्येयभावक्लेशहानाय रच्यते ॥ (विवरणप्रमेयसङ्ग्रहः, कारिका २)

अद्वैतवेदान्तक्षेत्रे प्राचीनकालतोऽर्वाचीनं कालं यावदनल्पैराचार्यैर्लेखनी सञ्चालिता विलोक्यते । ब्रह्मसूत्रस्य प्रणयनानन्तरममुना दर्शनेन कृतिसंरचनपक्षे परिमाणात्मिका च महती समुपलब्धिराविष्कृता सन्दृश्यते। एतस्याभिप्रायो ब्रह्मसूत्रस्य प्रणयनात् प्राग् अद्वैतवेदान्तस्य परम्परैव नासीदिति न। नूनमवर्तत। एतत्प्रमाणानि ब्रह्मसूत्रग्रन्थान्तः खलु समुलभ्यन्ते। ब्रह्मसूत्रकारेण महर्षिणा व्यासेन प्राचीनानामद्वैताचार्याणां नामानि तत्र समुल्लिखितानि सन्ति । तेषु आचार्यो जैमिनिः[२], आचार्यो बादरिः[३], आचार्य आश्मरथ्यः[४], आचार्य औडुलोमिः[५], आचार्यः काशकृत्स्नः[६], आचार्यः कार्ष्णाजिनिः[७], आचार्य आत्रेय[८] इत्यादयो वर्तन्ते।

सूत्रकारस्य व्यासस्य समकालीनैः, व्यासपूर्वैः, व्यासशङ्करयोरन्तराल-कालीनैश्च अनेकैराचार्यैरद्वैत-वेदान्तस्य समुन्नयनाय सुविशिष्टं योगदानं विहितमस्ति । आचार्येषु तेषु ब्रह्मर्षिर्वसिष्ठः, आचार्यो गौडपादः, गोविन्दभगवत्पादः, भर्तृहरिः, भर्तृप्रपञ्चः, भारुचिः, ब्रह्मदत्तः, उपवर्षः, बोधायनः, द्रविडाचार्य इत्यादीनां नामानि अग्रपङ्क्तौ संलोक्यन्ते । औपनिषदीषु आख्यायिकासु समवाप्तानां तत्त्वोपदेष्टॄणामाचार्याणाञ्च नामानि स्मर्यन्ते चेद् योगीश्वरो याज्ञवल्क्यः, मुनिः पिप्पलादः, धर्मराजो यमः, ब्रह्मा, अथर्वा, अङ्गिरा, भारद्वाजः सत्यवहः, आरुणिः, रैक्वः, सनत्कुमारः, प्रजापतिरित्यादयो नैके स्मरणीयाः सन्ति।

---

२. साक्षादप्यविरोधं जैमिनिः। (ब्रह्मसूत्रम् १/२/२९)
३. अनुस्मृतेर्बादरिः। (ब्रह्मसूत्रम् १/२/३१)
४. अभिव्यक्तेरित्याश्मरथ्यः। (ब्रह्मसूत्रम् १/२/३२)
५. उत्क्रमिष्यत एवं भावादित्यौडुलोमिः। (ब्रह्मसूत्रम् १/४/२१)
६. अवस्थितेरिति काशकृत्स्नः। (ब्रह्मसूत्रम् १/४/२२)
७. चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः। (ब्रह्मसूत्रम् ३/१/९)
८. स्वामिनः फलश्रुतेरित्यात्रेयः। – ब्रह्मसूत्रम् ३/४/४४)

वस्तुतोऽद्वैतवेदान्तस्य आचार्यपरम्परा भगवतो नारायणादेव प्रारब्धा विज्ञायते । परम्परेयं भगवतो नारायणात् प्रारभ्य ब्रह्मदेवः, ब्रह्मर्षिर्वसिष्ठ इत्यादिभिरनुसारिता सती आचार्यशङ्करेण तच्छिष्यैश्च पुरस्कृता संलक्ष्यते ।[९] आचार्यशङ्करस्यैव यतिपरम्परायां दीक्षायाः, अद्वैतवेदान्तस्य अध्ययनाध्यापनयोः, ग्रन्थप्रणयनस्य, श्रवणादि-साधनानुष्ठानस्य च प्रक्रियाया नैरन्तर्येण साम्प्रतमस्मत्पर्यन्तमपि अद्वैतवेदान्तस्य परम्परेयं सततं प्रवहन्ती प्रेक्ष्यते । ब्रह्मसूत्र-कारिकेयञ्च अद्वैतवेदान्तविषयकाणां नवीनग्रन्थानां प्रणयनक्रमे हि आविष्कृतोऽन्यतमो विशिष्टग्रन्थो वर्तते ।

अन्येषां पौरस्त्यदर्शनानामिव अद्वैतवेदान्तस्य बीजञ्च वेदेषु समुपलभ्यते । शास्त्रप्रमाणाधारेण तु अपौरुषेयाणां वेदानां रचनाकालस्य सन्दर्भ एवानुपपन्नः तथापि आधुनिकेन विज्ञानेन च सर्वप्राचीनत्वमुद्घोषितस्य ऋग्वेदस्य नासदीयसूक्तेऽ-द्वैतदर्शनस्य बीजमवाप्यते । सृष्टेः प्राक्तनीमवस्थां वर्णयता सूक्तेन सदसद्रूपं द्वैतं निषिद्धमस्ति ।[१०] सूक्तेन यत्तदानीमाकाशद्युलोकयोः, मृत्य्वमृतत्वयोः, दिनरा योश्चेत्यादीनां न कश्चन भेद आसीदिति प्रोच्य एकमात्रस्याद्वितीयस्य तत्त्वस्य सत्ता सङ्केतिता, स एवाद्वैतवेदान्तस्य मूलसिद्धान्तः । एवञ्च ऋग्वेदस्यैव वामदेवसूक्तादिषु चाद्वैतसिद्धान्तस्य सङ्केतोऽवाप्यते । सूत्रकारो महर्षिर्व्यासश्च 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्'[११] इति कथनेनास्यैव तथ्यस्य

९. नारायणं पद्मभवं वसिष्ठं शक्तिञ्च तत्पुत्रपराशरञ्च ।
व्यासं शुकं गौडपदं महान्तं गोविन्दयोगीन्द्रमथास्य शिष्यम् ॥
श्रीशङ्कराचार्यमथास्य पद्मपादञ्च हस्तामलकञ्च शिष्यम् ।
तं त्रोटकं वार्तिककारमन्यानस्मद्गुरून् सन्ततमानतोऽस्मि ॥

– आचार्यवन्दनम्, वदान्तसन्दर्भः

१०. नासदासीन्नो सदासीत्तदानीम्... । (ऋग्वेदः १०/१२९/१)

११. ब्रह्मसूत्रम् १/१/३१

सङ्केतञ्चकारेति बुध्यते। 'आत्मा वा इदमेक एवाग्र आसीत्'[१२] 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्'[१३] इत्यादिभिरौपनिषदैर्वचनैश्च इदमेव नासदीयसूक्त-निर्दिष्टं तथ्यमनुमोदितमिति स्पष्टम्।

अध्यासस्य याथातथ्यस्य बोधादृते ब्रह्मजिज्ञासायाः कर्तव्यतैव न बुध्यते। यतो हि अनर्थहेतोरध्यासस्यैव प्रहाणायानन्योपायरूपेण ब्रह्मजिज्ञासा प्रतिज्ञातास्ति।[१४] कोऽयमध्यासः ? 'अतस्मिन् तद्बुद्धिः।'[१५] यत्तन्नास्ति, तस्मिन् तद्बुद्धिर्हि अध्यासः। असर्पभूतायां रज्जौ सर्पबुद्धिः, अरजतायां शुक्तौ रजतबुद्धिः, अनीले नभसि नीलबुद्धिरित्यादयः सर्वेऽध्यासाः। अविद्याकारणेन मनुष्यः पुत्र-कलत्रादीनां साकल्यवैकल्ययोः स्वस्यैव साकल्यं वैकल्यञ्चानुभवति, अयमध्यासः। तथैव स्थूलत्व-कृशत्वादीन् देहधर्मान् स्वात्मनि आरोप्य स्वस्यैव स्थूलत्वकृशत्वादेः कल्पनम्, अन्धत्व-बधिरत्वादीन् इन्द्रियधर्मान् आत्मसात्कृत्य न पश्यामि, नहि शृणोमीति आलापः, सङ्कल्प-विचिकित्सादीन् अन्तःकरणधर्मान् स्वधर्मत्वेनोररीकृत्य स्वेनैव कल्पितं विचिकित्सितमिति भावाभिव्यक्तिः, क्षुत्पिपासाादीन् प्राणधर्मान् स्वात्मनि सङ्कल्प्य बुभुक्षितोऽस्मि, तृषितोऽस्मीति प्रकटीकरणमित्येवम्प्रकारकाः सकलाश्चैतेऽध्यासाः सन्ति।

कर्तृत्वादीनामन्तःकरणधर्माणां स्वात्मनि समारोपणशीलस्य संसारिणो मनुष्यस्य कर्त्र्यादिरूपेणात्मन आरोपोऽन्तःकरणे स्वतो जायते। आत्मानात्मानौ परस्परमत्यन्तं विविक्तावपि अविद्याकारणेना-विविक्ताविव व्यवह्रियेते। अविद्याकारणैव आत्मवस्तुनोऽनात्मपदार्थयोश्च मध्ये विविक्तताया बोधाशक्यत्वे इतरेतराध्यासव्यवहारः सततं

---

१२. ऐतरेयोपनिषद् १/१/१

१३. छान्दोग्योपनिषद् ६/२/१

१४. अस्यानर्थहेतोः प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते।
— ब्रह्मसूत्रम्, अध्यासभाष्यम्

१५. अध्यासो नाम अतस्मिंस्तद्बुद्धिरित्यवोचाम। — ब्रह्मसूत्रम्, अध्यासभाष्यम्

सञ्चलति । न केवलं लौकिको व्यवहारोऽपि तु शास्त्रीयो व्यवहार-श्चाध्यासमय एव ।[१६]

अध्यस्ताधिष्ठानयोर्विवेकाग्रहोऽध्यासव्यवहारस्य हेतुरस्ति चेद्विवेकाग्रहस्य हेतुश्चाविद्या । अतोऽध्यासव्यवहारस्य मूलहेतुरविद्यैव, अज्ञानमेव । तस्मादविद्यैव समग्रस्यापि द्वैतप्रपञ्चस्य तन्निहितस्योपद्रवस्य च मूलहेतुर्मन्यते । एवञ्च तस्याः खलु हानोपायरूपेण वेदान्तशास्त्रस्य विशालं भाण्डागारं विलसति ।[१७]

अध्यासव्यवहारस्य मूलमविद्या, अविद्याया आत्यन्तिकनिवृत्त्यैव कर्तृत्वभोक्तृत्वादेरनर्थस्य निवृत्तिः सम्भवी ।[१८] अत एव तु अविद्यैव वेदान्तशास्त्रेण जीवात्मैक्यस्याप्रतिपत्तेः संसृतिचक्रस्य च बीजत्वेनाभिहितास्ति ।[१९]

भेदसिद्धये शास्त्रं नावश्यकम् । द्वैतस्य प्रतिपादनाय शास्त्रं नापेक्ष्यते । भेदस्तु व्यवहारसिद्धः खलु । द्वैतं संसारतः स्वतः प्रतिपन्नम् । मूर्खाद् मूर्खतरस्यापि व्यवहारो भेदमेव साधयन् प्रचलति चेत् तत्साधनायैव शास्त्रस्यापेक्षाविषयत्वं कीदृशम् ? अभेदसाधनं हि शास्त्रप्रयोजनम् । अतोऽननुभूतस्याभेदस्याद्वैतस्य वा साधनाय खलु शास्त्रस्य प्रयोजनवत्ता प्रेक्ष्यते ।

अहं सुखी, अहं दुःखी इत्यादिव्यवहारेणात्मनो नित्यमहम्प्रत्य-यालम्बनताया भानाद् आत्मविषयकः सन्देहो नहि कस्यचिदपि वर्तत इत्यनुभूयते । सत्यमेतत् परन्तु तत्र अहम्प्रत्ययस्यालम्बनत्वेना-

---

१६. तस्मादविद्यावद्विषयाण्येव प्रत्यक्षादीनि शास्त्राणि प्रमाणानि च ।

– ब्रह्मसूत्रम्, अध्यासभाष्यम्

१७. अज्ञानमेवास्य हि मूलकारणम् । तद्धानमेवात्र विधौ विधीयते ॥ – रामगीता ९

१८. कर्तृत्वाद्यनर्थहेतोरध्यासस्य समूलस्य आत्यन्तिकनाशो मोक्षः ।

– ब्रह्मसूत्रम्, अध्यासभाष्यम्, रत्नप्रभाटीका

१९. ऐकात्म्याप्रतिपत्तिर्या स्वात्मानुभवसंश्रया ।
सा विद्या संसृतेर्बीजं तन्नाशो मुक्तिरात्मनः ॥ – नैष्कर्म्यसिद्धिः ७

नुभूयमान आत्मा कीदृशः ? स तु केवलं सुख-दुःखादेर्भोक्तृ-रूपेणानुभूयमान आत्मास्ति । नह्यसौ सकलैरपीतरधर्मैर्विरहितः [20]शास्त्रनिर्दिष्टोऽनीदृक् स्वयंज्योतिरात्मा । स तु केवलं सुखदुःखादेर्भोक्तृरूपो भोक्तृत्वादिधर्मविशिष्टोऽविद्योपहित आत्मा वर्तते । तादृशस्यातद्धर्मविशिष्टस्य तत्त्वस्यानुभूत्या मुक्तिर्न सम्भवति । सोऽतद्धर्मविशिष्टो द्वैततादात्म्यापन्न आत्मा । तस्माद् अध्यासस्यान्तःपाती स आत्मा । अतद्वस्तुन आवर्तनाय न, अपि तु व्यावर्तनायैव श्रुतिरात्मोपदेशं विधत्ते ।[21]

द्वैततादात्म्यापन्नस्य परिच्छिन्नस्यात्मनो ज्ञानेन मुक्तिर्यदि सम्भवेत्, सर्वे मुक्तिं लभेरन् । अहं न वृक्षः, अहं काष्ठपण्डपे निवसामि, अहं तदा नासम्, तस्मादहं भिन्न इत्यादिभिर्वाग्व्यवहारैरपि सर्वेऽहम्प्रत्ययस्य आलम्बनतामधिगच्छन्तो भवन्ति परन्तु कीदृशास्ते ? विविधैः परिच्छेदैर्भेदैश्च परिलसितास्ते । परिच्छिन्नोऽविद्योपहितत्वेन जीवभावमापन्नो वा यदयमात्मा, तदनुभवी मनुष्यः, न तु वस्तु-देश-कालकृतैः परिच्छेदैः शून्यस्यात्मनोऽनुभवी सः । स्वगत-सजातीय-विजातीयादिभेदसंवलितस्य देहादिसंश्लिष्टस्यात्मनोऽनुभूतिस्तु वर्तते परन्तु तद्भेदरहितस्यात्मनोऽनुभूतिर्नास्ति । निर्धर्मकस्य निर्विकारस्य निराकारस्य निःसङ्गस्य चात्मनो बोधेनैव दुःखस्यात्यन्तिकी निवृत्तिः सम्भवति । तेनैव च परमानन्दस्य प्राप्तिर्भविष्यति । एवंविधस्य असङ्गस्यात्मन उपदेष्टृत्वेन हि वेदान्तशास्त्रस्य प्रयोजनवत्ता, एवञ्च अनुशीलनीयतापि प्रतिपद्यते ।

वस्तुतो जीवात्मनोरैक्यस्य अप्रतिपत्तेर्मूलहेतुरूपा आत्माश्रिता यदविद्यास्ति, तस्याः खलु निवृत्त्या नैमित्तिकः प्रपञ्चश्च निवृत्तिं

---

२०. कर्तापि वा कारयितापि नाहं भोक्तापि वा भोजयितापि नाहम् ।
द्रष्टापि वा दर्शयितापि नाहं सोऽहं स्वयंज्योतिरनीदृगात्मा ॥ – विवेकचूडामणिः ५०८

२१. अतद्व्यावृत्त्यायं चकितमभिधत्ते श्रुतिरपि । – श्रीशिवमहिम्नःस्तोत्रम् २

यास्यति । तावत् सत्यरूपेण भासमानः प्रपञ्चोऽसौ मिथ्यारूपेण भासिष्यते, प्रपञ्चबाधो भविष्यति ।[२२] अनात्मनि देहादावहम्बुद्ध्या समुत्पद्यमानं यद्दुःखम्, तद्धानोपायत्वेन अद्वयानन्दस्य आत्मनः साक्षात्कारस्य समुपदेष्ट्री सती श्रुतिः प्रयोजनवत्तामावहति । एवं वेदान्तशास्त्रञ्च सप्रयोजनं सिद्ध्यति ।[२३]

अध्यस्तस्य प्रपञ्चस्य व्यावहारिक-सत्तायामनङ्गीकृतायां वेदान्तशास्त्रस्य प्रयोजनं नोपपद्यते । अत एव तु 'तदैक्षत बहु स्यां प्रजायेयेति'[२३], 'यतो वा इमानि भूतानि जायन्ते...'[२५], 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः...'[२६] इत्यादिश्रुतिवाक्यानि अध्यस्तस्य प्रपञ्चस्य व्यावहारिकमस्तित्वं ख्यापयितुं सृष्टिं प्रतिपादयन्ति । तस्यैव प्रपञ्चस्य बाधविषयत्वं निरूपयितुमेव बृहदारण्यकश्रुतिः 'नेति नेति'[२७], 'नेह नानास्ति किञ्चन'[२८] इत्यादिवचनैः प्रपञ्चस्य पारमार्थिकं सत्ताभावं समुपदिशति । श्रुतेः कैश्चिद्वाक्यैरेव आत्मनि प्रपञ्च आरोप्यते चेत् पुनः कैश्चिद्वाक्यान्तरैः सैव श्रुतिः तत्र प्रपञ्चस्यापवादं प्रस्तौति ।

अनात्मवस्तुनः प्रपञ्चस्य यदवभासनं जनोऽनुबोभवीति, जीवस्य अज्ञानवस्था सा । स एव जीवो ज्ञानावस्थापन्नः सन् पारमार्थिकत्वेन केवलम् आत्मसत्तानुभूतिमारोहति । अस्यैव

---

२२. जीवभावजगद्भावबाधे स्वात्मैव शिष्यते ॥
नाप्रतीतिस्तयोर्बाधः किन्तु मिथ्यात्वनिश्चयः । – पञ्चदशी ६/१२-१३

२३. अहम्प्रत्ययजं दुःखमपोह्यानन्दमद्वयम् ।
आत्मानं दर्शयन्ती च श्रुतिः स्यात् सप्रयोजना ॥
– ब्रह्मसूत्रम् १/१/१ अमलानन्दकृता शास्त्रदर्पणटीका

२४. छान्दोग्योपनिषद् ६/२/३

२५. तैत्तिरीयोपनिषद् ३/१

२६. तैत्तिरीयोपनिषद् २/१

२७. बृहदारण्यकोपनिषद् २/३/६

२८. बृहदारण्यकोपनिषद् ४/४/१९

प्रापञ्चिकस्य सत्ताबोधस्य, तत्सत्तात्यन्तिकाभावबोधस्य च स्थितिद्वयं खलु वेदान्तशास्त्रेऽध्यारोपापवादावित्यभिधानेन प्रथितमालोक्येते ।[२९] संसारिणो जनस्य निष्प्रपञ्चस्य स्थितिप्राप्तेः प्राक् प्रपञ्चसत्तायाः प्रतीतिरपेक्ष्यते । इयमेव दशाद्वैतवेदान्तभाषयाध्यारोप इति निगद्यते ।

'प्राप्तौ सत्यां निषेधः', प्राप्तेरनन्तरं हि तन्निषेधः सम्भवति । आत्मनि द्वैतप्रपञ्चस्य प्राप्तिः कदापि नास्ति चेत् श्रुत्या किं निषिद्ध्यते ? एवञ्च ज्ञानसाधकेन आत्मानुभूत्या कस्य बाधो विधीयते ? तस्मादपवादायैव तु अध्यारोपश्च कल्पनीयः । वस्तुतोऽपवादाय निषेधायैव वा श्रुतिः प्रपञ्चसृष्टेरध्यारोपं विधत्ते । श्रुतिः प्रपञ्चसृष्टेर्यदध्यारोपं कुरुते, सोऽपि लक्ष्यतोऽद्वितीयस्यात्मनो निरूपणाय खलु भवति ।[३०]

अद्वैतवेदान्तस्य सिद्धान्तचर्चाया विस्तारभूमिरस्ति उपनिषद् । वस्तुतो वेदान्त उपनिषदपरपर्यायभूतः खलु ।[३१] श्रुतिप्रस्थानरूपया उपनिषदा साक्षादुपदिष्टं सिद्धान्तमेव स्मृतिप्रस्थानं गीताशास्त्रं सुबोधशैल्यानूद्य बोधयति, पुनश्च न्यायप्रस्थानेन ब्रह्मसूत्रेण ऊहापोहपूर्वकं तदेव तथ्यं प्रतिपाद्यते । युक्तिमूलकत्वेनैव ब्रह्मसूत्रस्य न्यायप्रस्थानमिति नामधेयम् । एतादृशे युक्तिमूलके ब्रह्मसूत्रे लेखनीसञ्चालनायानुष्ठितः समुत्साहः, तत्र च कारिकाग्रन्थस्य प्रणयनार्थम्, नेयं कस्यचन कृतेऽपि सामान्या वार्ता ।

वेदान्तदर्शनस्यासदृशः सूत्रग्रन्थोऽस्ति ब्रह्मसूत्रम् । अन्यैराचार्यै-रिव अद्वैतवेदान्तस्य आचार्यैश्च सूत्रग्रन्थस्यास्य रहस्योद्घाटनार्थं

---

२९. अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते । – भगवद्गीताव्याख्या, मधुसूदनसरस्वती

३०. नहि सृष्टिवाक्यानां सृष्टौ तात्पर्यम्, किन्त्वद्वये ब्रह्मण्येव ।

– वेदान्तपरिभाषा, विषयपरिच्छेदः

३१. वेदान्तो नाम उपनिषत्प्रमाणं तदुपकारीणि शारीरकसूत्रादीनि च ।

– वेदान्तसारः ३, योगीन्द्रः सदानन्दः

लेखनीसञ्चालनेनास्य दार्शनिकं ज्ञानभाण्डागारं समुपचायितं वर्तते । भाष्यम्, भामती, पञ्चपादिका, सङ्क्षेपशारीरकम्, विवरणम्, विवरणप्रमेयसङ्ग्रहः, अन्यान्यैर्वैदुष्यपूर्णैः टीका-व्याख्यानैश्च युक्ते ब्रह्मसूत्रेऽस्मिन् साम्प्रतं यावच्च लेखनी सञ्चलन्ती समीक्ष्यते । कृष्णद्वैपायनस्य महर्षेर्व्यासस्य ब्रह्मसूत्रस्योपरि कारिकाग्रन्थप्रणयनेन श्रद्धेयेन शरत्कुमार-भट्टराईवर्येण ब्रह्मसूत्रस्या-ध्ययनस्य क्षेत्रमितोऽपि समृद्धीकृतं वर्तते । ब्रह्मसूत्रस्येव गूढग्रन्थस्य सुबोध्यतासम्पादनपुरःसरं पाठक-साधक-मुमुक्षूणां समक्षं प्रस्तवनं कृतिकारस्य महनीयं श्लाघनीयञ्च कार्यम् ।

अस्य कारिकाग्रन्थस्य विषये समासतः परिचर्च्यते चेत् सूत्रकारेण विहितमध्यायानाम्, पादानाम्, अधिकरणानाञ्च खण्ड-विभाजनं खण्डनामान्यपि यथावत् संस्थाप्य चूर्णकशैलीह सम्मानितावलोक्यते । पञ्चपादिकाकारस्य शङ्करशिष्यस्य पद्म-पादाचार्यस्य वर्णकीयखण्डीकरणशैली च कारिकाग्रन्थेऽस्मिन् तिरस्कृता नानुभूयते ।[३२] समग्रोऽयं कारिकाग्रन्थो गुरुशिष्ययोः सुरुचिरया संवादशैल्या सरलेऽनुष्टुप्छन्दसि संरचितास्ति ।[३३] अध्यासस्य - निरूपणादृत आत्मनः सन्दिग्धत्वं जिज्ञास्यत्वञ्च असिद्धताङ्गच्छतः । अनेन वेदान्तस्य आरम्भणीयत्वस्यैव अनुपपन्नतया समग्रमपि वेदान्तशास्त्रं निष्प्रयोजनं सिद्ध्यति । अत एव आचार्यशङ्करेण अवलम्बिता उपोद्घातेऽध्यासनिरूपण-सरणिरत्र कारिकाग्रन्थे च सत्कृतास्ति ।

---

३२. जन्माद्यस्य यतः सूत्रादस्त्यस्मिन् वर्णकद्वयम् ।
कृत्वा विभागमलिखत् स्रष्टाऽस्मिन् पञ्चपादिकाम् ॥ – ब्रह्मसूत्रकारिका १/१/१५

३३. शिष्यः– कथं सर्पायते रज्जुः ? शुक्तिः किं रजतायते ?
आज्ञापयतु मामद्य तत्कथं केन हेतुना ? ॥
गुरुः– तावावरणविक्षेपौ त्वविद्याशक्तिसाधने ।
आवरणं त्वावृणुते विक्षेपः सृजति स्वयम् ॥ – ब्रह्मसूत्रकारिका, उपोद्घातभाष्यम् ४८-४९

आकारिकाग्रन्थं शिष्यकथने प्रायः पूर्वपक्षमतोपस्थापन-पूर्वकं जिज्ञासा प्रकटिता विलोक्यते चेद् गुरूपदेशावसरे पूर्वपक्षमतखण्डनपूर्वकं शिष्यस्य जिज्ञासासमाधानमालोक्यते । प्रश्नोत्तरकाले शिष्यः क्वचित् पूर्वपक्षिरूपेण स्वात्मानं नाटयति चेत् क्वचित्तु स्वयं मुखपात्रतामनाश्रित्य प्रायः पूर्वपक्षिविचार-रूपेणैव तृतीयपुरुषशैल्या पूर्वपक्षः समुपस्थापितो दृश्यते ।[३४] कारिकाभिरिङ्गितीकृतानि सकलान्यपि उपनिषद्वचनानि, सूत्रादि-सन्दर्भाश्च पादटिप्पणीरूपेणाक्षरशः समुपस्थापिता दरीदृश्यन्ते । ग्रन्थस्य भूमिकाखण्डश्च महन्महत्त्वाधायकं वर्तते चेद् ग्रन्थान्तेऽ-नुसूचीखण्डे सूत्रकारेण महर्षिव्यासेन प्रणीतानि सकलान्यपि ५५५ सूत्राणि सार्थानि प्रस्तुतानि सन्ति । तदनु तत्र ब्रह्मसूत्रग्रन्थस्य सारश्च विलिखितो वर्तते । एवं कारिकाग्रन्थस्यास्य विषयवस्तुनः, शैलीगतस्य वैशिष्ट्यस्य च समीक्षणेनानुमीयते यत् साधकेन भट्टराईवर्येण महतायासेन एतत्प्रणयनं समनुष्ठितमिति ।

अद्वैतवेदान्तस्य अनारतमनुशीलकस्य शरत्कुमार-भट्टराईवर्यस्य महच्छ्रमस्य परिणामरूपेण अद्वैतवेदान्तस्य भाण्डागारे पुनरन्यतमो विशिष्टग्रन्थः प्रविशन्नस्तीति विज्ञाय दर्शनानुरक्तं मद्धृदयञ्च हर्षप्रकर्षमनुभवति । एतादृशस्य वेदान्तराद्धान्त-परिलसितस्य कारिकाग्रन्थस्य अमरगिराऽनुवादेन विदुषा लक्ष्मीकान्तवर्येण यत् साधु कर्म आचरितं तच्चातीव श्लाघनीयम् । मादृशस्य अद्वैतवेदान्तस्य अध्येतुरितरेषां साधकानां कृते च एतस्माद् ग्रन्थाद् भृशं लाभो भूयादिति कामये । एवंविधं लोकोपकारकं दार्शनिककार्यं साधितवतेऽस्मै श्रद्धेयाय ग्रन्थकाराय भट्टराईवर्याय नैके साधुवादाः, वर्धापनानि च

---

३४. **जगत्कर्ता प्रधानं स्यात् कथयन्तीह वादिनः ।**
**किं प्रधानं ब्रह्म यद्वा हेतुं वदतु मामिह ॥ – ब्रह्मसूत्रकारिका १/५/८९**

भूयांसि। वेदान्तस्य चिन्तनेन, कथनेन, लेखनेन च जाग्रत्कालीनस्य समग्रस्यापि समयस्य यापनशीलस्य एतस्य शास्त्रनिर्दिष्टेयं[३५] प्रवृत्तिर्नैरन्तर्यं लप्सीष्ट । ईश्वरीयकृपयासौ कृतिकारोऽद्वैतवेदान्तस्य चिन्तनं लेखनञ्च आजीवनमाप्यात्। ॐ तत्सत्।

रोहिणीराजः तिमिल्सिना
स्नातकः, महेश-संस्कृत-गुरुकुलम्

३५. आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तया।
दद्यान्नावसरं किञ्चित् कामादीनां मनागपि॥ (स्मृतिः)

# भूमिका

ब्रह्मसूत्रकारिकाया भूमिकालेखनस्योपक्रमे मया भगवता श्रीशङ्कराचार्येण ब्रह्मसूत्रोपोद्घातेऽध्यासभाष्येऽन्ते लिखितोऽस्यानर्थहेतोः प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्त इति वाक्यांशः स्मृतः । अथ साम्प्रतं यावत् प्रथितानां वेदान्तसम्प्रदायानां सम्बन्धे सङ्क्षिप्ता चर्चापेक्षितेति मया विचारिता । यतो हि सवेषां वेदान्तानां परमं लक्ष्यमध्यासजन्यस्याध्यासस्य नाशः खलु परन्तु सम्प्रति परिचर्च्यमानैर्विविधैर्वेदान्तनामधरैर्मतैर्वादैः सम्प्रदायैश्च तदनुरूपाः सिद्धान्ता अङ्गीकृता न वेति स्पष्टः सङ्केतः सङ्क्षिप्तचर्चया भविष्यति । सम्बन्धेऽस्मिन् नाधिका समीक्षा विधास्यते ।

एवंरीत्या विचारानन्तरं ब्रह्मसूत्रकारिकाया भूमिकायाः 'क', 'ख' चेति द्विधा विभज्य लेखनमावश्यकम् । अथ 'क' खण्डे वेदान्तः 'ख' खण्डे च ब्रह्मसूत्रकारिका भविष्यतः ।

## (क) वेदान्तः

वेदान्तनाम्ना नाना सम्प्रदायाः प्रचलिताः सन्ति । अनेके आचार्या विर्विधैर्नामभिः प्रस्थानत्रय्यां संस्कृतभाषया भाष्यं विलिख्य स्वकीयस्य सम्प्रदायस्य मतस्य च प्रतिष्ठापनेन सहैव स्वयं जगद्गुरुनाम्ना विश्रुताश्च वर्तन्ते । 'वेदस्य अन्तः' इत्येवंरीत्या वेदान्तशब्दस्य व्युत्पत्तिः प्रस्तूयते । औपनिषदः सिद्धान्त एव वेदान्तो निगद्यते । प्रायो वेदस्यान्तिमे भागे इमा भवन्ति, इमा उपनिषदः कथ्यन्ते ।

उपनिषदां वाक्यपुष्पाणां सङ्ग्रहणपूर्वकं ग्रथनेन भगवता वेदव्यासेन सुन्दरमालारूपं ब्रह्मसूत्रं प्रणीतम् । 'ब्रह्मणः सूत्रम्' इति व्युत्पत्त्यनुसारेण ब्रह्मबोधकः सङ्क्षिप्तः सिद्धान्तो ब्रह्मसूत्रमिति

वक्तुं शक्यते । जिज्ञासुभ्यो ब्रह्मज्ञानरूपपयःप्रदायिनी गौरिति संज्ञा भगवद्गीतया उपनिषद्भ्यः प्रदत्ता वर्तते। उपनिषदः, उपनिषद्वाक्यानामौ-पनिषदसिद्धान्तस्य च व्याख्यात्र्यौ ब्रह्मसूत्र-भगवद्गीते च वेदान्त इत्युच्यते ।

सिद्धान्ततो वेदान्त उपनिषत्प्रमाणमेव परन्तु तद्व्याख्यानेन अर्थप्रस्तवनेन च तत्प्रकाशके भगवद्गीता-शारीरकसूत्रे च उपनिषदिव वेदान्त इति कथ्यते। औपनिषदप्रमाणजन्यस्याद्वैतसिद्धान्तस्य प्रति-पादकस्य शास्त्रस्यैव वेदान्तपदवाच्यत्वमस्ति, तथापि विशिष्टाद्वैतः, शुद्धाद्वैतः, द्वैताद्वैतः, शक्तिविशिष्टाद्वैतः, द्वैतः, अद्वैतश्च वेदान्तनाम्ना समलङ्कृता दृश्यन्ते ।

उपर्युक्तानां सर्वेषां वादानां वेदान्तानां वा आचार्याणां स्वकल्पना-प्रसूतमात्रत्वकथनमनुचितम् । यतो हि सर्वेऽप्येते वेदरूपिण उपजीव्यात् कल्पवृक्षादुद्भूता उपजीवकाः खलु । इमे सर्वे वादाः प्रत्यक्षतया परोक्षतया वा वेदे समुपलब्धाः सन्त्येव। शास्त्रचिन्तनस्य, शास्त्रप्रणयनस्य, शास्त्रार्थस्य च सन्दर्भेषु वादकथा-जल्पकथारूपेण पूर्वपक्षतया सिद्धान्तपक्षतया वा विद्वत्समाजे सर्वेषामेतेषामुत्थापनं सादरं भवति। एतावदेव न, अपितु एतेषां वेदान्तानां तत्तत्सम्प्रदायान्तर्गतेषु मठमन्दिरेषु प्रवचनम्, विद्यालय-विश्वविद्यालयेषु संस्कृतगुरुकुलेषु च अध्ययनमध्यापनं परीक्षा च सञ्चाल्यन्ते ।

## १. विशिष्टाद्वैत-वेदान्तदर्शनम् (रामानुजमतम्)

मतस्यास्यादिसङ्केतो बादरायणकृते ब्रह्मसूत्रे लभ्यते। [१]इदमाश्म-रथ्याचार्यस्य मतमुच्यते । अयमेव मतस्यास्य प्रथम आचार्य इति प्रतीयते । विशिष्टाद्वैतमतस्योल्लेखः श्रुतौ च दृश्यते, यत्र भोक्ता[२]

१. प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः । – ब्रह्मसूत्रम् १।४।६।२०

२. एतज्ज्ञेयं नित्यमेवात्मसंस्थं, नातःपरं वेदितव्यं हि किञ्चित्।
भोक्ता भोग्यं प्रेरितारञ्च मत्वा, सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ॥ – श्वेताश्वतरोपनिषद् १।१२

जीवः, भोग्या प्रकृतिः, प्रेरयिता चेति त्रिधैव ब्रह्मरूपा मन्यन्ते, ईश्वरः चिदचित्पदार्थाविति त्रितयस्वरूपो हरिरेव कथ्यत इत्यर्थः । महर्षिर्जैमिनि-रौडुलोमी चेत्यादयश्च द्वैतवादिनोऽवर्तन्त । इदमेव मतं [३]श्रुतिमन्त्रे च दृश्यते । अयमेव विशिष्टाद्वैतस्य सिद्धान्तोऽस्ति । [४]उद्‌गीथ ओङ्कारो ब्रह्मणः स्वरूपम्, एतस्य त्रीणि रूपाणि विद्यन्त इत्यभिधानं श्रुतिवचनञ्च विशिष्टाद्वैतं प्रतिपादितवदिति केषाञ्च विदुषामिह कथनमाँप्यते । उक्तप्राचीनमतस्याधुनिकः प्रचारकः १०७४ वैक्रमाब्दे जात आचार्यः श्रीरामानुजो वैष्णवसम्प्रदायस्याचार्यो वर्तते । ब्रह्मसूत्रे तच्छ्रीभाष्यं प्रसिद्धमस्ति । वस्तुतो वैष्णवधर्मावलम्बिनामाचार्याणां चतुर्विधाः सम्प्रदाया दृश्यन्ते – १. वैष्णवसम्प्रदायः २. ब्रह्मसम्प्रदायः ३. रुद्रसम्प्रदायः ४. सनकसम्प्रदायश्च । श्री, बिन्दी, लस्करी, चतुर्भुजीति चतस्रः शाखाश्च सम्प्रदायान्तर्गता वर्तन्ते । अद्वैतसम्प्रदायवत् सम्प्रदायेऽस्मिँश्च मूलाधारो भगवान् श्रीनारायणो मन्यते । वैष्णवसम्प्रदायो द्विविधं ब्रह्म निर्विशेषं सविशेषञ्च मन्यते । सदा स्वाभिन्नानां [५]चेतनाचेतनपदार्थानां विशेषणविशिष्टत्वेऽपि परमात्मनोऽद्वैतरूपस्वीकारात् सम्प्रदायस्यास्य मतं सिद्धान्तो वा विशिष्टाद्वैत इति कथ्यते ।

मतेऽस्मिन् मुक्तिसाधनं भगवच्छरणागतिरूपा भक्तिरस्ति चेद् मुक्तावस्थायां गन्तव्यं धाम [६]वैकुण्ठधाम अस्ति ।

---

३. ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्द्धे ।
छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ॥ – कठोपनिषद् १।३।१

४. उद्‌गीथमेतत् परमन्तु ब्रह्म तस्मिन् त्रयं सुप्रतिष्ठाक्षरञ्च । – श्वेताश्वतरोपनिषद् १।७

५. ईश्वरश्चिदचिच्चेति पदार्थत्रितयं हरिः ।
ईश्वरश्चिदिति प्रोक्तो जीवो दृश्यमचित् पुनः ॥

६. श्रीवैकुण्ठमुपेत्य नित्यमजडं तस्मिन् परब्रह्मणः ।
सायुज्यं समवाप्य नन्दति समं तेनैव धन्यः पुमान् ॥

## २. द्वैताद्वैतवेदान्तदर्शनम् (निम्बार्कमतम्)

मतस्यास्य प्रथमाचार्यो निम्बार्कः । तत्कालो वैक्रमाब्दस्य १२१९ मन्यते । इदं मतञ्च भगवतो नारायणादारभ्य सनकादिमाध्यमेन नारदमुनेराचार्यो निम्बार्कोऽवाप्तवानिति प्रोच्यते । अत मतमिदं सनकसम्प्रदायमतमित्युच्यते । द्वैतं सत्यमद्वैतञ्च सत्यमिति सिद्धान्तवानयं सम्प्रदायो द्वैताद्वैतो भेदाभेदवादी वेति कथ्यते । मतेऽस्मिन् ब्रह्म जीवो जगच्चेति त्रिविधाः पदार्था मूलतो मन्यन्ते । मतेऽस्मिन् राधाकृष्णावेवाराध्यौ, ब्रह्म सगुणं निर्गुणञ्च, जीवः चेतनोऽणुर्नित्यश्च[७] । जगज्जडं प्राकृतञ्च मन्यते । विष्णुपदं गोलोकः परमधाम वेति अप्राकृतो मन्यते चेत्तृतीयः कालो मन्यते । मतेऽस्मिन् भगवतो महिमश्रवणं पूजनं रूपभक्तिरनन्यशरणागतिः प्रतिपत्तिरित्यादीनि मुक्तिसाधनानि मन्यन्ते चेत् सालोक्य–सामीप्य–सारूप्य–सायुज्यरूपाः चत्वारो मुक्तिप्रकाराः स्वीक्रियन्ते । अस्मिन् मते च ब्रह्मविदामिव देवयानेनार्चिरादिमार्गेण वा चरमा मुक्तिर्भवतीति कथ्यते । आचार्यो निम्बार्को ब्रह्मसूत्रे वेदान्तपारिजाताख्यं भाष्यं चकार ।

द्वैताद्वैताख्यमिदं निम्बार्कमतञ्च श्रुतिमूलकमस्तीति प्रोच्यते । [८]स तपः कृत्वा आनन्दब्रह्म अजानात् । आनन्दादेव भूतानीमानि जातानि । आनन्दादेव समुत्पद्य जीवन्ति, अन्ते मृत्योरनन्तरमानन्दं हि प्रविशन्ति । पुनरपरो मन्त्रः कथयति– स [९]रसस्वरूपः, रसं प्राप्यैव मनुष्य आनन्दी भवति, यदि विश्वे हृदयाकाशे वा रसो न भवेच्चेत्

---

७. अशरीरो वायुरभ्रं विद्युत् स्तनयित्नुरशरीराण्येतानि तद्यथैतान्यमुष्मादाकाशात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यन्ते । – छान्दोग्योपनिषद् ८।१२।२

८. स तपस्तप्त्वा... आनन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दम्प्रयन्त्यभिसंविशन्ति । – तैत्तिरीयोपनिषद् ३।६।१

९. रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवति । को ह्येवान्यत् कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयति । – तैत्तिरीयोपनिषद् २।१

को जीवेत्, कश्च कर्म कुर्यात् ?, रसस्वरूपमदो ब्रह्मैव आनन्दं प्रयच्छति।

### ३. शुद्धाद्वैतवेदान्तदर्शनम् (वल्लभमतम्)

वल्लभाचार्यस्य जनिकालः प्रायः १५३५ वैक्रमाब्दो मन्यते। स ब्रह्मसूत्रेऽणुभाष्यं विरचय्य शुद्धाद्वैतमतमस्थापयत्। भगवतो रुद्रस्य गुरुपरम्परातो वल्लभाचार्येण ज्ञानस्यास्य प्राप्तिहेतुना शुद्धाद्वैतमतस्य सम्प्रदायोऽयं रुद्रसम्प्रदाय इत्युच्यते।

सम्प्रदायोऽयं मायातीतं शुद्धमद्वितीयञ्च ब्रह्मतत्त्वं स्वीकुरुते। अत एव मतमिदं शुद्धाद्वैतवेदान्तदर्शनमित्युच्यते। अद्वैतवेदान्तस्येव मायोपहितं ब्रह्म अज्ञानोपहितं जीवञ्च मतमिदं नाङ्गीकुरुते। शुद्धाद् ब्रह्मणः शुद्धो जीव एव निःसरतीति स्वीकुरुते। मतेऽस्मिन् जीवोऽणुः कथ्यते, परमात्मनः सेवकश्च। जागतिकः प्रपञ्चोऽसत्यो मिथ्या वा न मत्वा मतमिदमस्य सत्यत्वं स्वीकरोति। ब्रह्मणो जगदभिन्ननिमित्तोपादनत्वं स्वीकृत्य स्वर्णादाभूषणरचनेव अविकृतपरिणामवादो मतेऽस्मिन् स्वीक्रियते। सृष्टिर्भगवतो लीलाविलासमात्रमिति मतमस्य।

मर्यादामार्गः पुष्टिमार्गश्चेति शुद्धाद्वैतमतस्य मार्गद्वयं वर्तते। मर्यादामार्गे वेदादिशास्त्रानुसारिणा कर्मणा ज्ञानेन च मोक्षो भवतीति मतमस्ति चेत् पुष्टिमार्गे भक्तिः शरणागतिश्च मोक्षसाधनतां भजेते। वल्लभाचार्यः श्रीमद्भागवते सुबोधिनीनाम्नीं टीकामकरोत्। प्रस्थानत्रय्याः सारसर्वस्वं श्रीमद्भागवतमहापुराणमस्तीति वल्लभाचार्यमतम्। अस्य मतस्य प्रतिपादनञ्च श्रुतिसिद्धमिति कथ्यते।

ब्रह्मातिरिक्तं किञ्चित् कार्यं कारणञ्च न विद्येते। ब्रह्मसदृशं तदधिकञ्च किञ्चन नान्यं वस्तु विद्यते। विविधाः सर्वश्रेष्ठाश्च ब्रह्मशक्तयः सन्ति। एवमेव ब्रह्मणि ज्ञानं बलं क्रिया (जानाति, इच्छति, यतते), सर्वज्ञता, सर्वेच्छा चेत्यादयो गुणाः स्वाभाविकरूपेण वर्तन्ते।

स्वयं ब्रह्म चराचरसकलजगद्रूपेण विवर्तत इति [10]श्वेताश्वेतरोपनिषदो मन्त्रे व्यक्तो गूढः सिद्धान्तः शुद्धाद्वैतवेदान्तेन स्वीयमतरूपेण स्वीकृतो वर्तते।

[11]अयमात्मा प्रवचनादिपाण्डित्यबलेन प्राप्यते, यस्मिन्ननुग्रहेण स स्वकीयं स्वरूपं प्रकटीकरोति, तेनैव स आत्मा प्राप्तुं शक्यत इत्यादितथ्यप्रतिपादकानि नैकानि श्रुतिवचनानि च शुद्धाद्वैतमतप्रतिपादने समुपलभ्यन्ते।

**४.शक्तिविशिष्टाद्वैतसिद्धान्तः**

मतमिदं वेदान्तसम्प्रदायान्तर्गतं मन्यते । जगद्गुरुणां पङ्क्तौ नाम्नोऽप्रसिद्धावपि मतस्यास्य संस्थापकः प्रचारकश्च श्रीरेणुकाचार्यो वर्तते। नैकासां निगमागमोपनिषदादिश्रुतीनामनुशीलनं विधाय श्रीरेणुकाचार्येण जीवशिवयोरैक्यं प्रतिपादितं वर्तते। शक्तिविशिष्टाद्वैतवादि जीवशिवयोरैक्यं लिङ्गाङ्गसामरस्यं वा तत्त्वमसीति महावाक्यस्यार्थः प्रोच्यते। [12]लिङ्गं तत्पदेन अङ्गं त्वम्पदेन च स्वीकृत्य द्वयोः संयोगोऽसिपदेन साधितोऽस्ति। ब्रह्मसूत्रे श्रीरेणुकाचार्यस्य शक्तिविशिष्टाद्वैतभाष्यं समुपलभ्यते।

**५. अचिन्त्यभेदाभेदसम्प्रदायः**

सम्प्रदायस्यास्य प्रथमाचार्यः चैतन्यमहाप्रभुरस्ति। अयं गौडीयः सम्प्रदायोऽपि प्रोच्यते। ब्रह्मसूत्रेऽस्य सम्प्रदायस्य गोविन्दभाष्यमुपलभ्यते। अस्य प्रणेताचार्यो बलदेवो वर्तते।

---

१०. न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते।
परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च॥ – श्वेताश्वतरोपनिषद् ६।८

११. नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्॥ – मुण्डकोपनिषद् ३।२३

१२. लिङ्गं तत्पदमाख्यातमङ्गं त्वम्पदमीरितम्।
संयोगोऽसि पदं प्रोक्तमनयोरङ्गलिङ्गयोः॥

## ६. माध्वमतम् (द्वैतदर्शनम्)

द्वैतदर्शनस्यास्याचार्यो माध्व आनन्दतीर्थो वा वर्तते । तज्जन्मकालः १२५४ वैक्रमाब्द आसीत् । भगवान् सर्वज्ञः सर्वशक्तिमान् स्वतन्त्रः सर्वेश्वरो विष्णुरेव सर्वोच्चं तत्त्वं सेव्यश्च वर्तत इति सम्प्रदायोऽयं मनुते । माध्वसिद्धान्तोऽत्यन्तं द्वैतवादी वर्तते । मतेऽस्मिन् दृश्यमानो जगत्प्रपञ्चोऽयं सत्यो मन्यते । अयमद्वैतसिद्धान्तस्य सर्वांशतः प्रतिकूलः सिद्धान्तो वर्तते । सम्बन्धेऽस्मिन्नद्वैतवेदान्तदर्शनस्य परिचर्चायां सङ्क्षेपेण तुलनात्मिका समीक्षा विधास्यते ।

दृश्यात्मकस्य मिथ्याप्रपञ्चस्य सत्यत्ववादी माध्वद्वैतसम्प्रदायो जीवजडयोर्भेदं जडेश्वरयोर्भेदं जीवेषु पारस्परिकं भेदं जडेषु पारस्परिकं भेदं जीवेश्वरयोर्भेदञ्चेति पञ्चप्रकारकाणां भेदानां सत्यत्वं स्वीकुरुते । मतेऽस्मिन् जीवोऽणुः चेतनो दासो मायोपहितश्च मन्यते । जीव ईश्वराधीनोऽनादिकालतो बद्धश्च मन्यते ।

सम्प्रदायेऽस्मिन् स्वसुखानुभूतिर्मुक्तिर्मन्यते । ईश्वरस्यानन्तस्य महिम्नो गुणानाञ्चाधारेण अल्पज्ञाज्जीवाद् ईश्वरे भेदो मतोऽस्ति । सालोक्य-साष्ट्र्याद्या मुक्तय एव मतेनानेन स्वीकृताः सन्ति । भगवन्तं सेव्यं स्वात्मानं सेवकञ्च मत्वानेन ज्ञानेनेश्वरे निर्मला भक्तिरेव भगवत्प्राप्तेः परम उपायो मन्यते । भगवति अनन्या भक्तिः, अनुरागः, फलाभिसन्धिराहित्यञ्च मतेऽस्मिन् मुक्तेः परमं साधनं मन्यते चेत् परोपकारः, दीनसेवा, भगवद्भजनम्, तत्कीर्तनामित्यादीनि धर्मरूपेण स्वीक्रियन्ते ।

सम्प्रदायोऽयं प्रत्यक्षमनुमानं शब्दश्चेति प्रमाणत्रयं स्वीकुरुते । नारायणादारभ्य ब्रह्मा, हनुमान् इतिक्रमेण पूर्णप्रज्ञाख्यमध्वेन प्राप्तत्वात् सम्प्रदायोऽयं ब्रह्मसम्प्रदाय इत्युच्यते । आचार्यो मध्वो

ब्रह्मसूत्रे पूर्णप्रज्ञभाष्यं लिलेख।

माध्वसम्प्रदायसन्दर्भे सङ्क्षेपेण चर्चा विहिता। अस्य मतस्य इतोऽपि सङ्क्षेपेण पद्येन वर्णितं वर्तते।[१३]

माध्वद्वैतमतस्य समर्थका महर्षिर्जैमुनिः, महर्षिरौडुलोमी इत्यादीनां भेदाभेदवादिनां नैकेषामाचार्याणामुल्लेख आचार्यबादरायणेन विहितोऽस्ति। एवमेव द्वैतमतस्य प्रतिपादनं श्रुतिषु च प्राप्यते। यथा अर्जितस्य कर्मफलस्य प्रकाशकस्य देहस्योत्कृष्टे हृदयाकाशे प्रविष्टौ [१४]कर्मफलभोक्तारौ छायातपाविव विरुद्धस्वभावौ जीवेश्वरौ स्त इति प्रोच्यते।

तथैव श्रुतिरन्या कथयति– [१५]सुपक्षौ सहवासिनौ सखायौ एकस्मिन् वृक्षे निवसतः। तयोर्मध्ये एकः कर्मफलं भुङ्क्तेऽपरश्चाभुञ्जानः सन्नवतिष्ठते।

**७. अद्वैतवेदान्तः**

द्वैताद्वैतपराणां वेदान्तमतानां सम्प्रदायानाञ्च सामान्यचर्चाया अनन्तरमीदानीमद्वैतवेदान्तस्य सङ्क्षपेण चर्चा सान्दर्भिकीं मन्ये। सर्वान्तेऽद्वैतवेदान्तस्य चर्चायाः तात्पर्यं खलु प्रथमतो भविष्यद्वृत्तिदृष्ट्या तेषां समेषां वादानां मतानां सम्प्रदायानाञ्च पर्यवसानमद्वैतवेदान्ते भवतीति प्रदर्शनायैव, द्वितीयतो द्वैतवादविरुद्धान् शतदूषणीत्यादिग्रन्थान् विरचय्याद्वैतवादं दूषयितुं दुष्प्रयत्नं साधयतां माध्ववादस्य माध्वसम्प्रदायस्य तत्सम्प्रदायाचार्यस्य व्यासराजतीर्थस्य तत्कृतस्य न्यायामृतग्रन्थस्य च सन्दर्भेषु सङ्क्षेपेण

---

१३. श्रीमन्मध्वमते हरिः परतमः सत्यं जगत्तत्त्वतो भेदो जीवगणा हरेरनुचरा नीच्चोच्चभावं गताः।
मुक्तिर्नैजसुखानुभूतिरमला भक्तिश्च तत्साधनमक्षादित्रितयं प्रमाणमखिलाऽऽम्नायैकवेद्यो हरिः॥

१४. ऋतुं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्द्धे।
छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः॥ – कठोपनिषद् १।३।१

१५. द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरेकः विप्पलं स्वाद्वत्यनश्नन्नन्योऽभिचाकशीति॥ – मुण्डकोपनिषद् ३।१।१

चर्चामुपस्थापयितुञ्च वर्तते । एतच्चचर्चाद्वैतवेदान्तस्य सङ्क्षेपेण चर्चानन्तरं विधास्यते ।

अद्वैतवेदान्तस्य स्रोतोऽन्वेषणक्रमे विश्वस्य प्राचीनतमो ग्रन्थ ऋग्वेदोऽनुशीलनीयो भवति । तदन्तर्गते नासदीयसूक्ते प्रोक्तम्– तस्मिन् महाप्रलये नासदासीद् न च [१६]सत् । तदा नहि रजस्संज्ञका अधोलोका आसन्, न तु व्योमसंज्ञका ऊर्ध्वलोकाः । आवरक आवर्यश्च नास्ताम् । सुखदुःखे नावर्तेताम् । अवान्तरे प्रलये इव जलञ्च नासीत् । महाप्रलये तस्मिन् सदतिरिक्तं किञ्चिन्नासीत्, स्थूलं सूक्ष्मं प्रधानं कार्यञ्च नासन् ।

तदा [१७]मृत्युर्नासीत्, अमृतञ्च । रात्रिर्दिनं मास ऋतुः संवत्सर इत्यादयो न केचन आसन् । तर्हि किम्, शून्यमासीत् ? न । प्राणनकर्तासीत् । सकलं प्राणिसमूहमात्मसात्कृत्य वायुं विना प्राणस्यापि प्राणोऽद्वितीयं परब्रह्म प्रतिष्ठितमासीत् । तदा स्वधया मायया वा युक्तं केवलं ब्रह्मासीत् । महाप्रलये भूतभौतिकयोरुभयोरभावोऽवर्तत । केवलं ब्रह्माश्रिता माया ब्रह्मणि लीनावस्थायामासीत् ।

महाप्रलये भूतभौतिकः प्रपञ्चः, आभूतसम्प्लवोऽमरणधर्मा प्राणसंयुक्तो जीवः, प्राणापहारका दिनरात्रिमृत्युकालाः, तज्ज्ञानञ्च नासन् । तदा केवलं जीवनसूचकं प्राणरहितं स्वधासंज्ञकमायान्तर्गर्भितमद्वितीयमेकं ब्रह्मासीदित्यभिप्रायः । सृष्टेः प्राग् महाप्रलये [१८]तमोमात्रमासीत् । जगत्कारणेन तमसा नामरूपात्मकः प्रपञ्च आच्छन्न आसीत् । स्रष्टव्यः संसारः तेनैवाज्ञानान्धकारेण

---

१६. नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमा परो यत् ।
किमावरीवः कुह कस्य शर्मन्नम्भः किमासीद् गहनं गभीरम् ॥ – नासदीयसूक्तम् १

१७. न मृत्युरासीदमृतन्न तर्हि न रात्र्या अह्न आसीत्प्रकेतः ।
आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनास ॥ – नासदीयसूक्तम् २

१८. तम आसीत्तमसा गूळ्हमग्रेऽप्रकेतं सलिलं सर्वमा इदम् ।
तुच्छ्येनाभ्वपिहितं यदासीत्तपसस्तन्महिनाजायतैकम् ॥ – नासदीयसूक्तम् ३

समाच्छादितोऽवर्तत । दृश्यमानं सकलमिदं जगत् सलिलम्, कारणाभिन्नम्, अविभागापन्नम्, अज्ञायमानं वासीत् ।

ब्रह्माधिष्ठात्र्या प्रकृत्यैकीभूतः कार्यात्मकः प्रपञ्चः क्षीरैक्यापन्नो नीरसमो दुर्विज्ञेय आसीत्, तमोरूपेणासत्कल्पेन समावृतोऽवर्तत । तेनैव तमसा सर्वथैकीभूतः कार्यात्मकः प्रपञ्च आसीत् । स स्रष्टव्यपर्यालोचनरूपस्य परमेश्वरस्य तपोरूपाद् भुतमाहात्म्येनाभिव्यक्तो बभूव । क्षीरेणैकीभूतं नीरतुल्यं नामरूपात्मकं जगत्, यत् तमस्संज्ञयानिर्वचनीयया मायया समाच्छादितं तयैकीभूतञ्चासीत्, परब्रह्मणः स्रष्टव्यपर्यालोचनरूपस्य तपसोऽमोघप्रभावेणाभिव्यक्तिं प्राप । [१९]अतीतसृष्टावकृतार्थानां जीवानां सर्जनाय परमात्मा सिसुक्षुः सन् पर्यालोचनरूपं तपश्चकार । सा सिसृक्षा परमात्मनो मायारूपे मनसि समुत्पन्ना । अन्तःकरणनिष्ठानां मायाविलीनानां जीवानां पूर्वकर्मवासनानां योगेन परमात्मनि सिसृक्षा समुद्भूता । जीवानां पूर्वानुष्ठितानि कर्माणि सर्गारम्भे यदा परिपक्वानि भवन्ति, फलोन्मुखानि भवन्ति, तदैव कर्माध्यक्षे परमेश्वरे [२०]सिसृक्षा समुद्भवति । क्रान्तदर्शिनः त्रिकालज्ञा दिव्यदर्शिनो मनीषिणो जीवानां पूर्वानुष्ठितकर्मसमुहमेव सर्गहेतुत्वेन निश्चितवन्तः । वस्तुतो जीवकर्माणि मायासन्निहितानि भवन्ति । ईश्वरेच्छा च मायासन्निहिता भवति । ब्रह्म तु तस्या मायाया असङ्गाश्रयमात्रं भवति । मायायोगेन ब्रह्मणोऽव्याकृतसंज्ञा भवति । सङ्क्षेपेणोच्यमाने ईश्वरकर्तृकपर्यालोचनरूपस्य तपसः सर्जनेच्छारूपा कामना, मायोपाधिकानां महेश्वरापन्नानामकृतार्थानां

---

१९. कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत् ।
सतो बन्धुमसति निरविन्दन् हृदि प्रतीष्या कवयो मनीषा ॥ – नासदीयसूक्तम् ४

२०. सोऽकामयत बहु स्यां प्रजायेयेति । स तपोऽतप्यत स तपस्तप्त्वेदं सर्वमसृजत यदिदं किञ्च ॥
– तैत्तिरीयोपनिषद् ८।६

जीवानां मनोनिष्ठा मनीषिमनोगोचरा सर्जनेच्छायाः फलोन्मुखी अभुक्तावस्था च सा।

अविद्या, कामः, कर्माणि च जगतो [२१]मूलतत्त्वानि । यथा सूर्योदयसमनन्तरं हि तत्किरणा निमेषमात्रकालेन सर्वत्र प्रसरन्ति तथैव कामकर्माविद्यारश्मयो युगपत् सकलान् कार्यवर्गान् सृजन्ति। सृष्टिरियं केषाञ्चन कृते वक्रतापन्ना, केषाञ्चन कृते अधःस्था, केषाञ्चन च ऊर्ध्वस्था न भूत्वा युगपत् सर्वत्र व्याप्ता वर्तते। सृष्टेः क्रमनिर्धारणं विद्युत्प्रकाशस्य क्रमनिर्धारणमिव दुर्लक्ष्यमस्ति । दृश्यमानेयं सृष्टिर्युगपन्निष्पनेति भावः ।

सृष्टिकार्ये कश्चन भावो रेतोधा, बीजभूतानां कर्मणां कर्तारो भोक्तारो जीवा आसन्, आकाशादयः केचन महद्भावाश्च भोग्या आसन् । वस्तुतो मायायुक्तः परमेश्वरः सकलं जगत् सृष्ट्वा तदन्तः प्रविश्य भोक्तृभोग्यान् विभनक्ति । भोक्ता जीवो वर्तते, भोग्यश्च स्वधान्नं वा । भोक्ता उत्कृष्टो भोग्यश्च निकृष्टः । भोक्तुर्जीवस्य कृते हि भोग्यानामाकाशादिपदार्थानां रचना विहिता । एतत्सर्जको मायासहितः परमेश्वरः, तेनैव च सृष्टेस्या व्यवहारः चलति। नासदासीत् (१), कामस्तदग्रे (४), मनसो रेतः (४) इत्येतन्मन्त्रसिद्धायाः काम–कर्माविद्याहेतुसमुद्भूताविद्योपादानायाः कामकर्मनिमित्तायाः सृष्टेः शतपत्रवेधनवद् आकाशादिक्रमसापेक्षत्वेऽपि सूर्योदयानन्तरं युगपद् रश्मिविततन्यायेन क्रमदुर्लक्ष्यता दृश्यते । काम–कर्माविद्यावृद्धः कर्तृभोक्तृरूपो जीवो भोग्यरूपाज्जगत उत्कृष्टो वर्तते चेत् कर्मफलदातुः परमात्मनो निकृष्टोऽस्ति ।

दृष्टिगोचरीभूतेयं सृष्टिः क्रियाकारकफलात्मिका, नामरूप-

---

२१. **तिरश्चीनो विततो रश्मिरेषामधः स्विदासीदुपरि स्विदासीत् ।**
**रेतोधा आसन्महिमा आसन्त्स्वधा अवस्तात् प्रयतिः परस्तात् ॥ – नासदीयसूक्तम् ५**

कर्मात्मिका, अग्निसोमसूर्यात्मिका, वाङ्मनःप्राणात्मिका, अन्नान्नादात्मिका, भूतभौतिकी, प्रकृतिप्राकृतरूपा, सुखदुःख-मोहात्मिका, सत्त्वरजस्तमोगुणात्मिका चेति विविधरूपा वर्तते । सृष्टिरियं कस्मादुपानाद् निमित्ताच्च समुद्भूता ? तथ्यमिदं परमार्थतः [२२]को वेत्ति ? विषयेऽस्मिन् कः स्पष्टं वक्तुं शक्नोति ? सन्दर्भेऽस्मिन् विचारिते सति भूतभौतिकस्य प्रपञ्चस्य सर्जनानन्तरं हि मन इन्द्रियाणि च समुद्भूतानि । तदानीं तैर्मूलकारणस्य वेदनमसम्भवं खलु । अतः सृष्टेर्मूलतत्त्वं दुर्विज्ञेयमस्तीति प्रमाणीकृतं भवति । यतो हि यज्ज्ञानविषयीक्रियते, तद्दृश्यं भवति, जडं भवति, विकारि भवति । यच्च कारणत्वेनानुमीयते ज्ञायते वा, तदपि मिथ्या स्यात् । एवम्प्रकारेण विचारिते सति कार्यकारणकल्पनायाः प्रकाशकं सर्वाधिष्ठानं स्वयंप्रकाशं प्रत्यग्ब्रह्म कथं ज्ञानविषयीकर्तुं पार्यते ? न पार्यत इत्याशयः ।

अवाङ्मनसगोचरं परब्रह्म एव अनिर्वचनीयमायायोगेन जगदभिन्ननिमित्तोपादनत्वेन स्वीकृतमस्तीति सारांशतो बुध्यते । एवं स्वीकृतस्यापि तस्य इदमित्थमिति निश्चित्य कथनं कार्योपाधिकब्रह्मादिदेवशिरोमणीनां कृते च दुष्करं दृश्यते । जगत्सर्जनस्य दुर्विज्ञेयतेव सृष्टस्य जगतो दुर्धरता दुर्विज्ञेयता च वर्तेत इति तथ्यं नासदीयसूक्तस्य चरममन्त्राद् ध्वन्यते । गिरिनदीसमुद्रादिरूपेण विविधा विचित्रा च [२३]सृष्टिर्यस्मादुपदानात्मकात् परमात्मनः समुत्पन्ना, असौ परमात्मना ध्रियते न वेति विचारो नावश्यकः । यतो हि, परमात्मान ऋतेऽन्यो धर्तुं न शक्नोति । अस्याः सृष्टेरध्यक्षः

२२. को अद्धा वेद क इह प्र वोचत्कुत आजाता कुत इयं विसृष्टिः ।
अर्वाग्देदा अस्य विसर्जनेनाथा को वेद यत आबभूव ॥ – नासदीयसूक्तम् ६

२३. इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न ।
यो अस्याध्यक्षः परमे व्योमन्त्सो अङ्ग वेद यदि वा न वेद ॥ – नासदीयसूक्तम् ७

परमात्मा, स च परमे व्योमनि आस्ते । एतच्च परमात्मन ऋते कश्चन ज्ञातुं न शक्नोति, परमात्मैव च ज्ञातुं न शक्नोति वा ? अत्र परमपदेन उत्कृष्टता सत्यता च लक्ष्येते, व्योमपदेन च आकाशम्, आकाशवन्निर्मलः स्वप्रकाशश्चात्मा च सूच्येते । विपूर्वकात्तर्पणार्थकादवधातोर्व्योमशब्दो निष्पद्यते । एतस्यां दशायां व्योमशब्दस्यार्थो भवति विशेषरूपेण तृप्तो निरतिशयो ज्ञानस्वरूप आत्मा । गत्यर्थकादवधातोर्व्योमशब्दस्य निष्पन्नता स्वीक्रियते चेत्तु तदर्थो भवति विशेषेण व्याप्तेभ्यो देशकालवस्तुभ्योऽपरिच्छिन्न आत्मा। ज्ञानार्थकत्वेनास्य स्वीकरणे विशिष्टो ज्ञानरूप आत्मा तदर्थो भवति, यः स्वात्मन्येव [२४]प्रतिष्ठितोऽस्ति। वस्तुतः स्वस्वरूपेऽपि न, स्वस्मिन् [२५]प्रतिष्ठेयप्रतिष्ठापकभाव आधाराधेयभावो वा न।

एवंरीत्या जगतोऽध्यक्षस्य परमव्योमस्थितेर्भावोऽयमेव । इत्थं देशकालादित्रिविधपरिच्छेदशून्यः परमात्मा सृष्टेर्मूलत्वेन स्वात्मानं वेत्ति न वा ? स्वात्मन्येव अज्ञानकल्पितं प्रपञ्चं वेत्ति न वेति 'यदि वा न वेद' इति सूक्तांशस्याभिप्रायः। स्वदृष्टौ सृष्टेरत्यन्तमभावोऽस्ति चेत् कं जानीयात् ? सृष्टेर्वेत्ता परमात्मन ऋते नहि कश्चन। एवं सृष्टिपूर्वस्य वर्णनपूर्वकं समग्रायाः सृष्टेरभिन्ननिमित्तोपादानत्वेन श्रुत्या ब्रह्मैव निर्दिष्टं वर्तते। तस्यैव च अकल्पनीयस्य परब्रह्मपरमात्मनो विश्वातीतं महिमानं रहस्यञ्च केवलमौपनिषदज्ञानसंवलितमद्वैतवेदान्तः खलु उज्जृम्भयितुमुद्घाटयितुञ्च क्षमते, न तु वेदप्रमाणशून्यानि स्वज्ञानकल्पितानि दर्शनानि वेदान्तवचनानि च।

[२६]ब्रह्मसूत्रेण च प्रतिपादितं यत् परब्रह्मपरमात्मैव जगतो निमित्तमुपादानञ्चेति । यतो हि स निमित्तत्वेनोपादानत्वेन च न मन्यते

---

२४. स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि। – छान्दोग्योपनिषद् ७।२४।१

२५. यदि वा न महिम्नीति। – छान्दोग्योपनिषद् ७।२४।१

२६. जन्माद्यस्य यतः। – ब्रह्मसूत्रम् १।१।१।२

चेत् [२७]प्रतिज्ञावाक्ये [२८]श्रुतिवाक्ये च विरोध आपततीति शाङ्करभाष्ये भामतीटीकायाञ्चोल्लिखितं वर्तते ।

सृष्टेः कर्तृरूपेण प्रधानपरमाणू अल्पशक्तिमदन्यं किञ्चन वस्तु वा भवितुं न शक्नुवन्ति । यतो हि [२९]श्रुतिरीक्षण[३०]कामनपूर्विकां सृष्टिं वर्णयति, या सृष्टिः सर्वनियन्तुः सर्वात्मकाद्विभोः परमशक्तिसम्पन्नात् चिदात्मनः परब्रह्मण एव सम्भवति ।

अद्वैतवेदान्तस्योद्भवो नासदीयसूक्तम्, पुरुषसूक्तम्, सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् (छा.उ.६।२।१), सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधिकला मुहूर्तः काष्ठाश्च (तै.आ.१०।१।२), सूर्याचन्द्रमसौ (ऋग्वेदः), दिव्यो ह्यमूर्तः ....विश्वस्य धारिणी (मु.उ.२।१।२।३), असद्वा इदमग्र आसीत्, ततो वै सदजायत (तै.उ.२।७) सत्यं ज्ञानमनन्तं ब्रह्म (तं.उ.२।१), तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः (तै.उ.२।१), तदात्मानं स्वयमकुरुत (तै.उ.२।७) इत्यादिप्रमाणेभ्यो जातोऽस्ति ।

महाप्रलये नहि [३१]सदासीत्, न चासत् परन्तु मायासंज्ञकमनिर्वचनीयं तमोमात्रमासीत् । तत्तमः स्वतः सन्नासीत्, सत्संज्ञकस्य परमात्मनः संसर्गेणैव तत्सत्ता स्वीकृतासीत् परन्तु नासदीयसूक्तेन प्रकारान्तरेण तत्सत्ता निराकृतास्ति ।

---

२७. प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् । – ब्रह्मसूत्रम् १।४।७।२३
न मुख्ये सम्भवत्यर्थे जघन्या वृत्तिरिष्यते ।
न चानुमानिकं युक्तमागमेनापबाधितम् ॥
सर्वे हि तावद्वेदान्ता पौर्वापर्येण वीक्षिताः ।
ऐकान्तिकाद्वैतपरता द्वैतमात्रनिषेधतः ॥ – भामती

२८. यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति ।
– तैत्तिरीयोपनिषद् ३।१

२९. तदैक्षत बहुस्यां प्रजाययेति । – छान्दोग्योपनिषद् ६।२,४

३०. स ईक्षाञ्चक्रे, स प्राणमसृत । – प्रश्नोपनिषद् ६।३,४

३१. नासदासीन्नो सदासीत्तदानीं किन्त्वभूत्तमः ।
सद्योगात्तमसः सत्त्वं न स्वतस्तन्निषेधनात् । – पञ्चदशी २।५०

महाप्रलये सकलेयं सृष्टिः तमोभूता [३२]तमसि लीना वावर्तत। गुणवृत्या प्रकृतिर्गृह्यते तमश्शब्देन। यथा तमसि किञ्चिदपि वस्तु न प्रकाशते, तथैव महाप्रलये प्रपञ्चः सूक्ष्मरूपेण मायायां लीन आसीत्, माया च ब्रह्मात्मरूपेण अव्याकृतावर्तत। सा प्रत्यक्षादिना केनापि प्रमाणेन ज्ञानविषया नासीत्। [३३]श्रुत्यनुसारेण महाप्रलयकालीनं जगदव्याकृतसंज्ञकं सद्रूपं मन्यते। सच्छब्दो ब्रह्मवाचकः। तदा जगद् ब्रह्मात्मरूपेणाव्यक्तरूपेण वावर्तत।

दृश्यमानेयं सृष्टिः कथमुत्पन्नेति विषयेऽद्वैतवेदान्तदृष्ट्या विवेचनसन्दर्भे सूतसंहितायाः कासाञ्चन सन्दर्भसामग्रीणामत्र प्रस्तवनं ज्ञानवर्धकं भवतीति मन्ये।

श्रुतिप्रमाणं श्रुतिसिद्धमायाशक्तिञ्चाधृत्याद्वितीयाद् ब्रह्मण एव सृष्टिः सम्भवतीति ज्ञायते। [३४]जगत्स्रष्टृ यदद्वितीयं ब्रह्म वर्तते, तत् सृष्टेः पूर्वं महाप्रलये सत्त्वरजस्तमोगुणमय्या स्वमायया एकीभूय सन्तिष्ठते। वेदान्तसम्मता माया साङ्ख्याभिमता प्रकृतिरिव नहि स्वतन्त्रा। वेदान्तप्रोक्ता माया परमेश्वराश्रिता शक्तिर्वर्तते। महाप्रलये मायाकार्यरूपो भूतभौतिकादिप्रपञ्चो मायालीनो भवति। तदानीं महेश्वरः पूर्वकल्पीय-मायामय-वासनयान्वीयावशिष्ट आस्ते।

त्रिगुणात्मिका [३५]माया प्रकृतिर्वा प्रलीनावस्थायां क्षोभहेतोरभाव इव भवति। अतोऽक्षुब्धा सती असत्प्राया आस्ते। मायाश्रयो महेश्वरः

---

३२. आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्।
अप्रतर्क्यमनिर्देश्यं प्रसुप्तमिव सर्वतः॥ – मनुस्मृतिः १।५

३३. क. तद्धेदं तर्ह्यव्याकृतमासीत्। – बृहदारण्यकोपनिषद् १।४।७
ख. सदेव सोम्येदमग्र आसीत्। – छान्दोग्योपनिषद् ६।२।१

३४. ईश्वरो जगतः कर्ता मायया स्वीयया पुरा।
अभेदेन स्थितः पूर्वकल्पवासनयाऽन्वितः। – सूतसंहिता ४ यज्ञ. सूतगीता ४–१

३५. कालकर्मानुगुण्येन स्वाभिन्नस्वीयमायया।
अभिन्नोऽपि तथा स्वस्य भेदं कल्पयति प्रभुः॥ – सूतसंहिता ४ यज्ञ. सूतगीता ४–२

प्राणिनां पुण्यपापात्मकानां कर्मणां फलरूपयोः सुखदुःखयोरुपभोगार्थं सृष्टये प्रवर्तते । पूर्वकल्पीयानां प्राणिनामभुक्तानि शुभाशुभकर्माणि यदा तु कालवशेन परिपक्वानि जायन्ते, तदा स्वरूपतोऽभिन्नया स्वसम्बन्धिन्या मायया सहैकीभूतोऽपि परमेश्वर तयैव मायया स्वभेदं कल्पयति । इदं भेदकल्पनञ्च तयैव [३६]माययाध्यासिक-सम्बन्धयुत-परमेश्वरकृतं वर्तते । अन्यथासङ्गेनोदासीनेन कूटस्थेन चिन्मात्रेण निरुपाधिकेन परमेश्वरेण भेदकल्पनादि कथं सम्भवेत् ? सर्वथा न सम्भवति ।

एवंस्वभेदस्यपरिकल्पकोऽपिपरमेश्वरःस्वयमेव। [३७]पराशक्तिरूपो मायासम्बद्ध-सत्त्वादिगुणजात-पूर्वकल्पीय-वासनासमन्वितो मायोपहितः परमेश्वरो यथापूर्वकल्पमीक्षणकर्ता[३८] सन् स्रष्टव्य-जगत्पर्यालोचनरूपमीक्षणं करोतीति श्रुतिर्निगदति । परमेश्वरो मायायोगेन स्वस्मिन् बहुत्वमाधातुमीक्षणं करोति ।

एवंरीत्या [३९]ईक्षणावस्थायां स्वशक्त्या युक्तः परमात्मा प्राणिनां पूर्वानुष्ठितानामभुक्तानां शुभाशुभकर्मणां भोगप्रवर्तनाय सर्जनं प्रारभत । तत्सञ्चालनाय प्रविभक्तैर्मायागुणोपाधिभिर्विष्णु-ब्रह्म-रुद्रानसृजत। तेभ्यः खलु ब्रह्म-विष्णु-रुद्रेभ्यः सृष्टिस्थितिलयानामनन्ता शृङ्खला सञ्चलति । तस्मिन् देवत्रये सकलायां सृष्टौ च परमात्मा अन्तर्यामिरूपेण प्रविष्टोऽस्तीति वचनं [४०]श्रुतिषु समवाप्यते ।

---

३६. इन्द्रोमायाभिः पुरुरूप इयते युक्ता ह्यस्यः हरयः शता दशेति । – बृहदारण्यकोपनिषद् ४।५।१९

३७. पुनः पूर्वेक्षणोत्पन्नवासनाबलतोऽनघाः ।
ईक्षिता पूर्ववद्भूता स्वशक्त्या परयायुतः । – सूतसंहिता ४ यज्ञ. सूतगीता ४–४

३८. तदैक्षत बहु स्यां प्रजायेय । – छान्दोग्योपनिषद् ६।२।४

३९. मायाया गुणभेदेन रुद्रं विष्णुं पितामहम् ।
सृष्ट्वाऽनुप्राविशत्तेषामन्तर्यामितया हरः ॥ – सूतसंहिता ४ यज्ञ. सूतगीता ४,५

४०. क. तत्सृष्ट्वा तदेवानुप्राविशत् । – तैत्तिरीयोपनिषद् २।६।१
ख. यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त अन्तर्याम्यमृतः । – बृहदारण्यकोपनिषद् ३।७।३

परन्तु सृष्टेः पूर्वं लयावस्थायामसदेवासीत् किमिति सन्देहः समुद्भवति। यतो हि प्रकारान्तरेण श्रुतिरसतः खलु सदुत्पत्तिं कथयति। तत्सदेवात्मेति उत्तरवचनेन श्रुतिर्वदति । [४१]असतः कथमुत्पद्यत इति आक्षेपवचनेन च अव्याकृतसंज्ञकस्यासतो जगत्कारणत्वं मन्तव्यम्, न तु बन्ध्यापुत्रस्येव असतः । एतत्तथ्यं द्रढयन्ती अपरा श्रुतिर्निगदति। सृष्टिः पूर्वमसदिव अप्रकटीभूतसदासीत्, तस्मादेव सृष्टिर्जाता ।

काश्चन श्रुतयोऽसन्नामकादव्याकृताद् नामरूपात्मकस्य प्रपञ्चस्य अभिव्यक्तिर्जातेति लाक्षणिकरूपेण व्याहरन्ति चेत् काश्चन अन्याः [४२]श्रुतयोऽसतः कथं सज्जायेतेति पृच्छां प्रकटयन्ति । एवंरीत्यात्र नासदीयसूक्ते सूतसंहितायाञ्च निर्दिष्टः सृष्टिक्रमः सङ्केतितः, अन्यश्च सृष्टिसन्दर्भः समुल्लेखिष्यते ।

महाप्रलयस्य अन्ते [४३]महासृष्ट्यादौ वा स्वतःसिद्धात् स्वयंप्रकाशादात्मनोऽतिरिक्तं सत्, असत्, सदसद्विलक्षणञ्च किञ्चनानिर्वचनीयं वस्तु नासीत् । सदसद्विलक्षणं तत्त्वमेव जगत्कारणसहकारित्वेन वेदान्तेऽभिप्रेतमस्ति। तदेव तत्त्वमद्वैतवेदान्त-प्रसिद्धं वक्ष्यमाणं तमः, माया, अविद्या, अज्ञानं वा वर्तते। तत्त्वमेतद् ब्रह्मतुल्यं निर्वाच्यसत्यं न, न च शशशृङ्गतुल्यं निरुपाख्यमसत् । तदिन्द्रियगोचरकार्यकोटेः सद् इन्द्रियागोचरकार्यकोटेरसच्च न ।

तत्तत्वमबाध्यं सद् बाध्यो बन्ध्यापुत्रादिरिव च नास्ति । अतः परस्परविलक्षणयोर्बन्ध्यातत्पुत्रयोरिव तत्सहस्थितिर्न सम्भवति । प्रतीतिगोचराणामर्थक्रियाकारिणां बाधयोग्यानां घटपटादिपदार्थानाञ्च प्रातिभासिकत्वस्यासत्त्वस्य वा स्वीकारे रज्जु-रज्जुसर्पयोरिव

---

४१. कथमसतः सज्जायेत ? – छान्दोग्योपनिषद् ६।२।२

४२. तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याकृतासौ नामायमिदं रूप इति।
– बृहदारण्यकोपनिषद् १।४।७

४३. असद्वा इदमग्र आसीत्, ततो वै सदजायत। तदात्मानं स्वयमकुरुत। – तैत्तिरीयोपनिषद् २।७

सहावस्थानञ्च सम्भवति परन्तु उभयोः तादात्म्यन्तु न सिद्ध्यति। तादात्म्यसिद्धये जगत्कारणरूपेण सदाश्रितानिर्वचनीया माया मान्यास्ति।

यथा घटोत्पादिनीं शक्तिं विना केवलं मृदो घटोत्पत्तिर्न सम्भवति, दाहशक्तिं विना अङ्गारो दग्धुं न शक्नोति, अज्ञानं विना रज्जौ सर्पादिर्भानं न सम्भवति, तथैव मायाशक्तिं विना असङ्गात् चिदात्मनः प्रपञ्चोत्पत्तिर्न सम्भवति। रज्जु-रज्जुसर्पयोर्मध्यवर्ति रज्ज्वाश्रितमज्ञानमिव ब्रह्माश्रिता प्रपञ्चोपादिनी शक्तिरस्तीति अद्वैतवेदान्तसिद्धान्तः।

वस्तुतः सद् असन्न, असच्च सन्न। उभावेतौ परस्परविलक्षणौ। प्रपञ्चोपादिनी शक्तिरुभयविलक्षणा। तमोगुणविशिष्टासौ माया प्रपञ्चोपादाने परब्रह्मण उपादानकारणस्य सहायिका भावरूपा शक्तिर्वर्तते चेत् सत्त्वगुणविशिष्टा माया परब्रह्मणो निमित्तकारणस्य सहायिका शक्तिरस्ति। एवंरीत्या परब्रह्मणो भावरूपशक्तित्वेन माया असन्नास्ति चेद् ब्रह्मज्ञानानन्तरमस्या बाध्यत्वेन परमभावात्मिका सद्रूपा च न। अत एव [४४]श्रुतिस्मृतयो माया-तत्कार्ययोरसद्रूपत्वं स्वीकुर्वन्ति।

एवं ब्रह्मणः प्रपञ्चोपादिनी शक्तिर्माया-तत्कार्यात्मकः प्रपञ्चश्च सदसद्रूपौ भावाभावरूपौ वानिर्वचनीयौ स्तः। एतयोर्द्वयोरेव तादात्म्यं भवति। शास्त्रैर्मायाया सदसद्विलक्षण-त्वेनानिर्वाच्यत्वं मतमस्ति। यथास्निग्धमृदि घटोत्पादिन्याः शक्तेरसत्वाद् घटोत्पत्तिर्नहि सम्भवति। तथैव मायाविरहितादसङ्गाद्ब्रह्मणः प्रपञ्चोत्पत्तिर्न सम्भवति। रज्ज्वज्ञानमेव रज्जुसर्पोपादानम्, न तु

---

४४. क. नासतो विद्यते भावो नाभावो विद्यते सतः। – गीता २।१६
ख. असतो मा सद्गमयः। – बृहदारण्यकोपनिषद् १।३।२८

रज्जुमात्रम् । यतो हि विदिताया रज्ज्वा रज्जुसर्पोत्पत्तिर्न सम्भवति । तथैव शुद्धात् सतः प्रपञ्चोत्पत्तिश्च न सम्भवति ।

श्रुतिषु मायायाः सत्त्वेन, असत्त्वेन, सदसत्त्वेन च कोटित्रयेणाभिधानं वर्तते । क्वचित् सत्, क्वचिदसत्, क्वचित् सदसद्भिन्ना, अभिन्ना, उभया, सभागा, निर्भागा, उभयरूपा, नवकोटिविलक्षणा च माया मन्यते । माया क्वचिद् अनाद्यविद्या, सदसद्विलक्षणानिर्वाच्या च मन्यते ।

[४५]वेदान्ते माया जगच्च न सत्, न असत्, न सदसत्, न भिन्ना, नाभिन्ना, न भिन्नाभिन्ना, न सभागा, न निर्भागा, न च सभागनिर्भागोभया वर्तते । समग्रतोऽद्वैतवेदान्ते मायाष्टादशप्रकारिकाभिधीयते । १. सत्, २. असत्, ३. सदसत्, ४. न सत्, ५. नासत्, ६. न सदसत्, ७. सादि, ८. अनादि, ९. साद्यनादि, १०. न सादि, ११. नानादि, १२. न साद्यनादि, १३. सावयवा, १४. निरवयवा, १५. सावयवनिरवयवा, १६. न सावयवा, १७. न निरवयवा, १८. न सावयवनिरवयवा चेति । एवंरीत्या परस्परविरुद्धतयाष्टादशप्रकारेण मायाया निरूपणं क्रियते । अत एव मायानिर्वचनीया सिद्धेति प्रोच्यते ।

यथा [४६]जगतः सर्जनं दुर्विज्ञेयमस्ति, तथैव जगद् दुर्धरमपि । यस्मादुपादानरूपात् परमात्मनो जगदुत्पद्यते, स एव परमात्मा एतद्धारयति । नान्यः कश्चन एतद्धारयितुं शक्नोति । एवं जगतोऽभिन्ननिमित्तोपादानकारणं परमात्मा वर्तते, एतद्धारकश्च स एव । परमात्मैव जगत उपादानकारणं निमित्तकारणञ्चेति [४७]ब्रह्मसूत्रे

४५. क. अव्यक्तनाम्नी परमेशशक्तिरनाद्यविद्यात्रिगुणात्मिकापरा ।
कार्यानुमेया सुधियैव माया यया जगत्सर्वमिदम्प्रसूयते ॥ – विवेकचूडामणि ११०
ख. सन्नाप्यसन्नाप्युभयात्मिका नो भिन्नाप्यभिन्नाप्युभयात्मिका नो ।
साङ्गाप्यनङ्गाप्युभयात्मिकानो महाद्भूतानिर्वचनीयरूपा ॥ – विवेकचूडामणि १११

४६. ऋग्वेदसायणभाष्यम् ।

४७. प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् । – ब्रह्मसूत्रम् १।४।२३

च निर्दिष्टमस्ति ।

सृष्टिसन्दर्भे केषाञ्चन दर्शनानां सम्प्रदायानामद्वैतवेदान्तातिरिक्तानां वेदान्तानाञ्च धारणा भ्रान्ता दृश्यते, या सनातन–वैदिक–सिद्धान्तप्रतिकूलानुभूयते । वैदिकसिद्धान्तानुसारेण [४८]परमात्मनः सकाशादेव सकला सृष्टिर्भवति, परमात्मनि तिष्ठति, तत्रैव लयङ्गच्छति च । भ्रान्तदर्शनमतेषु प्रथमं पूर्वमीमांसाया विषये विचार्यते । उत्तरमीमांसेव पूर्वमीमांसापि श्रौतप्रमाणं सर्वोपरि मन्यते परन्तु महाप्रलयं न मन्यते । न कदाचिदनीदृशं जगत्, जगतोऽसत्त्वं कदापि नासीद्वेति मीमांसादर्शनं स्वीकरोति । खण्डप्रलयमेतन्मन्यते । दर्शनमेतद् जगत्स्रष्टृत्वेन ईश्वरस्य ब्रह्मणो वा अङ्गीकारेण 'यतो वा इमानि' इत्यादिश्रुतिप्रमाणस्य स्वीकरणमावश्यकं न मन्यते । साङ्ख्ययोगौ त्रिगुणात्मकं प्रधानमेव कार्यप्रपञ्चस्योपादानं मन्येते । सुखदुःखयोर्मोहात्मके प्रपञ्चे चानुगतेभ्यः सत्त्वरजस्तमोभ्य एतत्सिद्ध्यति । यतो हि गुणत्रयस्य साम्यावस्था प्रकृतिरेव महाप्रलये विद्यमाना भवति । अस्य फलबलकल्प्यतथ्यस्यानुसारेण साङ्ख्ययोगावानुमानिकं त्रिगुणात्मकं प्रधानं प्रपञ्चोपादानं मन्यते । पूर्वं विद्यमानेन कारणव्यापारेणाभिव्यक्तिं मन्यमानस्य परिणामवादिनः साङ्ख्यस्य मतमनुचितमिति कथयन्तौ वैशेषिकनैयायिकावप्तेजोवायुपृथिवीनां परमाणुभिरीश्वेच्छायाः, कालस्य, जीवानां परिपक्वफलोन्मुखकर्मणां योगेनैव भूतचतुष्टयात्मकस्य प्रपञ्चस्यारम्भो भवतीति मन्येते । कार्योत्पत्तेः पूर्वं कारणे कार्यसत्त्वमेतौ नाङ्गीकुरुतः । दिक्कालमनोनभःपरमाणूनामनात्मपदार्थत्वेऽपि एते महाप्रलये च स्वरूपतः स्थास्यन्तीति स्वीकुरुतः । आंशिकप्रलयं स्वीकुर्वन्तावेतावनेकोपादानकारणवादिनः सिद्ध्यन्ति ।

केचन विचारकाः प्रपञ्चमिममतीन्द्रियपरमाणूनां पुञ्जं मन्यन्ते ।

---

४८. यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति ...। – तैत्तिरीयोपनिषद् ३।६।१

संयोगवादिनां मते तु सूक्ष्माश्च पदार्थाः सहावस्थानप्रभावेण इन्द्रियगोचरा भवन्ति। सूक्ष्मस्य केशस्य दूरतो दृगगोरत्वेऽपि केशसमूहस्य दृग्गोचरत्वं भवतीति अत्र दृष्टान्तः । एवंरीत्याारम्भवादिनां परिणामवादिनां संयोगवादिनाञ्च दार्शनिकानां वैदिकप्रमाणानामग्रहणाद् जगत्कारण-सन्दर्भे विभ्रान्ता दृश्यन्ते ।

तदैक्षत (छा.उ.६।२।३), स ईक्षाञ्चके (प्र.उ.६।३), सोऽकामयत (तै.उ.२।६) इत्यादिश्रुतयः चेतनं परमात्मानं जगतो निमित्तकारणं मन्यन्ते चेद् बहु स्याम् (तै.उ.२।६, छा.उ.६।२।३) इत्यादिश्रुतयः तस्यैव उपादानकारणत्वं प्रतिपादयन्ति परन्तु तस्यैव परमात्मनोऽभिन्ननिमित्तोपादानकारणत्वेन प्रपञ्चस्याभिव्यक्तेः स्वीकार उचितो न वेति प्रश्न उद्भवति। सन्दर्भेऽस्मिन् केचन दार्शनिका एवंरीत्या स्वविचारं प्रकटयन्ति– जडस्य कार्यत्वे चेतनस्य कारणत्वे च तयोः तादात्म्याध्यासो न सम्भवति परन्तु जडयोर्मध्ये तादात्म्याध्यासो भवति । मृद्धटयोः, तन्तुपटयोः, स्वर्ण-स्वर्णाभरणयोश्च कार्यकारण-योर्मध्ये तादात्म्यं भवति । चेतनात् पुरुषादेव अचेतनानि नखरोमाणि समुद्भवन्ति, जडस्य रेतसः चैतन्ययुक्तो देहः समुत्पद्यते । असौ केवलमपवादः, न तु सिद्धान्तः ।

चेतनात् चेतनोऽचेतनादचेतनश्चोत्पद्येत इति स्थूलसिद्धान्तः । प्रकृते चार्वाकाणामिव जडाद् भूतचतुष्टयात् चेतनः प्राणी समुत्पद्यत इति सर्वथा मन्तुं न शक्यते परन्तु श्रौतसिद्धान्तानुसारेण चेतनतत्त्वस्यैव जगत्कारणत्वमननमुचितम् ।

प्रकृते उपरि परिचर्चितेषु वेदान्तसम्प्रदायेषु शुद्धाद्वैतवादिनो माध्वसम्प्रदायस्य शुद्धश्रौतसिद्धान्तानुयायिनोऽद्वैतवेदान्तस्य च मतयोः समासेन तुलनात्मिकां परिचर्चामुचितां मन्ये । एतेन सर्वेषां द्वैतवादिनां वेदान्तिनाम्, आस्तिकदर्शनानाम्, नास्तिकदर्शनानाञ्च

श्रौतासिद्धान्तप्रतिकूलानां मतानां प्रत्याख्यानं भवतीति मन्तव्यम् ।

स्वामिना श्रीमधुसूदनेन विरचिता बहवो महत्त्वपूर्णा ग्रन्थाः सन्ति। तेषु अद्वैतवेदान्तपरोऽद्वैतसिद्धिग्रन्थश्च एकः। ग्रन्थोऽयं नव्यन्यायशैल्या रचितः प्रौढतमो दुरूहश्च वर्तते। अद्वैतसिद्धे मौलिकग्रन्थत्वं नाङ्गीकृत्य केचन विद्वांसो ग्रन्थमिममद्वैतवेदान्तविरुद्धस्य व्यासराजतीर्थप्रणीतस्य न्यायामृतग्रन्थस्यानुपूर्विखण्डनरूपं मन्यन्ते । ग्रन्थस्यास्य प्रतिपादनशैली अत्यन्तं परिष्कृता सुदृढा वैदुष्यपूर्णा प्राञ्जला च वर्ततेऽतो जना अस्य खण्डनपरत्वमनुमातुं न शक्नुवन्ति । श्रीगौडब्रह्मानन्दस्वामी अद्वैतसिद्धेः टीकायां लघुचन्द्रिकायां क्वचित् क्वचिद् व्यासराजस्य न्यायामृतग्रन्थस्योल्लेखनञ्चकार परन्तु अद्वैतसिद्धिग्रन्थे ग्रन्थकारेण मधुसूदनेन कुत्रापि तन्नाम नोल्लिखितम् । अद्वैतदर्शनस्य बृहति परिवारे एतत्सदृशः प्रमेयबहुलः परिष्कृतः सुदृढप्रक्रियायुक्तश्च ग्रन्थोऽन्यो नहि दृश्यते । अद्वैतवेदान्तजगति अद्वैतसिद्धिग्रन्थो महासागर एवेति भाषणञ्च अत्युक्तिर्न भवति ।

अद्वैतसिद्धिग्रन्थस्य प्रतिपादनशैली अतीव प्राञ्जला परिष्कृता च वर्तते। क्वचिदपि भाषायां सभ्यताया वादमर्यादायाश्च उल्लङ्घनं न प्राप्यते। न्यायामृतग्रन्थ इव कटुभाषात्र प्रयुक्ता नास्ति। अद्वैतसिद्धेः प्रणेतुः स्वामिनो मधुसूदनस्य न्यायामृतग्रन्थस्य प्रणेतुर्व्यासराजतीर्थस्य भाषा–तर्क–शैलीनां विषये तुलनात्मिका समीक्षा प्रस्तोष्यत एव। वस्तुतो माध्वसम्प्रदायस्य प्रखरविदुषा श्रीव्यासराजेन स्वकीये न्यायामृतग्रन्थेऽद्वैतवेदान्तप्रतिपादितानां मूलसिद्धान्तानां खण्डनपूर्वकं द्वैतसिद्धान्तस्य सुदृढतया स्थापना विहितास्ति । माध्वसम्प्रदायस्य विद्वत्परम्परायां श्रीव्यासराजतीर्थस्य महत् स्थानं वर्तते । यदा विशाले द्वैताकाशे द्वैतस्य स्वतन्त्रमाधिपत्यं निराकुर्वन्नद्वैतसिद्धान्त उद्भासित आसीत्, तत एव द्वैताद्वैतसम्प्रदाययोराचार्याणां परस्परं

मतखण्डनमण्डनपरम्परा प्रारब्धा ।

भर्तृप्रपञ्चसहितानां पूर्ववर्तिनां विदुषामद्वैतविरुद्धान् तर्कान् सप्रमाणं खण्डयन्नद्वैतपरं स्वसिद्धान्तं मण्डयन् आद्यजगद्गुरुः श्रीशङ्कराचार्यः प्रस्थानत्रय्यामोजस्वि भाष्यञ्चकार । प्रणीते हि भाष्ये सर्वेऽद्वैतविरोधिनो दार्शनिकाः चक्रव्यूहं विरचय्याद्वैतवेदान्तमाचक्रमुः । विशेषतो द्वैतमतनिराकरणाय श्रीशङ्कराचार्येण ब्रह्मसूत्रभाष्ये समुल्लिखितं 'यद्यपीदं वेदान्तवाक्यानामैदम्पर्यं निरूपयितुं शास्त्रं प्रवृत्तं न तर्कशास्त्रवत्केवलाभिर्युक्तिभिः कञ्चित् सिद्धान्तं साधयितुं दूषयितुं वा प्रवृत्तम् तथापि वेदान्तवाक्यानि सम्यग्दर्शनप्रतिपक्षभूतानि साङ्ख्यादिदर्शनानि निराकरणीयानि (ब्रह्मसूत्रशाङ्करभाष्यम् २।२।१।१)' इति वचनं प्रतिपक्षस्य कृते गभीर आक्षेपो बभूव । एतेन द्वैतवादस्य साम्राज्यं कर्तुकामानामाचार्याणां समुदाये कोलाहलः समुत्पन्नः । वाग्युद्धस्य शास्त्रार्थस्य च परम्परा प्रारब्धा । तस्य खण्डनस्य स्वसिद्धान्तमण्डनस्य च कृते नैके ग्रन्था असृज्यन्त । सन्दर्भेऽस्मिन् विशिष्टाद्वैतसम्प्रदायस्य विशिष्टो विद्वान् श्रीवेङ्कटनाथो वेदान्तदेशिकः (खीष्टाब्दः १२६९–१३६९) कलममचालयत् । ततोऽनन्तकृष्णःशास्त्री शतदूषणीग्रन्थस्य समीक्षां कुर्वन् शतभूषणीग्रन्थं व्यलिखत् । सन्दर्भेऽस्मिन् पक्षविपक्षयोरनेके विद्वांसः स्वात्मानमग्रेसारितवन्तः । श्रीचित्सुखाचार्यः शाङ्करपरम्परामग्रेसारयन् ब्रह्मसूत्रस्य समन्वयाध्यायः, अविरोधाध्यायः, साधनाध्यायः, फलाध्यायश्चेति क्रमतः चतुर्णामध्यायानां विषयप्रतिपादनपरं चित्सुखी तत्त्वप्रदीपिका वेति ग्रन्थं रचयाञ्चकार ।

एवंरीत्याद्वैतस्य द्वैतस्य च सम्बन्धे तत्तत्सम्प्रदायाचार्या विद्वत्तापूर्णान् ग्रन्थान् रचयाञ्चक्रुः । तत्त्वप्रदीपिकायाः प्रणयनानन्तरं तामेव शैलीमङ्गीकृत्य माध्वसम्प्रदायस्य विदुषा श्रीव्यासराजतीर्थे-

नाद्वैतवेदान्तस्य प्रतिपक्षतां प्रदर्शयता नव्यन्यायस्यातीव प्रौढभाषयाद्वैतवेदान्तसिद्धान्ताः खण्डिताः। तेषामेव तत्खण्डितानां सिद्धान्तानां न्यायामृतशैल्या तत्समभाषया विना लाञ्छनाम्, कटुताञ्च अत्यन्तं शिष्टभाषया सौम्यरूपेण श्रीमधुसूदनेन स्थापना विहिता। यथा–

**१. प्रपञ्चमिथ्यात्ववादः**

न्यायामृतकारो मिथ्यात्वस्य पञ्च लक्षणानि व्यचारयत्। तेषु पञ्चसु प्रथमं लक्षणं श्रीपद्मपादाचार्यस्य, द्वितीयं तृतीयञ्च श्रीप्रकाशात्ममुनेः, चतुर्थं श्रीचित्सुखाचार्यस्य, पञ्चमञ्च आनन्दबोधस्य वर्तन्ते। सन्दर्भेऽस्मिन् श्रीगौडब्रह्मानन्दो लिखति–

आद्यं स्यात् पञ्चपाद्युक्तं ततो विवरणोदिते।
चित्सुखीयं चतुर्थं स्यादन्त्यमानन्दबोधजम् ॥

**क. सत्त्वासत्त्वानधिकरणत्वम्**

लक्षणेऽस्मिन् न्यायामृतकारः त्रीन् विकल्पान् प्रादर्शयत् (१) सत्त्वविशिष्टासत्त्वाभावः,(२)सत्त्वान्ताभावस्यासत्त्वात्यन्ताभावस्य च धर्मद्वयस्याधारता, (३) सत्त्वात्यन्ताभावविशिष्टासत्त्वात्यन्ताभावरूपस्यैकधर्मस्याधारता।

एतस्मिन् पक्षत्रये हि तीर्थेन दोषः प्रदर्शितोऽस्ति। यथा (क) माध्वमतानुसारेण अत्र सिद्धसाधनता दृश्यते। यतो हि माध्वसिद्धान्ते प्रपञ्चस्य सद्रूपत्वमात्रं मतमस्ति। अतः प्रपञ्चसत्त्वविशिष्टस्यासत्वस्याभावः सहजसिद्धोऽस्ति।

(ख) सत्त्वात्यन्ताभावोऽसत्त्वात्यन्ताभावश्च एकत्र स्थातुं न शक्नुतः। यतो हि सत्त्वात्यन्ताभावस्यार्थो भवति असत्त्वम्, असत्त्वात्यन्ताभावस्यार्थश्च सत्त्वम्। अत उभयमेकत्र स्थातुमत्यन्तमसम्भवमस्ति। (ग) तृतीये विकल्पे तु व्याघातदोष एव। यतो हि एकस्मिन्नेवाधारे स्थितयोः पदार्थयोर्मध्ये एकापेक्षयापरस्य विशिष्टत्वं

मन्यते परन्तु अत्र सत्त्वाभावासत्त्वाभावौ द्वावेवैकस्मिन् आधारे स्थातुं न शक्नुतश्चेत् तादृश्यां दशायां सत्त्वाभावविशिष्टोऽसत्त्वाभावः कथं सम्भवति ? व्यासराजतीर्थस्य तद्वचनं खण्डयन्नद्वैतसिद्धिकारो श्रीमधुसूदनसरस्वती द्वितीयतृतीययोर्विकल्पयोर्निर्दुष्टतां कथं प्रत्यपादयदित्यत्र प्रदर्श्यते । श्रीमधुसूदनसरस्वती लिखति– सत्त्वा त्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयविवक्षायां दोषाऽऽभावात् ।' सत्त्वमसत्त्वञ्चेति धर्मद्वयं नहि परस्परमभावरूपमपि तु स्वतन्त्रौ भावरूपौ धर्मावित्यभिप्रायः । तस्य कथनानुसारेण सत्त्वस्य लक्षणं वर्तते त्रिकालाबाध्यत्वम् । असत्त्वस्य च "क्वचिदपि उपाधौ सत्त्वेन प्रतीयमानत्वानधिकरणत्वम्" इति। खपुष्पादावसत्त्वं ब्रह्मणि च सत्त्वम्। प्रपञ्चे तु सत्वासत्त्वयोरुभयोरभावोऽस्ति। माध्वमतानुसारेण च त्रिकालाबाध्यत्वरूपं सत्त्वं प्रपञ्चे सेद्धुं न शक्नोति। अतः प्रपञ्चे सत्त्वाभावसत्त्वे माध्वमतानुयायिषु आपत्तिर्न भवेत्। असत्त्वाभावस्तु माध्वैश्च स्वीकृतः सिद्धान्तः । अतः सत्त्वस्यासत्त्वस्य चोभयस्याभावः, द्वयोर्मध्ये एकस्याभावेनापरस्य विशिष्टत्वं वा नहि विरुद्धम्।

**२. त्रैकालिकनिषेधप्रतियोगित्वम्**

लक्षणेऽस्मिन् कालिकनिषेधविषयमुत्थाप्य न्यायामृतकारोऽत्र च त्रीन् विकल्पान् प्रदर्श्य तेषु दोषदर्शनमकरोत्– "त्रैकालिकस्य निषेधस्य तात्त्विकत्वेऽद्वैतहानिः, प्रातिभासिकत्वे सिद्धसाधनाद् व्यावहारिकत्वेऽपि तस्य बाध्यत्वेन तात्त्विकसत्त्वा-विरोधित्वेनार्थान्तरात्।" ब्रह्मणि प्रपञ्चस्य त्रैकालिकस्याभावस्य ब्रह्म इव तात्त्विके मन्यमानेऽद्वैतहानिर्भवति । प्रपञ्चस्य वास्तविकमभावं नाङ्गीकृत्य प्रातिभासिकत्वे स्वीकृते माध्वमतावलम्बिनां कृतेऽभीष्टमेव । तथैव प्रपञ्चस्य व्यावहारिकेऽभावे स्वीकृते स

चाभावो बाध्यत एव । अतो बाधितस्याभावस्य प्रतियोगिता प्रपञ्चेऽङ्गीकृते सति वास्तविक्याः सत्ताया अपहारो न भवति । अतस्तत्र सिद्धसाधनतार्थान्तरता चेति दोषावापततः ।

अद्वैतसिद्धिकारेण तन्निषेधस्य वास्तविकत्वे स्वीकृतेऽपि अद्वैते हानिर्न भूत्वा तस्य ब्रह्मरूपत्वमेव निरूपितं वर्तते ।

### ३. ज्ञाननिवर्त्यत्वम्

सन्दर्भेऽस्मिन् न्यायामृतकारस्य व्यासराजस्य कथनमेवमस्ति– अतीते घटादौ लक्षणमिदमव्याप्तमस्ति । यतो हि तस्य ज्ञाननिवर्त्यत्वं न भवति, अपि तु मुद्गरपातादिना तन्निवृत्तिः । एवञ्च ज्ञानगतनिवर्तकता ज्ञानत्वेन विवक्षितास्ति उत ज्ञानव्याप्यधर्मेण ? प्रथमे पक्षे स्वीकृते शुक्तिरजतादावव्याप्तिः । यतो हि शुक्तिज्ञाने निवर्तकताधिष्ठानसाक्षात्कारत्वेन भवति, न तु ज्ञानत्वेन । द्वितीये पक्षे स्वीकृते सति स्मृतिरूपे ज्ञाने ज्ञानत्वव्याप्यं स्मृतित्वेनैव भवति ।

अद्वैतसिद्धिकारः तीन् विकल्पान् परिहाय नवीनं मार्गमन्विष्टवान् वर्तते– ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वं हि ज्ञान-निवर्त्यत्वम् । मायादीनामनादिपदार्थानां निवृत्तिरात्मज्ञानेनैव भवति । अतीतानां घटादीनां निवृत्तिश्च ईश्वरीयज्ञानेन भवति । यतो हि ईश्वरज्ञानं कार्यमात्रं प्रति साधारेण कारणं मन्यते । अधिष्ठानसाक्षात्कारादिश्च ज्ञानस्यैव समकक्षतां समायान्ति । उत्तरज्ञानेन पूर्वज्ञानस्य यन्निवृत्तिर्भवति, तन्निवृत्तिः सामान्यात्यन्तनिवृत्तिरूपेण वा न भवति । यतो हि तज्ज्ञानं संस्कारादिरूपेण तिष्ठति । अतोऽतिव्याप्तिश्च न भवति ।

### ४. स्वाश्रय निष्ठात्यन्ताभावप्रतियोगित्वम्

लक्षणेऽस्मिँश्च न्यायामृतकारोऽत्यन्ताभावस्य तात्त्विकतादि-विकल्पान् उद्भाव्य दोषदर्शनं करोति । एतस्य चाद्वैतसिद्धिकारः पूर्ववदुत्तरं प्रयच्छति । ब्रह्मनिष्ठस्य प्रपञ्चस्यात्यन्ताभावस्य

तात्त्विकत्वेऽपि ब्रह्मभिन्नः स न मन्यतेऽतो द्वैतापत्तिर्न भवतीति स कथयति।

### ५. सदविविक्तत्वम्

लक्षणेऽस्मिन् न्यायामृतकारेण सत्ताविषये त्रीन् विकल्पान् उत्थाप्य दोषप्रदर्शनं कृतमस्ति– सत्ताजात्याधारेण सद् मन्यतेऽबाध्यं वस्तु सत्, ब्रह्म सद् वा ? प्रथमे विकल्पे स्वीकृते प्रपञ्चेऽव्याप्तिः। यतो हि सत्ताजातिः तत्र मतास्ति। अतः सत्सत्त्वं मन्यते, नहि सद्विविक्तत्वम्। द्वितीये विकल्पे स्वीकृते मिथ्यात्वस्य स्वरूपं बाध्यत्वं पर्यवस्यति, तच्च प्रपञ्चे न सम्भवति। तृतीये विकल्पे स्वीकृते ब्रह्मरूपस्य सद्वस्तुनो भेदस्य प्रपञ्चे सम्मतत्वेन सिद्धसाधनतादोषो भवति।

अत्रापि अद्वैतसिद्धिकारेण सत्त्वस्य मौलिकीं परिभाषां कृत्वा न्यायामृतकारेणाक्षिप्तानां दोषाणां निराधारत्वं साधितं वर्तते।

**प्रपञ्चसत्त्ववादः**

'सन्, घटः, सन् पटः' इत्यादेः प्रत्यक्षप्रतीत्या प्रपञ्चे सत्त्वं सिद्ध्यति। अतः प्रपञ्चे सत्त्वाभावरूपस्य मिथ्यात्वस्यानुमानं न सिद्ध्यतीति आरोपो न्यायामृतकारस्य वर्तते। सत्त्वलक्षणस्य जटिलताजाले निपत्य न्यायामृतकारः पराजयमलभत। अद्वैतिनां 'कीदृक् सत्त्वं तवाभिमतम् ?' इत्ययं प्रश्नः तस्मादनुत्तरित एवाभवत्। अन्ते माध्ववादिन एवमुत्तरयन्ति–

यादृशं ब्रह्मणः सत्त्वं तादृशं स्याज्जगत्यपि।
तत्र स्यात्तदनिर्वाच्यं चेदिहापि तथास्तु नः॥

अद्वैतवेदान्तिनो ब्रह्मणि यादृशं सत्त्वमङ्गीकुर्वन्ति, वयं माध्वमतावलम्बिनोऽपि तदेव सत्त्वं स्वीकुर्म इत्यभिप्रायः। अद्वैतसिद्धिकार एतादृशमुत्तरं प्रति सोपहासं वदति– "नूनं विवाहसमये कन्यायाः पित्रा निजगोत्रं पृष्टस्य 'यदेव भवतां गोत्रं तदेव ममापि

गोत्रम्' इति वदतो वरस्य भ्राता भवान् ।" एतादृशमुत्तरन्तु केवलं मूर्खतायाः परिचायकम् । यतो हि समानगोत्रयोर्विवाहसम्बन्धो निषिद्धः । एवंरीत्या माध्वगणेन 'यादृशं ब्रह्मणः सत्त्वं तादृशं स्याज्जगत्यपि' इति कथनं सर्वथानुचितम् । अत्यन्ताबाधितत्वरूपं सत्त्वं जगति कदापि न सम्भवति ।

**असति प्रपञ्चेऽर्थक्रियाकारित्वम्**

असतो रजतात् सद्भूषणानां रचना कदापि भवितुं न शक्नोति । तथैव दृश्यत्वादेरसद्धेतोर्मिथ्यात्वसिद्धिर्भवितुं न शक्नोतीति प्रोच्य न्यायामृतकार आक्षेपमकरोत् । तस्योत्तरेऽद्वैतसिद्धिकारेण वाचस्पतिमिश्रस्य 'उत्पादकाप्रतिद्वन्द्वित्वात्' इति पदमेवाहृत्य प्रत्युत्तरं प्रदत्तं वर्तते । दृश्यत्वादिहेतुना केवलं व्यावहारकालाबाध्यत्वमपेक्षितम्, न तु त्रिकालाबाध्यत्वम् । अतो दृश्यत्वादिना प्रपञ्चगतं त्रिकालाबाध्यत्वाभावं साधयितुं न कश्चन विरोधोऽस्ति । अर्थक्रियाकारितायाः कृते वस्तुनः पारमर्थिकसत्ता नापेक्ष्यते । यतो हि स्वप्नकाले सधवायाः स्त्रिया दर्शनस्यासत्वेऽपि भाविनः सत्यशुभस्य सूचकं तन्मन्यते ।

**अविद्याया लक्षणम्**

अविद्याया द्विविधं लक्षणं प्रसिद्धं वर्तते– (१) अनादिभावरूपत्वे सति ज्ञाननिवर्त्यत्वम् (२) भ्रमोपादानत्वञ्च । द्विविधस्यैव लक्षणस्य दुष्टत्वं न्यायामृतकारेण प्रदर्शितमस्ति – "आद्यलक्षणेऽव्याप्तिः सादि-शुक्लत्वाद्यवच्छिन्न-चैतन्यावरकाज्ञानानामनादित्वायोगस्योक्तत्वात्, द्वितीयलक्षणेऽपि यावन्ति ज्ञानानि तावन्त्यज्ञानानीति मतेऽभ्रम-पूर्वकप्रमानिवर्त्याज्ञानेऽभावारोपनिवर्तकप्रमानिवर्तकप्रमानिवर्त्याज्ञाने चाव्याप्तिः ।" एतद्दोषनिवारणभावेनाद्वैतसिद्धिकारो लिखति– "रूप्योपादानाज्ञानमप्यनादि चैतन्याश्रितत्वादनाद्यैव ।" शुक्त्यादिभिः

सादिपदार्थैरवच्छिन्नस्य चैतन्यस्यावरकीभूतमज्ञानञ्चानादिचैतन्याश्रये भवतीति एतावता तच्चानादि, नहि सादि । तथैवाकाशादयोऽनादिपदार्थैर्घटादिभिरवच्छिन्ना अपि अनादयः खलु, न तु सादयः । द्वितीयस्य लक्षणस्य सन्दर्भेऽद्वैतसिद्धिकारो लिखति– "इदञ्च लक्षणं विश्वभ्रमोपादानं मायाधिष्ठानं ब्रह्मेति पक्षः, न तु ब्रह्ममात्रोपादानत्वपक्षे ब्रह्मसहिताविद्योपादानत्वपक्षे वा । अतो ब्रह्मणि नातिव्याप्तिः ।" विश्वविभ्रमस्य कारणमज्ञानं माया वा । मायाया विषयीभूतं ब्रह्म विश्वस्याधिष्ठानम् । एतत्सिद्धान्तानुसारेण मायाया एतद् द्वितीयं लक्षणं कृतमस्ति । अत एव च ब्रह्मणि उक्तलक्षणं नातिव्याप्तम् ।

**अविद्याभासकवादः**

न्यायामृतकारः पृच्छति– अविद्या शुद्धचैतन्यवेद्या वृत्तिप्रतिबिम्बितचैतन्यवेद्या वा ? प्रथमस्य पक्षस्य स्वीकारे निर्दुष्टात् चैतन्यात् प्रकाशनहेतुनाविद्या पारमार्थिकी भवति । द्वितीयस्य पक्षस्य स्वीकारे कदाचिद् अविद्याया अप्रतीतेः प्रसक्तिर्भवति । एतत्समाधानमद्वैतसिद्धिकारेणेत्थं विहितं वर्तते– "अविद्या साक्षिवेद्या, न तु शुद्धचैतन्यवेद्या । यतो हि शुद्धस्य चैतन्यस्य साक्षित्वममत्वाविद्यावृत्तौ प्रतिबिम्बितस्य चैतन्यस्यैव साक्षित्वं मन्यते । अविद्यायाः शुद्धचैतन्येन साक्षाद्भासितत्वाभावेऽविद्यायां पारमार्थिकत्वापत्तिर्नागच्छति ।"

अविद्याविषयको विचारः

न्यायामृतकारः श्रीव्यासराजतीर्थः कथयति– "अविद्याविषयोऽपि दुर्वचः ।" अज्ञानावरणस्याष्टविधं प्रयोजनम्– (१) सिद्धस्य प्रकाशस्य लोपः (२) असिद्धस्य प्रकाशस्योपत्तिः (३) विद्यमानस्य प्रकाशस्य विषयेण सहासम्बन्धः (४) प्राकाट्यसंज्ञकस्य कार्यस्य प्रतिबन्धः (५)

नास्ति न प्रकाशत इति द्विविधो व्यवहारः (६) अस्ति प्रकाशत इति व्यवहारस्याभावः (७) नास्ति न प्रकाशत इति व्यवहारस्यायोग्यता (८) अस्ति प्रकाशत इति व्यवहारस्य योग्यता। घटादिषु परप्रकाश्येषु पदार्थेषु अपेक्षितस्य प्रकाशस्याभावः, प्रकाशस्यानुत्पत्तिर्वा । स्वयंप्रकाशे चैतन्य एतादृशोऽभावो नास्ति । अत आत्मनि प्रथमादितृतीयान्तानां विकल्पानां सम्भावना न भवति । प्राकाट्यरूपस्य विषयगतधर्मस्य भाट्टाभिमतत्वेऽपि नह्यद्वैतवेदान्तसम्मतत्वम् । अतः चतुर्थो विकल्पश्च निराधारोऽस्ति । पञ्चमस्य विकल्पस्य स्वीकारे सुषुप्तौ 'न किञ्चिदवेदिषम्' इत्यनुभूतिर्न सम्भवति । अज्ञानावस्थायाञ्च आत्मस्वरूपाभिज्ञात्मको व्यवहारोऽद्वैतवेदान्ते स्वीकृतोऽस्ति । अतः तद्भाव आवरणप्रयोजनं भवितुं न शक्नोति । ब्रह्मणो निर्धर्मकत्वेन ब्रह्मणि षष्ठाद्यष्टमान्ता विकल्पा न सङ्गच्छन्त इति न्यायामृतकारः श्रीव्यासराजतीर्थोऽद्वैतवेदान्तस्याविद्याविषयके सिद्धान्त आक्षेपं करोति ।

सन्दर्भेऽस्मिन्नद्वैतसिद्धिकारेण स्वामिना मधुसूदनेन तस्याक्षेपस्य प्रतिवादरूपेणस्वविचाराः प्रस्तुताः सन्ति– "अविद्याविषयोऽपि सुवचः। यतो हि अविद्याया विषयः चिन्मात्रम् । आवरणसम्बन्धे कथितानां विकल्पानां प्रयोजनं ब्रह्मज्ञानकालं यावत् स्थास्यति । सम्बन्धेऽस्मिन् विवरणकारश्च 'अज्ञानस्य चिन्मात्रमेव विषयः' इत्यभाणीत् ।"

एवंरीत्या द्वैतवादिभिरुद्भावितान् अवैदिकान् कुतर्कान् कुप्रचारांँश्च स्वामी मधुसूदनसरस्वती स्वप्रणीतेनाद्वैतसिद्धिग्रन्थेन समग्रतो निराकृतवान् । अन्ततः सर्वेऽपि सम्प्रदायाः, मतानि, विचारपथाश्चाद्वैतवेदान्तरूपं महासागरमवाप्य पर्यवस्यन्ति । एतस्माद् ऋते नान्योऽन्तिम आश्रयः चरममधिष्ठानञ्चेति प्रमाणीकृतं भवति ।

## ख. ब्रह्मसूत्रकारिका

अद्वैतवेदान्तपरम्परायां प्रस्थानत्रयीति नाम्ना प्रसिद्धानि त्रीणि शास्त्राणि सन्ति । स्मृतिप्रस्थानं श्रीमद्भगवद्गीतास्ति, अत्र वक्तुः प्राधान्यं दृश्यते । श्रुतिप्रस्थानमुपनिषदस्ति, अत्र वचनस्य प्राधान्यं मन्यते चेद् न्यायप्रस्थाने ब्रह्मसूत्रे विचारस्य प्राधान्यं स्वीक्रियते । इह ब्रह्मसूत्रकारिकाया भूमिकायाः सन्दर्भत्वेन केवलं ब्रह्मसूत्रस्यैव चर्चा क्रियते ।

भगवता वेदव्यासेन प्रणीतं ब्रह्मसूत्रं ब्रह्ममीमांसासूत्रम्, वेदान्तसूत्रम्, भिक्षुसूत्रञ्चेत्यादिनामभिर्व्यवह्रियते । भगवत्पाद आद्यजगद्गुरुः श्रीशङ्कराचार्यः सर्वप्रथमं ग्रन्थेऽस्मिन् भाष्यञ्चकार, तदनन्तरमेव इतर आचार्याः स्वसम्प्रदायानुसारि भाष्यञ्चक्रुः ।

अन्येषां सम्प्रदायानां दर्शनानाञ्च स्थापिताया लेखनशैल्याः परम्परायाश्च भिन्ना विशिष्टा शैली दार्शनिक-गहन-श्रौतसिद्धान्तप्रसूतस्याद्वैतवेदान्तस्य नवोन्मेषो नवीना परम्परा च ब्रह्मसूत्रभाष्यलेखनात्पूर्वमुपोद्घातभाष्यरूपेणाध्यासभाष्यं विलिख्य भगवता श्रीशङ्कराचार्येण समनुश्रिता वर्तते । बादरायणमुनिना लिखिते ब्रह्मसूत्रे जीवब्रह्मणोरैक्यप्रतिपादनात्पूर्वमाध्यासिकसिद्धान्तस्य बोधनायाचार्येण शङ्करेण "युष्मदस्मत्प्रत्ययगोचरयोः" इत्यस्मात् पूर्वपक्षस्योत्थापन-पूर्वकमध्यासभाष्यान्ते "अथातो ब्रह्मजिज्ञासा" सूत्रस्यास्य भाष्यप्रणयनात्पूर्वमेव "अस्यानर्थहेतोः प्रहाणाय आत्मैकत्व विद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते, यथा चायमर्थः सर्वेषां वेदान्तानां तथा वयमस्यां शारीरकमीमांसायां प्रदर्शयिष्यामः, वेदान्तमीमांसाशास्त्रस्य व्याचिख्यासितस्येदमादिमं सूत्रम्" इति लिखितं वर्तते ।

अनर्थस्य हेतुभूतमध्यासं समूलं नाशयितुं जीवब्रह्मणोरैक्यज्ञानाय

खलु सर्वे वेदान्ता आरभ्यन्ते । सर्वेषां वेदान्तानामुद्देश्यं प्रतिपाद्यो विषयश्च ब्रह्मात्मैकत्वमेवेति गूढोऽर्थोऽस्यां शारीरकमीमांसायां वर्ण्यत इति कथयन् भगवान् श्रीशङ्कराचार्यो ब्रह्मसूत्रस्य "अथातो ब्रह्मजिज्ञासा" इति प्रथमस्य सूत्रस्य भाष्यलेखनात् पूर्वमेव सर्वेषां वेदान्तानां विषयभूतं ब्रह्मात्मैकत्वमस्तीति तथ्यं प्रस्तुतवान् वर्तते । प्रथमस्य वर्णकस्योद्घातस्याध्यासभाष्यस्यान्ते समुल्लिखितस्य "शारीरकमीमांसा" इति पदस्य द्वितीयवर्णके समुल्लिखितस्य "वेदान्तमीमांसाशास्त्रम्" पदस्य च विषये सारांशतोऽत्र उल्लेखः सान्दर्भिको भवति । "शरीरमेव शरीरकम्, कुत्सितत्वात्, तन्निवासी शारीरको जीवस्तस्य ब्रह्मत्वविचारो मीमांसा तस्यामित्यर्थः" इति रत्नप्रभाटीकायां लिखितमस्ति ।

तदनुसारेण "कुत्सितम् (पा.५।३।७४)" सूत्रानुसारेण शरीरशब्दे निन्दार्थे कप्रत्ययेन 'शरीरक' इति शब्दो निष्पद्यते। यन्निवास इति अस्यार्थो भवति। स एव शारीरको जीवोऽस्ति। "सोऽस्य निवासः (पा.४।३।८६)" इति सूत्रेण स यस्य निवास इत्यर्थे शरीरकशब्देऽण्प्रत्ययेनादिवृद्धौ शारीरकशब्दो निष्पद्यते । अतः "शारीरकमीमांसा" इति पदस्य तात्पर्यं जीवो ब्रह्मैवेति वर्तते । एतादृशस्य पूजनीयस्य विचारस्य नाम एव शारीरकमीमासा वर्तत इति तात्पर्यं निःसरति । तथैव "शारीरकमीमांसा" इति पदस्य व्युत्पत्तिर्न्यायनिर्णयकारश्च कृतवान् वर्तते– "शरीरमेव शारीरकं कुत्सितत्वात्, तन्निवासी शारीरको जीवः, तस्य ब्रह्मतावेदिका विचारात्मिका मीमांसा तस्यामिति यावत्, प्रथमवर्णके विचारविधेर्ज्ञानव्यवधानेन विषयो ब्रह्मात्मैक्यम्, बन्धध्वस्तिश्च फलम्, इत्यध्यासोक्त्या साधितम् ।"

"शारीरकमीमांसा" इति पदस्य सन्दर्भे भामतीकारस्य विचार एवमस्ति– "शरीरमेव शरीरकं तत्र निवासी शारीरको जीवात्मा ।

तस्य त्वम्पदाभिधेयस्य तत्पदाभिधेयपरमात्मरूपतामीमांसा या सा तथोक्ता।"

"शरीरे भवः शारीरो जीवः, तं शारीरं कायति ब्रह्मरूपं गायति" इति व्युत्पत्तिमाध्यमेन केचन विद्वांसः शारीरकपदस्यार्थो वेदान्तवाक्यानि शारीरकमीमांसा वेदान्तविचारो वा शारीरकमीमांसेति प्रोचुः।

ब्रह्मसूत्रे भाष्यप्रणयनात्पूर्वं जगद्गुरुणा शङ्कराचार्येणोपोद्घात-रूपेणाध्यासभाष्यलेखनस्योद्देश्यं ब्रह्मणो जिज्ञासायै आध्यासिकस्य जीवभावस्योभद्वनमेव। अन्यथा ब्रह्मसूत्रस्य प्रथमे "अथातो ब्रह्मजिज्ञासा" इति सूत्रे प्रयुक्तेन अथशब्देनाभीप्सितस्योत्तमस्या-धिकारिणो जिज्ञासोर्मुमुक्षोरुपलब्धिः कठीना भवति। तत्पदवाच्येन शुद्धसत्त्वविशिष्टेन परमात्मना सह एकीभावमिच्छन् त्वम्पदवाच्यो मलिनसत्त्वविशिष्टो जिज्ञासुर्जीवात्मा हि योग्यो मुमुक्षुर्वर्तते।

बद्धो जीवात्मा हि मुमुक्षुर्भवति। आध्यासिकप्रक्रियाया ज्ञानेनैव बन्धनान्मुक्तिमिच्छन् जीवात्मा ब्रह्म जिज्ञासते।

अध्यासमविज्ञाय ब्रह्मजिज्ञासोर्जिज्ञासाया असम्भवाद् भाष्यकारेण सर्वप्रथमध्यासविषये लेखनी सञ्चालितेति स्पष्टम्। अतोऽद्वैतवेदान्तस्य योग्यैरध्येतृभिरत्र दृष्टिपातोऽनिवार्यः। अन्यथा ब्रह्मजिज्ञासायै योग्यं पात्रत्वं नहि सम्भवति। एतमध्यासविषयं पञ्चपादिकार आचार्यः पद्मपादः प्रथमे वर्णके जिज्ञासाधिकरणे पादटिप्पण्यां सूचनार्थं लिखितवान् वर्तते, एवञ्च भूमिकायामस्यामपि प्रसङ्गानुसारं समुल्लिख्यते।

भगवत्पादेन श्रीशङ्कराचार्येणाध्यासानन्तरम् "अथातो ब्रह्मजिज्ञासा" सूत्रेऽस्मिन् प्रवेशात्पूर्वं सूत्रभूमिकारूपेण लिखितस्य "वेदान्तमीमांसा-शास्त्रस्य व्याचिरख्यासितस्येदमादिमं सूत्रम्" इति वाक्यस्य समासेन चर्चेह सान्दर्भिकी दृश्यते। सन्दर्भेऽस्मिन् भाष्यरत्नप्रभाया

व्याख्या एतादृशी वर्तते– "वेदान्तविषयपूजितविचारात्मकशास्त्रस्य व्याख्यातुमिष्टस्य सूत्रसन्दर्भस्येदं प्रथमसूत्रमित्यर्थः । यदि विधिरेव वेदार्थः स्यात्तदा सर्वज्ञो बादरायणो ब्रह्मजिज्ञासां न ब्रूयात्, ब्रह्मणि मानाभावात् । अतो ब्रह्मणो जिज्ञास्यत्वोक्त्या केनापि तन्त्रेणानवगतब्रह्मपरवेदान्तविचार आरम्भणीय इति सूत्रकृद् दर्शयति । तच्च 'व्याचिख्यासितस्य' इति पदेन भाष्यकारो बभाषे । इति द्वितीयवर्णकम् ।"

सन्दर्भेऽस्मिन् भामतीकारस्य विचार एवमस्ति– "वेदान्त-मीमांसाशास्त्रस्य व्याचिख्यासितस्य (अस्माभिः) इदमादिमं सूत्रम् । पूजितविचारवचनो मीमांसाशब्दः । परमपुरुषार्थहेतुभूतसूक्ष्मतमार्थ-निर्णयफलता विचारस्य पूजितता । तस्या मीमांसायाः शास्त्रं सा ह्यनेन शिष्यते शिष्येभ्यो यथावत् प्रतिपाद्यत इति ।

ब्रह्मसूत्रकारिकाया अस्यां सङ्क्षिप्तभूमिकायां सर्वप्रथमं शाङ्करभाष्यानन्तरमस्यामेव परम्परायां समागतयोर्विवरण-प्रकरणग्रन्थयोः तद्ग्रन्थकारयोश्च विषये चर्चा विधास्यते ।

भगवत्पादस्य श्रीशङ्कराचार्यस्य प्रमुखशिष्येषु एकः श्रीमद्पद्मपादाचार्यो गुरोराज्ञया ब्रह्मसूत्रस्य शाङ्करभाष्ये पञ्च-पादिकानामकं प्रौढग्रन्थमलिखत् । एतां पञ्चपादिकां श्रीशङ्कराचार्यो वारत्रयमाद्योपान्तमपठदिति श्रूयते । अत एव एतस्याः पञ्चपादिकाया अपगमनात् पुनः श्रीशङ्कराचार्येण पठितं स्मृत्वा लेखयितेति प्रवादो वर्तते । यत्किमपि भवतु, पञ्चपादिकाया अस्या अध्यासः, जिज्ञासा, लक्षणम्, प्रमाणम्, समन्वयश्चेति केवलं पञ्च पादाः प्रसिद्धाः सन्तीति श्रीशङ्कराचार्यो ग्रन्थस्यास्य ग्रन्थकारं स्वस्य प्रमुखं शिष्यं श्रीपद्मपादाचार्यमवददिति श्रीमाधवाचार्येण स्वकीये 'शङ्करदिग्विजयः' इति ग्रन्थे समुल्लिखितं प्राप्यते– "अस्याः

किल पञ्चैव पादाः प्रचरेयुस्तत्रापि आद्या चतुःसूत्र्येव प्रसिद्ध्येदिति भगवता शङ्करभगवत्पादेन रचयिताऽभिधत्ते, इति वर्णयन्ति स्म शङ्करदिग्विजये माधवाचार्याः ।"

एवंरीत्या पद्मपादाचार्येण ब्रह्मसूत्रस्य शाङ्करभाष्यग्रन्थस्य पूर्णा टीका कृता परन्तु तदानीं गुरोराज्ञया पञ्चपादानामेव पञ्चपादिकेति नाम्ना प्रसिद्धिः कारिता इत्यतः शेषा टीका इतोऽपि अन्वेषणीयास्तीति विदुषामभिमतं दृश्यते ।

पद्मपादाचार्यस्य समय ख्रीष्टाब्दस्य अष्टमशताब्दी एव मन्यते । तस्यापरं नाम सनन्दन आसीत् । स पञ्चपादिकायामध्यासभाष्यं प्रथमपादम् 'अथातो ब्रह्मजिज्ञासे'ति सूत्रं द्वितीयपादम्, 'जन्माद्यस्य यतः' इति सूत्रं तृतीयपादम्, 'शास्त्रयोनित्वादि'ति सूत्रं चतुर्थपादम्, 'तत्तु समन्वयादि'ति सूत्रञ्च पञ्चमपादं मत्वा पञ्चपादिकाग्रन्थमरचयत् । पञ्चपादिकेति कथनेन १. अध्यासः, २. ब्रह्मविचारः, ३. लक्षणम्, ४. प्रमाणम्, ५. समन्वयश्चेति पञ्च पादा एव सन्ति । ग्रन्थोऽयं नवसु वर्णकेषु विभक्ताऽस्ति– अध्यासः (प्रथमं वर्णकम्), वेदान्तमीमांसाशास्त्रस्य व्याचिख्यासितस्य (द्वितीयं वर्णकम्), अथातः (तृतीयं वर्णकम्), ब्रह्मजिज्ञासा (चतुर्थं वर्णकम्), जन्माद्यस्य यतः (पञ्चमं वर्णकम्), शास्त्रयोनित्वात् षष्ठसप्तमे वर्णके), तत्तु समन्वयात् (अष्टमनवमे वर्णके) ।

नवसु वर्णकेषु विभक्तः पञ्चपादिकाग्रन्थोऽद्वैतवेदान्तस्य शाङ्करपरम्पराया महत्त्वपूर्णेषु विवरणग्रन्थेषु अन्यतमो मन्यते । ग्रन्थेऽस्मिन् प्रकाशात्मयतिना विवरणनामिका प्रसिद्धा टीका लिखितास्ति । अद्वैतवेदान्तस्य प्रस्थानेषु एतद्विवरणप्रस्थानरूपेण स्वीक्रियते। पञ्चमिथ्यात्वे पञ्चपादिकायाः 'मिथ्याशब्दोऽनिर्वचनीय-तावचनः' इति प्रथमं लक्षणमस्ति चेदेतस्यैव विवरणटीकायां

लिखितं 'प्रतिपन्नोपाधावभावप्रतियोगित्वमेव मिथ्यात्वम्' इति द्वितीयं लक्षणम्, 'अज्ञानस्य स्वकार्येण वर्तमानेन प्रविलीनेन वा सह ज्ञानेन निवृत्तिर्बाधः' इति च तृतीयं लक्षणं वर्तते । अतोऽनया च दृष्ट्या पञ्चपादिकाया महन्महत्त्वं प्रतिभाति । आद्यजगद्गुरुणा श्रीशङ्कराचार्येण श्रीव्यासप्रणीते ब्रह्मसूत्रे लिखितमत्यन्तं दुरूहं न्यायप्रस्थाननामकं भाष्यं शाङ्करभाष्यमिति प्रोच्यते । भाष्येऽस्मिन् सर्वप्रथमं श्रीपद्मपादाचार्यः पञ्चपादिकानामकं प्रौढं विवरणमलिखदिति पूर्वमेवोल्लिखितम् । तथैव शाङ्करभाष्ये टीका–वार्तिक–निबन्ध-टिप्पण्यादिव्याख्यानानि बहुभिराचार्यैः कृतानि सन्ति । तेषां सर्वेषां चर्चाया अस्यां सङ्क्षिप्तभूमिकायामसम्भवादत्र स्मरणमात्रं क्रियते ।

अनन्तरमाचार्येण सर्वज्ञात्ममुनिना ब्रह्मसूत्रशाङ्करभाष्ये प्रणीतस्य श्लोकबद्धस्य 'सङ्क्षेपशारीरकम्' इति ग्रन्थस्य चर्चां सान्दर्भिकीं मन्ये । ग्रन्थस्यास्य लेखको भगवत्पादस्य श्रीशङ्कराचार्यस्य प्रशिष्यः श्रीसुरेश्वराचार्यस्य शिष्य इति तथ्यं तस्यैव ग्रन्थस्य 'जयन्ति देवेश्वरपादरेणवः' इत्यादिवन्दनेन ज्ञायते । स ग्रन्थमिमं विविधवार्णिकछन्दोभिः १२४८ श्लोकैः समलञ्चकार । अयञ्च ग्रन्थो ब्रह्मसूत्रशाङ्करभाष्यमिव चतुर्षु अध्यायेषु विभक्तोऽस्ति ।

सङ्क्षेपशारीरककारस्य श्रीसर्वज्ञात्ममुनेः समयः खीष्टाब्दस्य नवमशताब्दी मन्यते । भगवता श्रीशङ्कराचार्येणाध्यासभाष्यान्ते लिखिताया "वयमस्यां शारीरकमीमांसायां प्रदर्शयिष्यामः" इत्यस्याः पदावल्या अन्तःपातिनः शारीरकपदेन ग्रन्थनाम परिकल्प्य 'सङ्क्षेपशारीरकम्' इति नाम्नाद्वैतवेदान्तपरकमत्यन्तं गहनं ग्रन्थं मुनिररचयत् । सरसपदैः साहित्यिकशब्दावलीभिः सुमधुरछन्दःप्रयोगेण च प्रणीतोऽयं ललितग्रन्थः कस्यचन सिद्धहस्तस्य महाकवेर्मधुररसाप्लावितमाकर्षकशैल्या रचितं महाकाव्यमिवाभाति ।

ग्रन्थस्यास्य यावत्यपि प्रशंसा क्रियेत, तदल्पैवेति मन्ये । यतो हि ग्रन्थादस्मादहमत्यन्तमनुगृहीतोऽस्मि ।

आचार्येण शङ्करेण प्रणीतस्य ब्रह्मसूत्रभाष्यस्य समग्रान् विषयान् न गृहीत्वाद्वैतवेदान्तस्यात्यन्तं गूढस्य श्रौतसिद्धान्तस्य महत्त्वपूर्णान् पक्षान् विषयीकृत्य सर्वज्ञात्ममुनिना सङ्क्षेपशारीरकग्रन्थो विरचितोऽनुभूयते । सोऽस्य ग्रन्थस्य नाम प्रकरणग्रन्थ इत्युल्लिखितवान् । शास्त्रैः प्रकरणग्रन्थस्य लक्षणानि च प्रदत्तानि सन्ति । यस्मिन् ग्रन्थे शास्त्रीयपरिभाषाः प्रदर्श्याल्पयुक्तिप्रमाणैः तत्तच्छास्त्राणां सङ्क्षेपेण व्याख्या विधीयते, तादृशो ग्रन्थः प्रकरणग्रन्थ इत्याभिधीयते । यो ग्रन्थः कस्यचन शास्त्रस्यैकेन भागेन सम्बद्धो भूत्वा तच्छास्त्रस्यैवांशतः कार्यङ्करोति चेत्तादृशं ग्रन्थं वा विद्वांसः प्रकरणग्रन्थं कथयन्ति ।

'सङ्क्षेपशारीरकम्' इति प्रकरणग्रन्थो मुमुक्षूणामध्येतॄणां कृतेऽत्यन्तं पठनीयोऽस्ति । शाङ्करभाष्ये प्रयुक्तानामनेकानां पारिभाषिकशब्दानाञ्च सरलं व्याख्यानं ग्रन्थेऽस्मिन् मुनिना प्रस्तुतं वर्तते । गुरुशिष्ययोः संवादात्मकशैल्या विरचितेऽस्मिन् ग्रन्थे सरलया सरसया च शब्दावल्या ब्रह्मज्ञानाय प्रयत्नः साधितोऽस्ति ।

अद्वैतवेदान्तस्य प्रस्थानत्रय्यां ब्रह्मसूत्रशाङ्करभाष्यं न्याय-प्रस्थानमिति प्रोच्यते । भाष्येऽस्मिन् न्यायदर्शनरीत्या वादकथामाधृत्य विषयम्, संशयम्, पूर्वपक्षम्, उत्तरपक्षम्, प्रयोजनम्, सङ्गतिञ्च उपस्थाप्य ऊहापोहपूर्वकं तात्पर्यं निर्णीतमस्ति । अत एवेदं न्यायप्रस्थानमिति प्रोक्तम् ।

दुरूहस्यापि शास्त्रस्य सारल्येन कान्यात्मकशैल्याद्वैतवेदान्तस्य प्रस्तवनपूर्वकं स्वकीयानां जिज्ञासूनां शिष्याणां कृते ब्रह्मज्ञानार्थं प्रयतनमेवास्य प्रकरणग्रन्थस्य वैशिष्ट्यं वर्तते । ब्रह्मज्ञानस्य दुरूहतायाः सहजतायाश्च प्रदर्शक एकः श्लोकः, ब्रह्मसाक्षात्कारः कथं कर्तुं

शक्यतेऽस्मिन् विषयेऽपरः श्लोकश्च उदाहरणार्थं पादटिप्पण्यां प्रदत्तौ वर्तेते । एतच्छ्लोकाभ्यां स्थालीपुलाकन्यायेन 'सङ्क्षेपशारीरकम्' इव्याख्यस्य ग्रन्थस्य महत्तां विशेषताञ्च बोद्धुं जिज्ञासूनां पाठकानां कृते सहजं भविष्यति ।

अज्ञानजन्य आध्यासिके भ्रमात्मके बन्धने पतित्वा नैकजन्मतो विविधयोनिषु परिभ्रममाणो जीव एव संसारादस्मान्मुक्तये ब्रह्मजिज्ञासां करोति । अत एवाध्यासभाष्यस्य रचनानन्तरमाचार्यशङ्करेण ब्रह्मसूत्रे शारीरकमीमांसाभाष्यरूपेण प्रथमाद् 'अथातो ब्रह्मजिज्ञासे'ति सूत्रादारभ्यान्तिमं ५५५ तमम् 'अनावृत्तिःशब्दादि'ति सूत्रपर्यन्तं भाष्यं लिखितम् । सूत्रग्रन्थेषु भगवता श्रीवेदव्यासरचितोऽयं ब्रह्मसूत्रग्रन्थोऽन्येभ्यः सूत्रग्रन्थेभ्यो विशिष्टप्रकारकोऽस्ति । यतो हि ग्रन्थोऽयं प्रथमसूत्रादारभ्य चरमसूत्रपर्यन्तं सर्वैरपि ५५५ सूत्रैरुपनिषदामद्वैतब्रह्मपरकैर्मन्त्रैर्ग्रथिता सुन्दरमालेव सङ्ग्रथितोऽस्ति ।

एवंरीत्या विचारणेऽस्माकं प्राच्यजगत आस्तिकानां षण्णां दर्शनानां मध्ये ब्रह्मसूत्रग्रन्थोऽयमेव एको विशिष्टः सूत्रग्रन्थोऽस्ति, यः प्रारम्भतोऽन्तं यावद्वेदमन्त्रैरोतः प्रोतश्च वर्तते । सम्बन्धेऽस्मिन् सर्वेषां सूत्राणां विश्लेषणस्यात्राशक्यत्वेन प्रथमस्य 'अथातो ब्रह्मजिज्ञासे'ति सूत्रस्यान्तिमस्य 'अनावृत्तिःशब्दादि'ति सूत्रस्य च सङ्क्षिप्तविश्लेषणमिहोदाहरणरूपेण क्रियते । प्रथमे सूत्रे प्राप्तस्य अथ-शब्दस्यार्थो मङ्गलम्, अनन्तरम्, आरम्भः, प्रश्नः, कार्त्स्न्र्यमिति च भवन्ति तथापि सर्वानर्थान् नाङ्गीकृत्यात्र केवलमानन्तर्यार्थो ग्राह्य इति आचार्याणामभिमतम् । अथशब्दस्यानन्तर्यार्थग्रहणे वेदाध्ययनम्, साधनचतुष्टयम्, विषयः, अधिकारी, सम्बन्धः, प्रयोजनञ्च निर्धार्यन्ते । उपयुक्ते साधनचतुष्टये ब्रह्मज्ञानस्य प्रथमं साधनं नित्यस्यानित्यस्य च वस्तुनो विवेकोऽस्ति । एवंरीत्या विवेके कृते

'नित्यं वस्तु ब्रह्म, अनित्यञ्च ब्रह्मातिरिक्तं सर्वं मायिकं वस्तुजातमिति ज्ञानं भवति । एतज्ज्ञानञ्च श्रुत्या भवति । ब्रह्मज्ञानार्थं द्वितीयं साधनमस्य लोकस्य स्वर्गादिलोकानाञ्च भोगेऽनासक्ततास्ति । यथा लोकेऽस्मिन् कर्मार्जिता ऐहिका भोग्यपदार्थाः क्षयङ्गच्छन्ति तथैव पुण्यकर्माजिताः पारलौकिका भोग्यपदार्थाश्च क्षयङ्गच्छन्तीति बोधानन्तरं स्वर्गादिपरलोकभोगाच्च वैराग्यं भवतीति श्रुतिवचनानि प्राप्यन्ते ।

ब्रह्मज्ञानार्थं तृतीयसाधनरूपेण शमादिषट्साधनानि सन्ति, यत्र १. शम इति मनोनिग्रहोऽन्तरिन्द्रियाणां वशीकरणं वेति वर्तते । २. दमः चक्षुरादिबाह्येन्द्रियाणां निग्रहः । ३. स्वधर्मानुष्ठानमेवोपरमः । ४. शीतोष्णसुखदुःखादीनां सहनं तितिक्षा । ५. गरु-वेदान्तवाक्येषु विश्वास एव श्रद्धा । ६. चित्तस्यैकाग्रता समाधानमुच्यते ।

'अथातो ब्रह्मजिज्ञासे'ति सूत्रगतस्याथशब्दस्य सङ्क्षेपेण श्रुत्यनुरूपा चर्चा विहिता । इदानीम् 'अतः' इति शब्दस्य चर्चा क्रियते । 'अतः' हेतुत्वस्यानुवादकः शब्दोऽस्ति । 'अथ' इति शब्दस्य विवेचनार्थं प्रस्तुतानि उपनिषद्वाक्यानि 'तद्यथेह', 'परीक्ष्य लोकान्' इत्येतयोरभिव्यक्तस्य कर्मफलस्य 'यत्कृतकं तदनित्यमि'ति निश्चयेन अकृतकस्य ब्रह्मज्ञानस्य कृते श्रोत्रियस्य ब्रह्मनिष्ठस्य गुरोः समक्षं गच्छेदिति 'अतः' इति शब्दस्यार्थो भवति ।

सम्प्रति सूत्रगतं 'ब्रह्मजिज्ञासे'ति पदं परिचर्च्यते । एतद्व्युत्पत्तिं प्रदर्शयन् श्रीशङ्कराचार्यो 'ब्रह्मणो जिज्ञासे'त्यत्र 'ब्रह्मणः' इति पदे कर्मणि षष्ठी वर्तते, न तु शेष इति भाष्येऽलिखत् । यतो हि कर्मवाचकषष्ठ्याः स्वीकारेण 'ब्रह्मस्वरूपस्य जिज्ञासे'ति अर्थो निष्पद्यते परन्तु शेषषष्ठ्यां स्वीकृतायां 'ब्रह्मसम्बन्धिनी जिज्ञासे'ति अर्थो भवति । अतोऽत्र कर्मण्येव षष्ठी । धर्मजिज्ञासायाञ्च शबरस्वामिना

ब्रह्मजिज्ञासायामिव जिज्ञासेति पदस्य मुख्यार्थरूपेण इच्छामङ्गीकृत्य षष्ठीसमास एव कृतोऽस्ति।

एवंरीत्या 'ब्रह्मजिज्ञासे'ति पदस्यार्थो ब्रह्मणो जिज्ञासा, ब्रह्म ज्ञातुमिच्छा वेति बोधनन्तरं ब्रह्म किम् ?, तल्लक्षण–प्रमाणानि कानि ? इत्यादिजिज्ञासानां समुत्पत्तिः स्वाभाविकी खलु। यतो हि शिष्याय कस्यचन वस्तुन उपदेशं करोमीति गुरोः प्रतिज्ञामात्रेण न भवति, अपि तु तद्वस्तुनो लक्षणप्रमाणानि च गुरुणा वक्तव्यानीति दार्शनिकः सिद्धान्तोऽस्ति । तेनैव कारणेन ब्रह्मसूत्रस्य प्रथमे 'अथातो ब्रह्मजिज्ञासे'ति सूत्रे समुद्भूताया ब्रह्मणो लक्षण–प्रमाण–जिज्ञासाया उत्तरं द्वितीयेन 'जन्माद्यस्य यतः' इति सूत्रेण तटस्थलक्षणं स्वरूपलक्षणञ्च प्रदाय तृतीयेन 'शास्त्रयोनित्वादि'ति सूत्रेण प्रमाणञ्चोपस्थापितं वर्तते । सम्बन्धेऽस्मिन् प्रस्तुतायां ब्रह्मसूत्रकारिकायाञ्च समुल्लेखनाद् भूमिकायामस्यां सङ्केतमात्रं विहितम्।

इत्थम्प्रकारेण साधनसम्पन्नेन मुमुक्षुणा ब्रह्मज्ञानाय विधिना श्रोत्रियं ब्रह्मनिष्ठं गुरुमुपसृत्य ब्रह्मोपदेशार्थं गुरुरनुरोद्धव्यः । गुरुः तदुत्तमायाधिकारिणे स्वशाखान्तर्गतस्य वेदस्य, तदन्तर्गतोपनिषदो महावाक्यस्य चोपदेशं प्रयच्छति। श्रवणानन्तरं तेन दीर्घकालं यावद् मननं निदिध्यासनञ्च कर्तव्ये। तदनु ब्रह्मसाक्षात्कारो भवति।

सन्दर्भेऽस्मिन् बृहदारण्यकोपनिषदि श्रोत्रियं ब्रह्मनिष्ठं गुरुं याज्ञवल्क्यं प्रति शास्त्रार्थक्रमे विदुषोषस्तचाक्रायणेन "यत्साक्षादपरोक्षं ब्रह्म एव सर्वान्तर आत्मा, तदुपदेशं कुर्वि"ति प्रोक्तमासीत्। एतस्मात् सर्वान्तर आत्मैव ब्रह्म वर्तते, तत्प्राप्तये हि 'अथातो ब्रह्मजिज्ञासे'त्यादिषु सूत्रेषु शाङ्करभाष्यस्य प्रणयनमभवदिति अनुभूयते।

ब्रह्मसूत्रस्य प्रथमे 'अथातो ब्रह्मजिज्ञासे'ति तैत्तिरीयोपनिषदः

'तद्विजिज्ञासस्व तद्ब्रह्मे'ति मन्त्रतो जिज्ञासा प्रारभ्यते । ब्रह्मसाक्षात्कारानन्तरमन्तिमं सूत्रं बृहदारण्यकोपनिषदः 'तेषां न पुनरावृत्तिरि'ति छान्दोग्योपनिषदो 'न च पुनरावर्तते' इति च मन्त्रावाधृत्य 'अनावृत्तिः शब्दादि'ति प्रणीतं वर्तते । श्रोत्रियस्य ब्रह्मनिष्ठस्य गुरोः सकाशात् स्वकीयं महावाक्यं पञ्चाग्निविद्याञ्च श्रुत्वा मुमुक्षुरर्चिरादिमार्गेण कैवल्यं निरतिशयं मोक्षं वा प्राप्नोति । पूर्वमपि ब्रह्म आसीत्, ब्रह्मसाक्षात्कारानन्तरञ्च ब्रह्मैव भवति, पुनर्मानवावर्ते जन्ममृत्योर्दुश्चक्रे वा नागन्तव्यमिति तात्पर्यमुक्तस्य मन्त्रात्मकस्य सूत्रस्य दृश्यते ।

ब्रह्मसूत्रस्य प्रथमे 'अथातो ब्रह्मजिज्ञासे'ति सूत्रे ब्रह्मजिज्ञासाया उपक्रमः प्रस्तुतोऽस्ति । ब्रह्मजिज्ञासारूपिण्या अपूर्वतायाः कृते विविधैर्मन्त्रमयैः सूत्रैरभ्यासे प्रवर्त्यार्थवादोपपत्तिपूर्वकमन्ते 'अनावृत्तिः शब्दादि'ति सूत्रेण उपसंहारः कृतोऽस्ति । एवंरीत्या षड्विधलिङ्गतात्पर्यनिर्णयस्य पूर्णतः पालनात्र न्यायप्रस्थानात्मके ब्रह्मसूत्रेऽवलोक्यते । उपक्रमात्मकस्य प्रथमस्य सूत्रस्य उपसंहारात्मक-स्यान्तिमस्य सूत्रस्य च मध्येऽध्यायेषु, पादेषु, अधिकरणेषु च प्राप्तानि कानिचन सूत्राणि उपर्युक्तसन्दर्भस्याभ्यासायात्र प्रस्तोतुं सान्दर्भिकं मन्ये– ईक्षतेर्नाशब्दम्, आनन्दमयोऽभ्यासात्, ज्योतिश्चरणाभिधानात्, शास्त्रदृष्ट्या तूपदेशो वामदेववत्, अत्ता चराचरग्रहणात्, गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्, भूमा सम्प्रसादध्युपदेशात्, अक्षरमम्बरान्तधृतेः, ज्योतिर्दर्शनात्, सुषुप्त्युत्क्रान्त्योर्भेदेन, तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्य-विमोक्षिप्रसङ्गः, भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्, श्रुतेस्तु शब्दमूलत्वात्, लोकवत्तु लीलाकैवल्यम्, नासतोऽदृष्टत्वात्, उत्पत्त्यसम्भवात्, स्याच्चैकस्य ब्रह्मशब्दात्, अतः प्रबोधोऽस्मात्, फलमत

उपपत्तेः, आत्मशब्दाच्च, यावदधिकारमवस्थिति-राधिकारिकाणाम्, आवृत्तिरसकृदुपदेशात्, आत्मेति तूपगच्छन्ति ग्राहयन्ति च तदधिगम उत्तरपूर्वार्धयोरश्लेषविनाशौ तद्व्यपदेशात्, रश्म्यनुसारी, मुक्तः प्रतिज्ञानात्, सङ्कल्पादेव तु तच्छ्रुतेः, जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ।

एवंरीत्या ब्रह्मसूत्रे षड्विधानामुपक्रमादिलिङ्गानां तात्पर्यनिर्णयार्थं पूर्वापरविचारस्य दृष्टत्वात् शास्त्रमिदं ब्रह्मसाक्षात्कारार्थं निर्विवादमेकं साधनमस्तीति वक्तुं शक्यते । ब्रह्मसूत्रविषये श्रीमद्भगवद्गीतायाञ्च 'ब्रह्मसूत्रपदैश्चैवे'ति उल्लिखितमस्ति । एतस्य व्याख्या आचार्यशङ्करेणाचार्यैरन्यैश्च कृतास्ति ।

ब्रह्मसूत्रस्य शाङ्करभाष्यं प्रस्थानत्रय्यां न्यायप्रस्थानं वर्तते । भगवता वेदव्यासेन प्रणीतं वेदान्तसूत्रं ब्रह्मसूत्रमिति कथ्यते । वेदव्यासो भगवदवताररूपेण स्वीकृतोऽस्ति । अर्थवादरूपेण स ब्रह्म–विष्णु–शिवरूपेण मतोऽस्ति ।

प्रस्थानत्रय्यां परिगणितमिदं ब्रह्मसूत्रं तर्कप्रस्थानमिति निगद्यते । ब्रह्मसूत्रं ब्रह्ममीमांसासूत्रम्, वेदान्तसूत्रम्, भिक्षुसूत्रम्, उत्तरमीमांसेति उच्यते । सूत्रस्य परिभाषा शास्त्रेषु प्राप्यते । अतीव सारपूर्णम्, अल्पाक्षरैर्गभीरार्थद्योतकम्, व्यर्थतायुक्ताक्षररहितम्, दोषशून्यम्, सङ्क्षिप्तशब्दसमूहयुतञ्च सूत्रं भवतीति विद्वद्भिः कथितमस्ति ।

दर्शनीयतमस्य दर्शनस्य मूलसूत्रग्रन्थे ब्रह्मसूत्रे विविधैर्विद्वद्भिः स्वसम्प्रदायानुसारेण भाष्याणि वृत्तयश्च लिखिताः सन्ति । अत्र तेषां सामान्यपरिचयमात्रं प्रदीयते । तेषु भाष्येषु भेदाभेदसम्प्रदायस्याचार्यस्य भास्करस्य भास्करभाष्यम्, विशिष्टाद्वैतसम्प्रदायस्याचार्यस्य रामानुजस्य श्रीभाष्यम्, द्वैतसम्प्रदास्याचार्यस्य पूर्णप्रज्ञभाष्यम्, द्वैताद्वैतसम्प्रदायस्याचार्यस्य निम्बार्कस्य वेदान्तपारिजातग्रन्थः,

शैवविशिष्टाद्वैतस्याचार्यस्य श्रीकण्ठस्य शैवभाष्यम्, वीरशैव-विशिष्टाद्वैतसम्प्रदायस्याचार्यस्य श्रीपतेः श्रीकरभाष्यम्, शुद्धाद्वैत-सम्प्रदायस्याचार्यस्य वल्लभस्याणुभाष्यम्, अविभागाद्वैतस्याचार्यस्य विज्ञानमिश्रस्य विज्ञानामृतभाष्यम्, अचिन्त्यभेदाभेदस्याचार्यस्य बलदेवस्य गोविन्दभाष्यम्, रेणुकाचार्यस्य शक्तिविशिष्टाद्वैतभाष्यञ्च वर्तन्ते।

सूत्राणां सङ्क्षिप्तत्वेन सूत्रेषु भाष्यं प्रणीतम् । भाष्यस्य स्वरूपविषये च विद्वद्भिः परिभाषा प्रदत्तास्ति । सूत्रानुसारेण पदैः सूत्रव्याख्यानपुरःसरं शङ्कासमाधानेन यत्र शास्त्रसिद्धान्तप्रतिपादनं क्रियते, तदेव भाष्यमिति विदुषामभिमतम्।

भाष्यरचनानन्तरञ्च भाष्यगतां दुरूहतामस्पष्टताञ्च निराकर्तुं परवर्तिभिराचार्यैर्वृत्ति–टीका–काव्य–निबन्ध–व्याख्यान–विवरणानि रचितानि सन्ति । एवंरीत्या रचितेभ्यो ग्रन्थेभ्यो विद्वद्भिरनेकानि नामानि प्रदत्तानि सन्ति– (१) प्रकरणग्रन्थः (२) वादग्रन्थः (३) आकरग्रन्थः।

**१. प्रकरणग्रन्थः**

यस्मिन् शास्त्रीयाभिः परिभाषाभिः सहैव अल्पयुक्तिभिः सङ्क्षेपेण शास्त्रव्याख्या क्रियते, ते हि प्रकरणग्रन्थाः कथ्यन्ते । ये ग्रन्थाः शास्त्रस्य केनचित् पक्षेण सम्बद्धा भवन्ति, अंशतः तत्कार्यं कुर्वन्ति वा, त एव प्रकरणग्रन्थाः प्रोच्यन्ते।

**२. वादग्रन्थः**

नैकानि युक्ति–प्रयुक्ति–प्रमाणानि समाश्रित्य पूर्वपक्षमुत्तरपक्षञ्च प्रदर्श्य सूत्र–भाष्ययोः सिद्धान्तान् पूर्णतः समर्थ्य लिखिता ग्रन्था वादग्रन्थाः कथ्यन्ते।

### ३. आकरग्रन्थः

वेदाः, उपनिषदः, रामायणम्, महाभारतम्, पुराणानि, सूत्रग्रन्थाः, सूत्रग्रन्थेषु लिखितानि भाष्याणि, वृत्तयः, वार्तिकानि, टीकाः, टिप्पण्यश्च आकरग्रन्थत्वेन व्यवह्रियन्ते।

आचार्येण श्रीशङ्करेण कृतं ब्रह्मसूत्रभाष्यं शाङ्करभाष्यमिति प्रोच्यते। भाष्यमिदं शारीरकभाष्यञ्च कथ्यते। शरीरं मलमूत्रादीनां पिण्डम्, तस्मिन् कुत्सिते शरीरे विद्यमानस्य परमात्मनो विचारकत्वेन शारीरकभाष्यमिति अस्य नाम। शङ्कराचार्यस्येदं सर्वोत्कृष्टं प्रसिद्धमद्वैतपरकं भाष्यम्। भाष्यमिदं प्रसन्नम्, सरलम्, तर्कपूर्णम्, प्रमाणयुक्तम्, श्रुतिसम्मतम्, गम्भीरपदावलीयुक्तञ्च वर्तते। अयं सर्वमान्यस्याद्वैत-वेदान्तस्यामूल्यो ग्रन्थोऽस्ति। दर्शनमिदं दर्शनीयतममिति कथ्यते।

ब्रह्मसूत्रस्याध्यायेषु, पादेषु, अधिकरणेषु च ऐकमत्ये प्राप्तेऽपि सूत्रसङ्ख्यायां मतैवैविध्यमवाप्यते। शङ्कराचार्यमतेन १९१ अधिकरणानि, ५५५ सूत्राणि च सन्ति। रामानुजस्य श्रीकण्ठस्य च मतेन ५४५ सूत्राणि सन्ति। भास्करमतेन ५४७ सूत्राणि सन्ति। निम्बार्कमतेन ५४९, मध्वमतेन ५६२, बलदेव–विज्ञानभिक्ष्वोर्मतेन च ५५६ सूत्राणि सन्ति। वल्लभमतेन तु शङ्करमतेनेव ५५५ सूत्राणि सन्ति।

शाङ्करभाष्यानुसारेण ब्रह्मसूत्रे ५५५ सूत्राणि, १९१ अधिकरणानि च सन्ति चेद् ग्रन्थेऽस्मिन् समन्वयः, अविरोधः, साधनाध्यायः, फलाध्यायश्चेति चत्वारोऽध्यायाः सन्ति। एतस्याध्यायविभागो मुनिना श्लोकबद्धो विहितोऽस्ति। अस्य प्रत्यध्यायं चत्वारो पादाः सन्ति। शाङ्करभाष्यमाकारदृष्ट्या विषयदृष्ट्या च गभीरमस्ति।

ग्रन्थेऽस्मिन् जिज्ञासोः प्रवेशः, साफल्यप्राप्तिश्च कठिनो विषयः । अतो जिज्ञासूनां सामान्यपाठकानाञ्च कृते सुगमतासम्पादनायास्य दुरूहग्रन्थस्य शाङ्करभाष्यानुसारेणैव यथासम्भवं सङ्क्षेपीकरणाय सरलीकरणाय च प्रयत्नोऽत्र विहितोऽस्ति । सम्बद्धाधिकरणान्तर्गतानि सूत्राणि तत्र तत्र पादटिप्पण्यां प्रदत्तानि सन्ति । एवञ्च जिज्ञासूनां पाठकानां सुगमतायै ग्रन्थान्ते समग्राणि सूत्राणि सार्थानि प्रदत्तानि सन्ति ।

ब्रह्मसूत्रशाङ्करभाष्ये महत्त्वपूर्णा विषया अध्यायेषु, पादेषु, अधिकरणेषु च विभज्य विश्लेषणपूर्वकं व्याख्याता वर्तन्ते । प्रत्यधिकरणमत्र विषयः, संशयः, पूर्वपक्षः, उत्तरपक्षः, सङ्गतिश्चेति पञ्चावयवैः तत्त्वनिर्णयः कृतोऽस्ति । अस्मिन्नत्यन्तमूहापोहपूर्वकं श्रूतिस्मृति–प्रत्यक्षादिप्रमाणाधारेणाद्वैतब्रह्म प्रतिपादितमस्ति । अत्र मया तेषामेव विषयाणां सङ्क्षेपेण समुल्लेखनायासः कृतः । अत्रानन्दाश्रमप्रकाशितायाः स्वामिभारतीतीर्थमुनिकृताया वैयासिकन्यायमालाख्याया ब्रह्मसूत्रकारिकाया उपस्थापनञ्चाधि-करणानामादौ सर्वत्र विहितमस्ति ।

ब्रह्मसूत्रशाङ्करभाष्यस्य प्रथमे समन्वयाध्याये चत्वारः पादाः सन्ति । प्रथमे पादे ११ अधिकरणानि, ३१ सूत्राणि च सन्ति । द्वितीये पादे ७ अधिकरणानि, ३२ सूत्राणि सन्ति । तृतीये पादे १३ अधिकरणानि, ४३ सूत्राणि सन्ति । चतुर्थे पादे ८ अधिकरणानि, २८ सूत्राणि सन्ति । द्वितीयेऽध्याये प्रथमे पादे १३ अधिकरणानि, ३७ सूत्राणि सन्ति । तस्य द्वितीये पादे ८ अधिकरणानि, ४५ सूत्राणि सन्ति । तृतीये पादे १७ अधिकरणानि, ५३ सूत्राणि सन्ति । चतुर्थे पादे ९ अधिकरणानि, २२ सूत्राणि सन्ति । तृतीयस्याध्यायस्य प्रथमे

पादे ६ अधिकरणानि, २२ सूत्राणि सन्ति । तृतीयस्याध्यायस्य प्रथमे पादे ६ अधिकरणानि, २७ सूत्राणि सन्ति । द्वितीये पादे ८ अधिकरणानि, ४१ सूत्राणि सन्ति । तृतीये पादे ३६ अधिकरणानि, ६६ सूत्राणि सन्ति । चतुर्थे पादे १७ अधिकरणानि, ५२ सूत्राणि सन्ति । चतुर्थस्याध्यायस्य प्रथमे पादे १४ अधिकरणानि, १९ सूत्राणि सन्ति । द्वितीये पादे ११ अधिकरणानि, २१ सूत्राणि सन्ति । तृतीये पादे ६ अधिकरणानि, १६ सूत्राणि सन्ति । चतुर्थे पादे ७ अधिकरणानि २२ सूत्राणि च सन्ति । प्रथमस्याध्यायस्य प्रथमपादस्य प्रथमाधिकरणस्य प्रारम्भात्पूर्वं ब्रह्मसूत्रशाङ्करभाष्यस्योपोद्घात-रूपेणाचार्येण शङ्करेणात्यन्तं महत्त्वपूर्णमध्यासभाष्यं लिखितमस्ति ।

प्रस्थानत्रय्यामिदं ब्रह्मसूत्रशाङ्करभाष्यं तर्कप्रस्थानं न्यायप्रस्थानं वा वर्तते । महर्षिव्यासप्रणीतानि ब्रह्मसूत्रग्रन्थस्थानि सूत्राणि स्वतो दुरूहाणि सन्ति । तेषु चाचार्यशङ्करेणातीव प्रौढसंस्कृतेन न्यायशैल्या प्रणीतं ब्रह्मज्ञानपरकं भाष्यं ततोऽपि दुरूहं वर्तते । अस्मिन् ग्रन्थे मया दुरूहतायाः त्रिवेणी दृष्टा वर्तते, प्रथमा ब्रह्मज्ञानस्य, द्वितीया सूत्राणाम्, तृतीया च शाङ्करभाष्यस्य । अतो दुर्बोध्योऽस्ति ग्रन्थोऽयम् । चिरकालस्याभ्यासेन चिन्तनेन मननेन च मया ब्रह्मसूत्रसारं रचयितुं धृष्टता प्रदर्शितासीत् । दशवर्षेभ्यः पूर्वं २०६७ वैक्रमाब्देऽधिकरणाधारेण ब्रह्मसूत्रसारनामकं ग्रन्थं ब्रह्मजिज्ञासूनां मुमुक्षूणां कृते लिखित्वा प्रकाशित आसीत्, यस्यान्ते सर्वेषां सूत्राणामर्थाश्च प्रदत्ता आसन् । असौ गद्यात्मको ग्रन्थोऽवर्तत । ब्रह्मसूत्रस्य सारलेखनमात्रेण मनसोऽसन्तोषाद् उपनिषत्कारिका, ब्रह्मसूत्रकारिका च मया लिखिते ।

ब्रह्मसूत्रं विना गुरुं स्वयमधीत्य बोधो दुष्करः । सामान्याः सूत्रग्रन्था अपि तत्तद्विषयविदुषो गुरोः सकाशाद् विधिपूर्वकमधीत्यैव चिरकालेन

बुद्धिवृत्तौ समारोहन्ति। तेषु सूत्रग्रन्थेषु ब्रह्मसूत्रमिदं गूढग्रन्थः खलुः।

प्रस्थानत्रय्यां समागतानि सर्वाणि प्रस्थानानि सर्वेषां वेदान्तसम्प्रदायानां कृत आधारग्रन्थत्वेन गृह्यन्ते । अद्वैत-वेदान्तादन्यसम्प्रदायानामाचार्यैः स्वसिद्धान्तानुसारी द्वैतपरकोऽर्थो विहितोऽस्ति।

प्रसङ्गेऽस्मिन्नत्रान्ययोः प्रस्थानयोः चर्चां हित्वा केवलं ब्रह्मसूत्रस्य, ब्रह्मसूत्रकारिकायाश्च समासेन चर्चा क्रियते । आद्यजगद्गुरुणा भगवत्पादेन श्रीशङ्कराचार्येण ब्रह्मसूत्रे श्रुतिसम्मतमद्वैतपरकं भाष्यं लिखितमस्ति, यच्छाङ्करभाष्यमुच्यते। अन्य आचार्याश्च शाङ्करभाष्यादेव प्रस्थानत्रय्यां भाष्यलेखनाय प्रेरणां प्रापुः परन्तु अन्यभाष्यैः तुलनायां शाङ्करभाष्यं विशिष्टं दृश्यते। यतो हि भाष्येऽस्मिन् प्राञ्जलस्योदात्तस्य च संस्कृतस्य प्रयोगोऽस्ति। श्रुतिसम्मतस्याद्वैतसिद्धान्तस्य प्रतिपादनाय अत्राकाट्यानि श्रौतप्रमाणानि प्रस्तुतानि सन्ति । प्रमाणप्रस्तवनस्य सन्दर्भे वादकथामाधृत्य पूर्वपक्षाणा-मुपस्थापनम्, पूर्वपक्षस्य वेदविरुद्धानां मतानां श्रौतप्रमाण–तदनुकूलयुक्त्यादिभिः खण्डनं कृत्वा स्वस्य श्रुतिसम्मतस्याद्वैतसिद्धान्तस्य प्रतिष्ठापनं मण्डनञ्च कृतमस्ति। अनया दृष्ट्या च शाङ्करभाष्यमतिविशिष्टं प्रतिभाति।

यथा विषयानुसारेणाधिकरणानि विभज्य भगवता वेदव्यासनेन ब्रह्मसूत्रस्य रचना कृतास्ति, तदनुसारेणैव श्रीशङ्कराचार्येण भाष्यमकारि। अयञ्च २०६७ वैक्रमाब्दस्याक्षयतृतीयादिने ब्रह्मसूत्रसारग्रन्थस्य प्रकाशनमाचार्यसरण्यैवाधिकरणानि आधृत्य कृतवान् आसम् । भामतीपतेराचार्यवाचस्पतिमिश्रस्य कारिकानुसारेण ब्रह्मसूत्रसारवद् ब्रह्मसूत्रकारिका च विषयम्, संशयम्, पूर्वपक्षम्, उत्तरपक्षम्, प्रयोजनम्, सङ्गतिञ्च प्रस्तूय समासेन विरचिता वर्तते।

एवं विवेचनेनाद्वैतवेदान्ते ब्रह्मसूत्रेण सहैव प्रस्थानत्रय्यन्तर्गतानामुपनिषदां श्रीमद्भगवद्गीतायाश्च कियन्महत्त्वमस्तीति बौद्धुं शक्यते। भगवता श्रीशङ्कराचार्येण एषु त्रिष्वेव ग्रन्थेषु गहनं भाष्यं लिखितमस्ति। अद्वैतवेदान्तस्य परम्परायां तद्भाष्याणि शाङ्करवेदान्तस्य प्रस्थानत्रयीति नाम्नैव प्रथितानि सन्ति। आद्यजगद्गुरुणा श्रीशङ्कराचार्येण प्रस्थानत्रय्यां भाष्यप्रणयनानन्तरमेव भक्तिसम्प्रदायानां द्वैतपरम्पराणाञ्च आचार्याः तेषु ग्रन्थेषु भाष्यं लिखित्वा जगद्गुरुरित्युपाधिना समलङ्कृता बभूवुः। वर्तमानसमये च प्रज्ञाचक्षुषाचार्यरामभद्रेण प्राचीनशास्त्रीयमान्यताया मानदण्डस्य चानुसारेण प्रस्थानत्रय्यां स्वसम्प्रदायमाधृत्य प्रौढसंस्कृतभाषया भाष्यं विरचय्य जगद्गुरुरित्युपाधिः प्राप्तः। एतदतिरिक्तानां स्वनामधन्यानां जगद्गुरूणां विषयेऽनभिज्ञताप्रकटनमेवोचितं मन्ये।

विवेक–वैराग्यादिषट्सम्पत्तिसम्पन्नो मुमुक्षुरेव ब्रह्मजिज्ञासाया अधिकारी भवति। वैराग्यस्य विलासाः खलु षट् सम्पत्तयः, अन्ते च मुमुक्षा भवति। एतानि साधनानि अन्तःकरणस्य जागरणाय सन्ति। ईश्वरानुग्रहं विना मनुष्यत्वम्, मुमुक्षुत्वम्, ब्रह्मज्ञानिनो गुरोः संश्रयश्च दुर्लभतां भजन्ते। दुःखानुभूतेः पूर्वं सुखस्यानन्दस्य वा कल्पनं न कश्चित् करोति। यदा मनुष्यो दुःखमनुभवति, शाश्वतं सुखञ्च कामयते, तदैवानन्दस्यान्वेषणाय स प्रवर्तते। अनादि अज्ञानम्, संसारः, अन्तःकरणात्मकेभ्यो मनोबुद्धिचित्ताहङ्कारेभ्यो देहपर्यन्तानि च सर्वाणि वस्तूनि अज्ञानकल्पितानि सन्ति। अज्ञानकल्पिताभिः सुदृढशृङ्खलाभिः सुबद्धतायाः कष्टानुभूतिं विना मनुष्यः ततः स्वात्मनो मुक्तिं न कामयते। यदा तादृशी अनुभूतिर्भवति, तदैव तस्मिन् ब्रह्मजिज्ञासा समुदेति। स्वस्वरूपज्ञानस्यात्मज्ञानस्य

ब्रह्मसाक्षात्कारस्य वानन्तरं हि कल्पितं सर्वं जगत् सद्यो ध्वंसते।

अन्विष्य मोक्षप्राप्तिर्न भवति । तस्य वासः क्वचिदेकस्मिन् स्थाने, ग्रामे, ग्रामान्तरे वा न भवति । स तु अज्ञानात्मकस्य हृदयग्रन्थेर्भेदनानन्तरं हृदयान्तः साक्षात्कृतो भवति। स्वात्मस्वरूपा नित्या स्वप्रकाशात्मिका ब्रह्मात्मिका सावस्था।

प्रतिबन्धात्मकस्यानजन्यस्य भ्रमस्य निवारणं केवलं ज्ञानेन भवति । ज्ञानार्थं जिज्ञासुना मुमुक्षुणा विचारात्मकमद्वैतवेदान्तजन्यं ब्रह्मज्ञानं कर्तव्यम्। कैश्चिदपि मायिकसाधनैरन्तःकरणैर्बहिष्करणैर्वा ब्रह्मज्ञानं भवितुं न शक्नोतीति श्रुत्या निर्दिष्टं वर्तते। यतो हि वाणी ब्रह्मपर्यन्तमप्राप्य मनसा सह निवर्तते। मनसो वाण्याश्च ब्रह्मपर्यन्तमप्राप्य निवर्तनेऽपि मौनावस्थां प्राप्तैर्ज्ञानिभि-र्ब्रह्मसाक्षात्कारः क्रियत इति आचार्येण श्रीशङ्करेण लिखितमस्ति।

'आदित्यवर्णम्', 'भारूपः', 'स्वयंज्योतिरित्यादिश्रुतिभिरात्मन आकारवत्त्वे सङ्केतितेऽपि 'अरूपम्', 'न सदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् (श्वे.उ.४।२०)', 'अशब्दमस्पर्शम् (क.उ. १।३।१५) इत्यादिभिः श्रुतिभिः तन्निषेधात् साधनैर्ब्रह्मसाक्षात्कारो-ऽसम्भव एव दृश्यते।

भगवत्पादस्य श्रीशङ्कराचार्यस्यानन्तरमद्वैतवेदान्तस्य परम्परायां प्रबले द्विविधे प्रस्थाने दृश्येते– प्रकाशात्मयतेर्विवरणप्रस्थानम्, वाचस्पतिमिश्रस्य भामतीप्रस्थानञ्च । विवरणप्रस्थानं जीवं ब्रह्मप्रतिबिम्बं मन्यते चेद् भामतीप्रस्थानं मायिकस्य गन्ध–स्पर्श–रसादेः प्रतिबिम्बो न भवति चेन्नीरूपस्य ब्रह्मणः प्रतिबिम्बः कथं सम्भवतीति तर्कं प्रदर्श्य प्रतिबिम्बवादस्य खण्डनेन घटादिदृष्टान्तसाहाय्येनावच्छेदवादं पुरस्करोति । अस्मदन्तःस्थानां

मायिकानां पञ्चानां ज्ञानेन्द्रियविषयाणामेवाकारो न भवति चेद् मायातत्कार्येभ्यो भिन्नस्य निष्कलस्य, निरवद्यस्य, निरञ्जनस्य, निरवयवस्य, निरतिशयस्य, शुद्धस्य च ब्रह्मण आकारः कथं सम्भवेत् ? आचार्यो गौडब्रह्मानन्द आकारस्य परिभाषां प्रदर्शयन् आकार इति घटपटादिवस्तूनां पारस्परिकी विलक्षणतैवेति अचकथत्। एवंरीत्या मायिकवस्तूनामाकारस्य सत्त्वेऽपि ब्रह्मज्ञानिनो मोक्षावस्थायां विशुद्धज्ञानप्रकाशिता ब्रह्माकारा चरमवृत्तिर्भवति, तयैव च मायिकावरणस्य भङ्गत्वे जीवब्रह्मणोरैक्यात्मको मोक्षो भविष्यति। सैव चरमवृत्तिर्विद्येति कथ्यते।

ब्रह्मसाक्षात्कारस्य सन्दर्भे लघुचन्द्रिकाया लोकप्रसिद्धं मायिकमाकारं न गृहीत्वा वेदान्तगतः पारिभाषिक आकारो ग्राह्यः। सोऽस्ति आत्मनोऽत्यन्तं निर्मलत्वम्, स्वच्छत्वम्, सूक्ष्मत्वञ्च। तथैव बुद्धिश्च आत्मवदतीव निर्मला, स्वच्छा, सूक्ष्मा चापेक्ष्यते। तदैव सा ब्रह्मचैतन्यस्याकारेण भासिता भवितुं शक्नोति। एतादृशीमवस्थामेव आत्मसाक्षात्कार इति वक्तुं शक्यते।

आत्मज्ञानं स्वप्रकाशमस्ति, ब्रह्मस्वरूपञ्च तत्। यथा स्वस्य स्थूलं शरीरं ज्ञातुं कस्यचन लौकिकस्य वैदिकस्य वा प्रमाणस्यापेक्षा न भवति, चथैव स्वान्तःस्थस्य द्रष्टुः, साक्षिणः, सर्वान्तरस्य, अप्रमेयस्य चात्मनो ज्ञानाय विवेकिनां कृते प्रमाणान्तरं नापेक्ष्यते।

यथा प्रदीप्तं दीपकं द्रष्टुमपरो दीपको नावश्यकः तथैव स्वप्रकाशं ज्ञानं ज्ञातुं ज्ञानान्तरं नावश्यकम्। ज्ञानमतीव प्रत्यक्षं वर्तते। अतो ज्ञानाय प्रयत्नो नावश्यकः परन्तु केवलमनात्मबुद्धेर्निवृत्तये प्रयत्न आवश्यक इति श्रीशङ्कराचार्यो लिखति।

अनात्मबुद्धिरवभासः, अज्ञानम्, भ्रमः। यस्मिन् अधिष्ठाने

तद्वस्तु नास्ति, तत्रैव तद्वस्तुबुद्धिः, एकस्मिन् वस्तुनि अपरस्य वस्तुनः प्रकाशनं वा भ्रमः। सर्पाभाववत्यां रज्जौ सर्पदर्शनं भ्रमः। अतोऽतस्मिन् तद्बुद्धिरेव अध्यासो भ्रमो वा। असतः सर्पस्य रज्जौ दर्शनेन तत्र सर्पबुद्धिरध्यासः। रज्जौ सर्पस्याध्यासे भ्रमे वा रज्ज्वाः सामान्यांशस्य ग्रहणं विशेषांशस्य चाग्रहणं भवति। तेनैव तत्र सर्पभ्रमो जायते। यतो हि अधिष्ठानस्य सर्वथा ज्ञानावस्थायां भ्रमो न भवति, सर्वथाज्ञाने च भ्रमो न भवति। अत्यन्तमन्धकारे रज्जौ सर्पभ्रमो न भवति, प्रचण्डप्रकाशे च भ्रमो न भवति। परिमलकारोऽधिष्ठानाद्भिन्नसत्ताकस्य वस्तुनः प्रतीतिरेवाध्यास इति कथितवान् वर्तते। अध्यासविषये प्रारम्भे हि चर्चा सम्पन्ना। अतोऽत्र समासेन चर्चामिमां समाप्य देहाध्यासस्य संसाराध्यासस्य च विषये समुल्लिख्यते। यद्यदध्यस्तं भवति, तत्तन्मिथ्येति अद्वैतवेदान्तसिद्धान्तः। सर्वेषां प्राणिनां पाञ्चभौतिकानि शरीराणि अधिष्ठानात्मकरज्जौ सर्प इव चिदात्मनि अध्यस्तानि सन्ति। पारमार्थिकसत्तावत्यात्मनि व्यावहारिकसद्ब्रह्माण्डम्, प्राणिशरीरम्, प्रातिभासिकसत्तावन्तो स्वप्नपदार्थाश्च अध्यासेनैव प्रतिभासन्ते।

एवमात्मानात्मनोः परस्पराध्यासे स्वरूपाध्यासः संसर्गाध्यासश्च जायेते। अनात्मन आत्मन्यध्यासः स्वरूपाध्यासोऽस्ति चेदनात्मनि आत्माध्यासः संसर्गाध्यासः। तथैव अन्योऽन्याध्यासः, परस्पराध्यासः, तादात्म्याध्यासः, ज्ञानाध्यासः, अर्थाध्यासः, धर्म्यध्यासः, धर्माध्यासश्चेति नैकप्रकारका अध्यासा भवन्ति।

अध्यस्तस्य वस्तुनो गुणेन दोषेण वाधिष्ठानं न किञ्चित् स्पृश्यते। रज्जुरूपिणि अधिष्ठाने दृष्टस्य सर्पस्य मलमूत्रविषादिनाधिष्ठानभूता रज्जुः किञ्चिदपि दूषिता न भवति। एवमेव शुक्तौ दृश्यमानस्य रजतस्य न कश्चन गुणः शुक्तौ न सङ्क्रामति, मरुभूमौ भासमाने

मृगमरीचिकारूपिणा जलेन तत्रत्या बालुका न किञ्चिदपि सिक्ता भवति। उदाहरणानामुदाहार्यै सङ्गत्या विचार्यते चेद् व्यष्टावात्मचैतन्यरूपिणि अधिष्ठानेऽध्यस्ताया अज्ञानजन्याया बुद्धेः कर्तृत्व–भोक्तृत्वादिदोषा निर्लेपमात्मानं दूषयितुं न शक्नुवन्ति। तथैव समष्टौ मायिकः सांसारिको दोषो गुणो वा जगत्प्रपञ्चस्याभिन्ननिमित्तोपादनकारणभूतं स्रष्टारं परमात्मानं स्प्रष्टुं न शक्नोति।

अविद्यात्मकोऽध्यासो यावान् अपि हेयः त्याज्यश्च भवतु, आत्मानात्मनोरध्यासेनैव ब्रह्माण्डं चलति । एतमेव निमित्तीकृत्य सर्वोऽपि लौकिको वैदिकश्च प्रमाणप्रमेयव्यवहारः प्रवृत्तोऽस्ति । एतावदेव न, सर्वाणि विधिनिषेधबोधकानि मोक्षपरकाणि शास्त्राणि च एतेनैव प्रवृत्तानि सन्ति।

उपर्युक्तोऽतीव सुदृढोऽध्यासोऽध्यारोपोऽभिधीयते। अध्यारोप इति वेदान्तस्य भाषायां सत्ये वस्तुनि मिथ्या वस्तुन आरोपोऽस्ति। उदाहरणार्थं सर्पाभाववत्यां रज्जौ सर्पत्वधर्मस्यारोपोऽध्यारोप इति आचार्यशङ्करो-ऽलिखत् । मिथ्या भ्रान्तिपूर्णं वा ज्ञानमध्यारोपः । शुद्धे निष्कले ब्रह्मणि अविद्ययाध्यारोपितो विवर्तितो वा प्रपञ्चः शास्त्रैरुदाहार्यत्वेन स्वीकृतोऽस्ति । व्यष्टौ तु जीवात्मनोऽन्तःकरणेऽज्ञानेनाध्यारोपिताः कर्तृत्व–भोक्तृत्व–प्रमातृत्वादयो मिथ्या मायिकः त्रिपुटीयुक्तः प्रपञ्चः स्वीकृतोऽस्ति।

परमात्मनि आरोपितस्य मिथ्या प्रपञ्चस्यापवादं प्रलयकाले कृत्वा परब्रह्मपरमात्मा स्वयं शुद्धः, स्वप्रकाशः, सच्चिदानन्दरूपश्च स्थास्यति । जीवात्मा तु स्वेनैवानुष्ठितानां कर्माकर्मविकर्मभिर-ध्यारोपिताभिः संस्कारवासनाभिः स्वकीयेऽन्तःकरणे सङ्गृहीतमध्यारोपं ब्रह्मज्ञानेन भस्मीकृत्य निष्कलङ्कः सन्नवतिष्ठते। तदनन्तरं जीवात्मा

पूर्वमपि ब्रह्म आसीत्तदानीञ्च ब्रह्मैव भवति।

सद्वस्तुनि असद्वस्तुनः कल्पनमेवाध्यारोपः। व्यवहारदशायां सदिव रज्जुः सर्परूपेण भासते। तत्र रज्जौ सर्पत्वबुद्धिरध्यारोपः परन्तु आत्मनि मिथ्या देहस्याध्यासोऽध्यारोपो वेति भवति। रज्जौ जातायाः सर्पत्वबुद्धेरपवादो निषेधो निवृत्तिर्वा भूत्वा रज्जुरेवावतिष्ठते। यथाप्तवाक्येन प्रकाशेन वा सर्पबुद्धेरपवादो भवति, तथैव आत्मनि जाताया देहात्मबुद्धेरपवादो ब्रह्मज्ञानेन भवति। तदानीमात्ममात्रमवशिष्यते। एवञ्च ब्रह्मणि अध्यारोपितं मिथ्या जगत् प्रलयावस्थायां निषिद्धं सद् ब्रह्ममात्रमवशिष्यते। अध्यारोपापवादाभ्यां निष्प्रपञ्चे ब्रह्मणि प्रपञ्चो दृश्यते, अन्ते प्रपञ्चस्यापवादेन निवृत्त्या निषेधेन वा शुद्धब्रह्ममात्रमवशिष्यते। एतदेव तथ्यं विविधानि शास्त्राणि शास्त्रकारैश्च विविधशैल्या वर्णितवन्तः सन्ति।

अज्ञानग्रसितेन जीवेनाध्यारोपेण कल्पितस्य जगतः, परमेश्वरत्वस्य, जीवत्वस्य च भेदेन ब्रह्मभावः कलुषीभूय जीवः संसृतेर्दुश्चक्रे पतति परन्तु ब्रह्म सदैव निर्लिप्तभावेन स्वस्वरूपे तिष्ठति। निष्कले स्वस्वरूपेऽज्ञानेनाध्यारोपवशात् स्वसृष्टाया भेददृष्टेरपवादेन निषेधेन वा जीवोऽपि जीवितावस्थायामेव ब्रह्मात्मभावमवाप्नोति।

स्वस्यैवाज्ञानेन सृष्टाया द्वैतावस्थाया व्यवस्थितरूपेणापाकरणं जीवेन करणीयम्। तदर्थमज्ञानरूपस्यान्धकारस्य निवारकं ब्रह्मज्ञान-प्रकाशजनकं गुरूपदेशमवाप्य तस्मादेव गुरोः सकाशात् स्ववेदस्य महावाक्यं श्रवणीयम्। तदनन्तरं निष्ठयानवरतं मनन-निदिध्यासनाभ्यामज्ञानजन्या द्वैतबुद्धिः तत्कारणमज्ञानञ्च समूलं विनङ्क्ष्यतः। ततोऽध्यारोपेण सृष्टस्य द्वैतप्रपञ्चस्य तत्कारणस्य च निषेधेन मुमुक्षुर्मुक्तो भविष्यति।

नैसर्गिकेण दुस्तरेण भ्रममूलकेनाध्यासेन मनुष्य एव न, अपि तु पश्वादयश्च परित्यक्ता न सन्ति । सर्वे वर्णा आश्रमादिव्यवस्थाश्च अध्यासमूलकाः सन्ति । यत्र यन्नास्ति, तत्र तत्सत्त्वबुद्धिरेवाध्यास इति पूर्वमेवोल्लिखितम् । अध्यासस्य प्रकारा एवं वर्तन्ते–
१. पुत्रभार्यादिर्गौणात्मनः पूर्णतापूर्णतादिबाह्यधर्माणामात्मनि अध्यासः ।
२. अहं स्थूलः, अहं कृश इत्यादीनां मिथ्या देहधर्माणामात्मनि अध्यासः ।
३. काम-सङ्कल्प-संशय-निश्चयादीनामन्तःकरणधर्माणामात्मनि अध्यासश्च ।

देह–पुत्र–कलत्रादिषु अहम्बुद्ध्या ममबुद्ध्या च सृष्टो बाह्यः संसारोऽनर्थोऽस्ति, तथैव कर्तृत्वभोक्तृत्वप्रमातृत्वरूप आन्तरः संसारश्च । अनर्थस्यास्य हेतुरध्यासोऽस्ति । एतेनैवाध्या-सेनात्मनो वास्तविकस्य स्वरूपस्य बोधो बाध्यते । अत एव सर्वानर्थहेतोरध्यासस्य निराकरणेन सर्वाधिष्ठानस्य, सर्वव्यापकस्य, चैतन्यस्वरूपस्यात्मनः साक्षात्कारद्वारा मोक्षं प्रापयितुमेव सर्वे वेदान्ताः, दर्शनानि, शास्त्राणि, गीता, ब्रह्मसूत्रम्, उपनिषदश्च प्रवृत्ताः सन्ति । वेदान्तशास्त्रस्य श्रवण–मनन–निदिध्यासद्वारा समुत्पन्नं ब्रह्मतत्त्वसाक्षात्काररूपं ज्ञानमज्ञानं नाशयति । अज्ञानस्य नाशानन्तरं तत्कार्यस्याध्यासस्य स्वतो बाधो भवति । ततः समग्रा अपि विधि–व्यवहाराः समाप्तिं गच्छन्ति । सच्चिदानन्दस्वरूप आत्मा केवलमवशिष्यते । तस्यामद्वैतस्थितौ भयञ्चान्तङ्गच्छति । तस्मादेव भयान्मुक्तिर्वेदान्तदर्शनस्य प्रयोजनमस्ति । अत एव दुःखस्यात्यन्तिकनिवृत्तये परमानन्दस्य प्राप्तिरूपमोक्षावाप्तये च जीवब्रह्मणोरैक्यसाक्षात्कारः कर्तव्यः । तदर्थमात्मविषये व्याख्यातस्य वेदान्तशास्त्रस्य श्रवणं मननं निदिध्यासनञ्च कर्तव्यम् । एतदेव तथ्यं सङ्केतयति श्रुतिः –“आत्मा

वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः।" वेदान्तदर्शनस्य चिन्तनं मननञ्च जीवनस्य सारः।

एवंरीत्या मुख्यात्मनि, मिथ्यात्मनि, गौणात्मनि चाध्यस्तमज्ञानमपाकर्तुं नैकेषु जन्मसु, युगेषु, कल्पेषु च सततं प्रयत्नः करणीयः। अध्यासो नहि सामान्यो विषय इति प्रदर्शनाय ब्रह्मसूत्रस्योपोद्घातेऽध्यासभाष्ये भगवत्पाद आचार्यः शङ्कर एतस्य विशेषतामेवं समुदलिखत्– अध्यासोऽनादिरनन्तो नैसर्गिको मिथ्याप्रत्ययरूपः कर्तृत्वभोक्तृत्वप्रवर्तकः सर्वलोकप्रत्यक्षश्च वर्तते।

अनर्थस्य मूलहेतुभूतस्याधिष्ठानेऽज्ञानेनाध्यारोपितस्य भ्रमात्मकस्याध्यासबन्धनस्य समूलं विनाशाय सर्वा अद्वैतपरा उपनिषदो वेदान्ताश्च प्रवृत्ताः सन्ति। तथ्यमेतद्विशिष्टीकुर्वन् अध्यासभाष्यस्यान्ते 'सर्वेषां वेदान्तानां यथा ब्रह्मात्मैकत्वं विषयोऽस्ति, तद्वयमस्यां शारीरकमीमांसायां प्रदर्शायिष्यामः' इति भगवान् श्रीशङ्कराचार्यः प्रोक्तवान् वर्तते।

सर्वप्रथमं ममाग्रजाय कारिकाया अस्या लेखनार्थं प्रेरकाय दर्शनशिरोमणये ब्रह्मलीनाय पण्डिताय मीनप्रसाद–नेपालवर्याय हार्दिकं श्रद्धाञ्जलिमर्पयामि। सारवच्छुभाशंसायाः कृते महेश–संन्यासाश्रमस्य पीठाधीशवर्याय सम्मान्याय अष्टोत्तरसहस्रश्रीविभूषिताय स्वामि–रमणानन्द–गिरिवर्याय हार्दं कार्तज्ञमभिव्यनज्मि। अस्य ब्रह्मसूत्रकारिकायाः सुललितया संस्कृतवाण्यानुवादेन संस्कृतकृतित्वसम्पादकाय प्राध्यापकाय लक्ष्मीकान्तवर्याय हार्दीं कृतज्ञतां विनिवेदयामि।

मनोयोगेन ग्रन्थमिममधीत्य वैदुष्यभावयित्रीं सम्मतिं प्रदाय ग्रन्थस्यास्य सम्पादनकार्यञ्च सम्यक् साधितवन्तं महेश–संस्कृत–

गुरुकुलस्य वेदान्तस्नातकं रोहिणीराज-तिमिल्सिनावर्यं प्रति हार्दिकमाभारभारं प्रकटीकरोमि । एवञ्च ग्रन्थस्यास्य सम्पादनायैव सहायायोपप्राध्यापकाय नेत्रप्रसादाऽधिकारिवर्याय, विभुप्रसादवर्याय तथैव सङ्गणक उट्टङ्कनादिकार्येण प्रकाशनयोग्यत्वसाधकाय खड्गप्रसाद-खनालवर्याय च हार्दिकान् धन्यवादान् प्रयच्छामि । ॐ ब्रह्मार्पणमस्तु ॥

२०७८ वैशाखः १३

सहस्रचन्द्रदर्शनस्य पूर्णतादिवसः　　　　विनीतः

शरत्कुमार-भट्टराई

# विषयसूची

| क्र.सं. | शीर्षकम् | पृष्ठम् |
|---|---|---|

## प्रथमः समन्वयाध्यायः

### तृतीयः पादः



## प्रथमः समन्वयाध्यायः

### चतुर्थः पादः

## द्वितीयोऽविरोधाध्यायः

### प्रथमः पादः



## द्वितीयोऽविरोधाध्यायः

### द्वितीयः पादः

## द्वितीयोऽविरोधाध्यायः

### तृतीयः पादः



## द्वीयोऽविरोधाध्यायः

### चतुर्थः पादः

## तृतीयःसाधनाध्यायः

### प्रथमः पादः



## तृतीयः साधनाध्यायः

### द्वितीयः पादः

## तृतीयःसाधनाध्यायः

## तृतीयः पादः

**तृतीयः साधनाध्यायः**

**चतुर्थः पादः**

**चतुर्थः फलाध्यायः**

**प्रथमः पादः**

**चतुर्थोऽध्यायः**

**द्वितीयः पादः**

## चतुर्थोऽध्यायः
### तृतीयः पादः



## चतुर्थोऽध्यायः
### चतुर्थः पादः

ॐ

**तत्सद्ब्रह्मणे नमः ।**

**ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।**
**पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥**
**ॐ शान्तिः ! शान्तिः !! शान्तिः !!!**

ग्रन्थकारकर्तृकमङ्गलाचरणम् –
यस्मिन् विवर्तितं विश्वं यस्मिन्नेव च संस्थितम् ।
यस्मिन्नेव प्रलीयेत तस्मै विश्वात्मने नमः ॥

वन्दे सद्भक्तियुक्तोऽहं गणनाथं गजाननम् ।
लेखने शक्तिरायातु सद्बुद्धिः शुभभावना ॥

सरस्वति ! जगन्मातर्बुद्धिं मे कुरु निर्मलाम् ।
पराविद्या त्वमेवाऽद्य मेधाशक्तिं प्रवर्द्धय ॥

अनुवादकर्तृकमङ्गलाचरणम् –
गुरुरेव गतिर्गुरुमेव भजे
गुरुणैव सहाऽस्मि नमो गुरवे ।
न गुरोः परमं शिशुरस्मि गुरो–
र्मतिरस्ति गुरौ मम पाहि गुरो ! ॥

गणेशो नः पायात् प्रणमतो गणेशं जगदिदं ?
गणेशेन त्रातं, नम इह गणेशाय महते ।
गणेशान्नाऽस्त्यन्यत् त्रिजगति गणेशस्य महिमा
गणेशे मच्चित्तं निवसतु गणेश ! त्वमव माम् ॥

कृष्णो रक्षतु मां सदैव सहसा कृष्णं भजे शाश्वतम्
कृष्णेनैव सुरक्षितं जगदिदं कृष्णाय तुभ्यं नमः ।
कृष्णान्नेव परात्परं परतरं कृष्णस्य सर्वं वशे
कृष्णे भक्तिरखण्डिता भवतु भो कृष्ण ! त्वमेवाश्रयः ॥

ओङ्कारं बिन्दुसंयुक्तं नित्यं ध्यायन्ति योगिनः ।
कामदं मोक्षदञ्चैव ओङ्काराय नमो नमः ॥

चिदात्मने प्रपूर्णाय तस्मै शून्यात्मने नमः ।
ब्रह्मणे कंस्वरूपाय खंस्वरूपाय ते नमः ॥

शङ्करः शङ्कराचार्यः सद्गुरुः शर्वसन्निभः ।
सर्वेषां शङ्कराः सन्तु सच्चिदानन्दरूपिणः ॥

शास्त्रं शारीरमीमांसा देवश्चन्द्रार्धशेखरः ।
आचार्याः शङ्कराचार्याः सन्तु जन्मनि जन्मनि ॥

सद्गुरुं प्रथमं वन्दे श्रीकृष्णं तदनन्तरम् ।
गुरुः पापात्मनां त्राता श्रीकृष्णस्त्वमलात्मनाम् ॥

श्रीभीमकान्तं जनकं शिवात्मकं
श्रीनीलमायां जननीं शिवात्मिकाम् ।
लक्ष्म्यादिकान्तोऽस्मि गणेशवत्तयोः
प्रदक्षिणीकृत्य नमामि पादयोः ॥

## अथ ब्रह्मसूत्रकारिका
## (अध्यासविचारः)

शिष्यः –

गुरो ! समाज्ञापयतु श्रौतमद्वैतदर्शनम् ।
शृणोमि सावधानेन सच्चिदाऽऽनन्ददायकम् ॥१॥

भवतोपनिषत्सारभूता या कारिका कृता ।
विषयेऽस्मिन् मनो मेऽद्य रमते चाऽभिनन्दति ॥२॥

ब्रह्मसूत्रं तु दुर्बोध्यं भाषायां सारभाषितम् ।
अद्वैतसिद्धिर्भवता सानुवादं प्रकाशिता ॥३॥

कृत्वाऽनुवादकार्याणि भक्तिज्ञानविवर्धनम् ।
विहितं शास्त्रभाण्डारं सद्ग्रन्थैः परिपूरणम् ॥४॥

सारांशे भगवद्गीता लिखिता च प्रकाशिता ।
कृतं सङ्क्षेपशारीरं संस्कृतेऽपि सुसंस्कृतम् ॥५॥

कष्टसाध्यं कार्यमेतद् भवता सहजायितम् ।
लिखितं तैरभूदेष अभ्यासः सहजायितः ॥६॥

भवतोपस्कृता रम्या सरलाः कारिका मया ।
गुरो ! सुपठितास्ताभ्यो जिज्ञासा मयि वर्द्धिता ॥७॥

पठितोपनिषद्गीता प्रस्थानत्रयमध्यतः ।
ब्रह्मसूत्राणि पठितुं जिज्ञासा मयि वर्द्धिता ॥८॥

प्रस्थानत्रयमध्येषु समधीते श्रुतिस्मृती ।
न्यायप्रस्थानमपि च जिज्ञासाऽधीतये मम ॥८॥

गुरुः –
जिज्ञासा प्रस्तुता रम्या गृहीत्वा प्रेरणामितः ।
गम्भीरेण प्रकारेण विषयेऽस्मिन् विचार्यते ॥९॥

प्रस्थानत्रयमेवाऽस्ति बोधनेऽतीव दुर्गमम् ।
न्यायप्रस्थानमेतेषां ब्रह्मसूत्रं सुदुस्तरम् ॥१०॥

सौम्य ! त्वत्प्रेरणां प्राप्य ब्रह्मसूत्रीयकारिकाः-
लेखने निःसहायोऽपि कलमः सोत्सुकोऽलगत् ॥११॥

प्रत्यक्स्वरूपं सद्ब्रह्म परं मायाविकारतः ।
अन्तस्थः सच्चिदानन्दः प्रतिबिम्बश्चितीश्वरः ॥१२॥

प्रकाशचिन्मयं सत्यमसत्यजडरोधकम् ।
चिद्रूपं परमं ब्रह्माऽधुना संस्तौमि निर्भयः ॥१३॥

अज्ञानोपहतेनैवाऽऽत्मना सङ्कल्पितं जगत् ।
भेदेन जीवेश्वरयोर्भूमभावो ममाऽऽहतः ॥१४॥

ब्रह्मज्ञानप्रदातारं नमस्यामीह सन्नतः ।
सर्वज्ञं शङ्करं व्यासं पद्मं गोपालदेशिकम् ॥१५॥

सद्गुरूणां करुणया प्रज्ञोन्मेषोऽभवन्मम ।
ब्रह्मज्ञानार्थमेवैषाऽधुना चलति लेखनी ॥१६॥

सद्गुरुं निकषाऽऽगत्य चान्तेवासी भवन् स्वयम् ।
सावधानेन मनसा वेदान्तं श्रुतवानहम् ॥१७॥

यद् गुरोः कृपया ज्ञातं शास्त्रं वेदान्तविश्रुतम् ।
तदेव सौम्य ! त्वां वच्मि सावधानमनाः शृणु ॥१८॥

विचारशास्त्रं वेदान्तं सद्गुरोः संश्रुते सति ।
भविताऽन्तःसाधनं तद् अपरोक्षं भवेदनु ॥१९॥

आनन्दमयमात्मानं प्रत्यक्षं तु न सम्भवम् ।
सुषुप्त्यनुभवाद् गम्यमनुमानैकसम्भवम् ॥२०॥

अबुध्वा पूर्वमध्यासं वेदान्तो नैव बुध्यते ।
स उपोद्घातरूपेण ब्रह्मसूत्रे समागतः ॥२१॥

पूर्वमध्यासबोधार्थं शङ्करेणाऽपि चिन्तनम् ।
कृतं भाष्ये समाविष्ट उपोद्घातेन साम्प्रतम् ॥२२॥

एतस्मात् कारणात् सौम्य ! तदध्यासविवेचनात् ।
प्रारब्धवानहं चैताः कारिकारचनामिह ॥२३॥

सङ्क्षेपेण लिखाम्यत्राऽध्यासबोधक्रमादनु ।
'अथातो ब्रह्मजिज्ञासा'ऽऽदिकसूत्राणि बोधये ॥२४॥

यदा चिति समायाति जडमायिकधीस्तदा ।
जायते हृदयग्रन्थिरहं भूत्वेह जीवति ॥२५॥

अध्यासजन्यो जीवोऽयं ब्रह्मणः प्रतिबिम्बवत् ।
मायाधीशः साक्षिरूपो ब्रह्म चिद्बिम्ब एव सः ॥२६॥

सद्ब्रह्म चेतनं शुद्धमवाङ्मनसगोचरम् ।
अनाद्येकाऽस्ति माया तु सदाऽनिर्वचनात्मिका ॥२७॥

इदं जडमयं चाऽऽत्मा चाऽन्योन्याऽध्यासमागतौ ।
रज्जौ सर्प इवैतेन सृज्यते विश्वसर्जनम् ॥२८॥

शिष्यः –
अध्यासः कतिधा ब्रह्मन् ? परिभाषाऽस्ति तस्य का ?
तत्स्वरूपं च संसर्गो धर्मोन्योऽन्यस्तयोः किमु ? ॥२९॥

तस्य किं लक्षणं ब्रूतामुपयोगश्च कोऽस्ति भोः ?
कः सम्बन्धस्तस्य लोके काऽस्ति तत्प्रतियोगिता ? ॥३०॥

गुरुः –
जडचेतनयोरैक्यं दृष्टं यत्र भ्रमात्मकम् ।
तदध्यासमयं कार्यं रज्जौ सर्पस्य भ्रान्तिवत् ॥३१॥

धर्मिणावात्माऽहङ्कारौ तद्धर्मो जडचेतनम् ।
सत्याऽनृतस्वरूपे ते सङ्कीर्णे तु परस्परम् ॥३२॥

तमःप्रकाशयोः सन्धिः सन्ध्याऽध्यासोऽस्ति निश्चयः ।
यद् वस्तु यत्र नास्त्येव दृष्टौ सोऽध्यासरूपकः ॥३३॥

रज्जौ सर्पस्तु नास्त्येव तदध्यासेन दृश्यते ।
शुक्तौ दृष्टे तु रजतेऽध्यासो भवति विभ्रमः ॥३४॥

अतद्वस्तुनि तद्वस्तु सोऽध्यासः परिकीर्तितः ।
अवभासनमध्यासः परोक्षस्याऽत्र वस्तुनः ॥३५॥

ज्ञातस्य वस्तुनोऽन्यस्य तद्रूपे चान्यवस्तुनि ।
अवभासनमध्यासः शुक्तौ रजतवद् भ्रमः ॥३६॥

शुक्तिरूपे तदाधारे शुक्तिर्हि रजतायते ।
अधिष्ठानं शुक्तिरेव रजतं पूर्वदृष्टवत् ॥३७॥

सितत्वं भास्वरत्वं च रजते पूर्वदृष्टवत् ।
शुक्तौ मनो निश्चिनोति तदेव रजतं किमु ? ॥३८॥

अधिष्ठानं तु शुक्तिर्हि रजताऽऽकारितायते ।
दृष्टपूर्वस्य रजतस्याऽऽभासो मनुते मनः ॥३९॥

शुक्तौ नैवाऽस्ति रजतं विपणौ रजतं भवेत् ।
संस्मृतौ पूर्वदृष्टं यत् तच्छुक्तौ भासते पुनः ॥४०॥

तथैव रज्जौ सर्पो न सर्पो बिलवनायते ।
दृष्टपूर्वो हि सर्पस्तु रज्जावुद्भासते पुनः ॥४१॥

शिष्यः –

यद् दृष्टं पूर्वसंस्कारे वसतीहाऽपि वा स्मृतौ ?
दृश्यते पुनरग्रे चेत् किं स्यात् तद् भण्यतां गुरो ! ॥४२॥

गुरुः –

तमध्यासं वदन्त्येके भ्रमं यद्वाऽवभासकम् ।
अध्यासोऽविद्यया जन्योऽज्ञानेनेहावभासते ॥४३॥

कथमुत्पद्यतेऽध्यासः ? तज्ज्ञानं प्रातिभासिकम् ?
बोद्धुं कठिनमस्त्येतद् ब्रह्मन् ? सुस्पष्टमुच्यताम् ॥४४॥

गुरुः –

स्मृतिरूपेण वसति पूर्वसंस्कारवासना ।
स्मृतौ तदवभासेन चक्षुषोऽग्रे विदृश्यते ।।४५।।

सन्ध्याकाले भवेन्मन्दमैक्यं तमःप्रकाशयोः ।
दृष्टौ प्रकाशमन्दत्वात् तदाऽध्यासोऽवभासते ।।४६।।

अधिष्ठानं यत्स्वरूपं स्मृतिस्तत्राऽवभासते ।
तदा सर्पायते रज्जुः शुक्तिर्हि रजतायते ।।४७।।

शिष्यः –

कथं सर्पायते रज्जुः ? शुक्तिः किं रजतायते ?
आज्ञापयतु मामद्य तत्कथं केन हेतुना ।।४८।।

गुरुः –

द्वावावरणविक्षेपौ त्वविद्याशक्तिसाधने ।
आवरणं त्वावृणुते विक्षेपः सृजति स्वयम् ।।४९।।

यदा रज्जुमावृणोति तदा सर्पायते हि सा ।
रज्जुज्ञानं भवेत्तावद् दृग्भ्यां सर्पः पलायते ।।५०।।

पूर्वं तु रज्जुमज्ञानात् रज्जौ सर्पोऽवभासते ।
यदा रज्जुं विजानीते तदा सर्पः पलायते ।।५१।।

एष एव भ्रमोऽध्यासो वाऽवभासोऽस्ति विभ्रमः ।
अज्ञानजन्योऽध्यासोऽस्ति किमेतत् प्रातिभासिकम् ।।५२।।

अध्यस्तं वस्तु मिथ्याऽस्ति मायिकं प्रातिभासिकम् ।
अतात्त्विकं कल्पितं तत् तज्ज्ञानेन विनश्यति ।।५३।।

सोऽध्यासोऽपि द्विधा दृष्टो ज्ञानाध्यासस्तथा पुनः ।
अर्थाध्यासोऽपि भवति प्रातिभासिकरूपतः ॥५४॥

विषयान्तरबोधेऽपि विषयेऽध्यास आप्यते ।
शुक्तौ रजतवद् दृष्टे सोऽर्थाध्यासो निगद्यते ॥५५॥

ज्ञानान्तरे गतोऽध्यासो ज्ञाने परिणतो यदा ।
स एव ज्ञानाध्यासोऽस्ति शास्त्रं वक्ति स्फुटं तदा ॥५६॥

शुक्तिबोधात्तु यत्पूर्वं रौप्यज्ञानावभासितम् ।
स एव ज्ञानाध्यासोऽस्ति रौप्यारोपणमात्रकम् ॥५७॥

अर्थाध्यासस्य भेदौ द्वौ विभागाद् धर्मधर्मिणोः ।
द्वयोः सम्मेलने धर्मी धर्म्यध्यासश्च द्विःस्थितौ ॥५८॥

अहं वाच्यं तु चैतन्यमिदं वाच्यो जडोऽस्ति हि ।
शरीरमहमस्मीति धर्म्यध्यासोऽभवत् पठ ॥५९॥

स्वरूपाध्यास एवाऽस्ति चितौ सम्मिलिते जडे ।
संसर्गाध्यास एव स्याज्जडे चिति समागते ॥६०॥

अध्यासा बहवः सन्ति नाम जानीहि कीदृशम् ।
तत्स्वरूपे च सम्बन्धे संसर्गेऽध्याससम्भवः ॥६१॥

धर्मिणि धर्ममन्यस्य प्रतीतिर्यदि सम्भवेत् ।
धर्म्यध्यासो भवति चेद् धर्माध्यासश्च सम्भवेत् ॥६२॥

मत्वा शरीरमेवाऽहं शरीरं मम वक्ति यः ।
धर्म्यध्यासोऽभवत् पूर्वं धर्माऽध्यासस्ततः परम् ॥६३॥

इदमध्यासवैतथ्यं प्रातिभासिकमस्त्यसत् ।
असत्यमपि सद् दृष्टं मिलित्वा चेतनेन किम् ? ॥६४॥

व्यवहारो भवेद्यत्र तत्राऽध्यासोऽपि सम्भवेत् ।
तदध्यासो भवेद्यत्र तत्र भेदाग्रहो भवेत् ॥६५॥

भेदाग्रहो भवति चेत् सर्वमज्ञानजन्यकम् ।
अज्ञानादेव यद् दृष्टं सृष्टं भवति सम्भवम् ॥६६॥

चेतनः शुद्ध आत्मा तु सर्जनं कर्तुमक्षमः ।
भौतिकैर्जडदेहाद्यैः सर्जनं न हि सम्भवम् ॥६७॥

जडचेतनयोर्ग्रन्थिरध्यासत्वेन दृश्यते ।
विशालदृश्यः संसारस्तदा भवति सम्भवः ॥६८॥

बुद्ध्या सह चिदाभासस्तादात्म्याध्यासमावहेत् ।
चिता सह स्थिते बुद्धौ संसर्गाध्यास ईरितः ॥६९॥

बुद्ध्या सह जडे प्राप्ते चिदध्यासस्तदा भवेत् ।
अन्योन्याऽध्यास आयाते त्वहं ग्रन्थिरुदेत्यहो ! ॥७०॥

अध्यासजन्यो जीवात्मा प्रारब्धफलभुग् भवेत् ।
संसारे सरतीहैव वारिवाहजलं यथा ॥७१॥

स्थूलत्वं च कृशत्वं च देहधर्मौ प्रपश्यतु ।
चिदध्यासो जडे दृष्टे संसारः समुदेति हि ॥७२॥

देहेन्द्रियैश्चिदध्यासे प्रतिबोधो भवत्यहो !
तत्क्षणं समुदेतीह प्रमातृत्वं चिदात्मनि ॥७३॥

शिष्यः –

कस्मात् कालादिहाऽस्तित्वमध्यासस्याऽभवत् प्रभो !
कस्य शक्तिमनुप्राप्याऽध्यासोऽयं सबलोऽभवत् ॥७४॥

गुरुः –

अविद्याजनितोऽध्यासः प्रथमं तु चिदाश्रितः ।
भौतिकानां च भूतानां संसृष्टिं कुरुतेऽन्ततः ॥७५॥

अनादित्वमनन्तत्वं नैसर्गिकं विरूपकम् ।
कर्तृत्वादिकवृत्तिं तु मिथ्याप्रत्ययितं खलु ॥७६॥

प्रत्यक्षमस्त्यध्यासोऽयं सर्वेषां तु सदैव हि ।
ज्ञाते सति यथार्थं तद् मिथ्याज्ञानं पलायते ॥७७॥

अबुध्वा पूर्वमध्यासं ब्रह्मसूत्रं न बुद्ध्यते ।
अध्यासो बुद्ध्यते चेत् तद् ब्रह्मसूत्रं प्रबुध्यते ॥७८॥

अध्यासे पठिते सौम्य ! ब्रह्मसूत्रं भणामि ते ।
'अथातो ब्रह्मजिज्ञासां' मोक्षार्थं कर्तुमर्हसि ॥७९॥

इति अध्यासविचारकारिका ॥

## ॐ तत्सद्ब्रह्मणे नमः ।

## अथ ब्रह्मसूत्रकारिका

## प्रथमः समन्वयाध्यायः

## प्रथमः पादः

(अस्मिन् पादे जिज्ञासाधिकरणादारभ्य प्रतर्दनाधिकरणान्तं एकादशाधिकरणानि सन्ति ।)

### (१) जिज्ञासाधिकरणम् (ब्रह्मसूत्रम् १।१।१।१)

शिष्यः –

अधुना ब्रह्मजिज्ञास्यं शास्त्रं प्रारभ्यते न वा ?
उपयुक्तो न वा कालः सन्दिग्धं मे मनोऽभवत् ॥१॥

ब्रुवते वादिनः कालो योग्यो नास्तीह साम्प्रतम् ।
परस्परविरुद्धानि देह आत्मेन्द्रियाण्यपि ॥२॥

एतेषां सम्भवेन्नैवाऽध्यासश्चापि परस्परम् ।
जीव एव परं ब्रह्म स्वयं किमु विचार्यते ॥३॥

अध्यासश्चापि सन्देहः स्वात्मन्येव न वस्तुतः ।
आत्मानमात्मना ज्ञात्वा न मुक्तिः सम्भविष्यति ॥४॥

काकदन्तपरीक्षावद् व्यर्थोऽभ्यासो भवेदिह ।
व्यर्थं स्याद् ब्रह्मजिज्ञासाचिन्तनं जलताडनम् ॥५॥

किमेवं पूर्वपक्षाणां मतेऽमुष्मिन् समागते ।
हे गुरो ! ब्रह्मजिज्ञासां किमर्थं करवाण्यहो ! ॥६॥

वदन्तु गुरवो ह्यत्र श्रुतिवाक्यप्रमाणतः ।
कर्तव्या ब्रह्मजिज्ञासा योग्यं कार्यमिदं न वा ? ॥७॥

गुरुः –

‘असङ्गं निष्कलं ब्रह्म ह्यात्मेति’ वदति श्रुतिः[1] ।
‘अयमात्माऽस्ति ब्रह्मे’ति बुद्ध्वा ब्रह्म भवत्यपि[2] ॥८॥

बहुशो मानुषा विश्वे देह आत्मेति मन्वते ?
कुर्वतेऽज्ञानवशतो देहस्यैवाऽऽत्मचिन्तनम् ॥९॥

असङ्ग आत्मा ब्रह्माऽस्ति यद्वा देहोऽस्ति ब्रह्म किम् ?
अज्ञानिनो मानुषास्तु सन्दिह्यन्त्यधुनाऽप्यहो ! ॥१०॥

प्रमाणं श्रौतमणित्य[3] विदुषां वचनान्यपि ।
सङ्गृह्य ब्रह्म ज्ञानार्थं कार्यं वेदान्तचिन्तनम् ॥११॥

ब्रह्माऽपरोक्षं बोधार्थं वेदान्तवाक्यनिश्चितम्म् ।
वेदान्तशास्त्रं श्रोतव्यं तात्पर्यज्ञानहेतवे ॥१२॥

मुमुक्षुं मानवं साक्षाद् ब्रह्मणि परिवर्तनम् ।
आत्मजीवात्मनोरैक्यं कुर्वञ्छास्त्रं सुदुर्लभम् ॥१३॥

मुमुक्षुर्ज्ञाननिष्ठो हि बोधेन पारमेष्यति ।
एतस्मात् कारणादेतच्छास्त्रं श्रोतव्यमेव च ॥१४॥

---

१. ‘असङ्गो ह्ययं पुरुषः’ । – बृहदारण्यके ४।३।१५

२. ‘अयमात्मा ब्रह्म’ । – माण्डूक्योपनिषदि २
‘अहं ब्रह्मास्मि’ । – बृहदारण्यकोपनिषद् १।४।१०

३. (क) सत्यं ज्ञानमनन्तं ब्रह्म । – तैत्तिरीयोपनिषद् २।१।१
(ख) तद् विजिज्ञासस्व तद् ब्रह्म । – तैत्तिरीयोपनिषद् २।६।१
(ग) भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ – मुण्डकोपनिषद् २।२।८

जन्माद्यस्य यतः सूत्रादस्त्यस्मिन् वर्णकद्वयम् ।
कृत्वा विभागमलिखत् स्रष्टाऽस्मिन् पञ्चपादिकाम्[4] ॥१५॥

अथातो ब्रह्मजिज्ञासा[5] ज्ञातव्यं ब्रह्म पठ्यते ।
ब्रह्मज्ञानाद् ब्रह्मवित् तु भवेद् ब्रह्मैव बुध्यते ॥१६॥

## (२) जन्माद्यधिकरणम् (ब्रह्मसूत्रम् १।१।२।१)

शिष्यः –
ब्रह्म ज्ञातुं कथं शक्यात् प्रमाणलक्षणैर्विना ।
किं लक्षणं प्रमाणञ्च सन्देग्धि हृदयं मम ॥१७॥

ब्रह्मणो निर्गुणस्याऽपि लक्षणं क्व नु सम्भवम् ?
कथं प्रतिज्ञामात्रेण ? ब्रह्मज्ञानमसम्भवम् ॥१८॥

वादिनः प्रवदन्त्यत्र सन्देहे ते प्रमाणतः ।
न सम्भवति शास्त्रात् तु ब्रह्मणः स्पष्टलक्षणम् ॥१९॥

---

४. अध्यासादिचतुःसूत्रीपर्यन्ता पञ्चपादिका ।
आचार्यः पद्मपादो हि व्यलिखत् पञ्चपादिकाम् ॥
सोऽयं शङ्करशिष्योऽस्ति विद्वान् शास्त्रानुशीलकः ।
प्रथमोऽयं ब्रह्मसूत्रभाष्ये वृत्तिं प्रलेखकः ।
पञ्चपादाः यथा – (१) अध्यासभाष्ये, (२) सूत्रचतुष्टये पृथक् पृथक् चतुष्पादाः सन्ति ।

५. अथातो ब्रह्मजिज्ञासा । – ब्रह्मसूत्रम् १।१।१।१
(क) ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ।
(ख) ब्रह्मैव सन् ब्रह्माप्येति । – बृहदारण्यकोपनिषद् ४।४।६

[6]जन्मादिप्रलयान्तानि जगद्धर्माणि सन्ति हि।
ब्रह्मणा सह मिथ्यात्वसम्बन्धोऽस्ति न सम्भवम् ॥२०॥

लोकप्रसिद्धाः सत्यादिधर्मा[7] अन्यार्थवाचकाः।
ब्रह्मणः सम्भवेतां नो लक्षणौ द्वौ हि सार्थकौ ॥२१॥

स्वरूपेण सहैवात्र[8] तटस्थादिकलक्षणम्[9]।
ब्रह्मणः सम्भवेन्नैव स्पष्टरूपेण लक्षणम्[10] ॥२२॥

तदित्थं पूर्वपक्षस्य समायातं मतं गुरो !
ब्रह्मन् ! विना लक्षणं तु ब्रह्मज्ञानमसम्भवम् ॥२३॥

तत्त्वतो ब्रह्मणो ज्ञानं प्रतिज्ञामात्रतः कथम् ?
प्रमाणञ्च दर्शनीयं शास्त्रतो लक्षणान्यपि[11] ॥२४॥

ब्रह्मन् ! गुरो ! भणत्वत्र ब्रह्मणो लक्षणान्यपि।
ब्रह्म यैर्लक्षणैर्ज्ञातुं शक्यं तानि ब्रवीतु भोः ॥२५॥

गुरुः –
जन्मादिनाशपर्यन्ता जगद्धर्माः सदैव हि।
तथापि सम्भवन्त्यत्र ब्रह्मणस्ते सदैव हि ॥२६॥

---

६. यतो वा इमानि भूतानि जायन्ते। – तैत्तिरीयोपनिषत् २।६।१

७. सत्यंज्ञानमनन्तं ब्रह्म। – तैत्तिरीयोपनिषत् २।१।१

८. स्वरूपं सद् व्यावर्तकं यथा पृथिव्याः पृथिवीत्वम्। – न्यायः

९. तद्भिन्नत्वेसति तद्बोधकत्वम्। यावल्लक्षकालमनवस्थितत्वे सति व्यावर्तकत्वम्। – न्यायः

१०. सजातीयविजातीयेभ्यो हि व्यावर्तकं लक्षणम्। – न्यायः

११. न हि लक्षणप्रमाणाभ्यां विना वस्तुसिद्धिः। – वेदान्तपरिभाषा

[१२]इदं बाधसमानाधिकरणादिह सर्जनम् ।
संसिद्धिर्ब्रह्मणो भूयात् तटस्थं ब्रह्मलक्षणम् ॥२७॥

'सत्यं ज्ञानमनन्तं यद् ब्रह्म' लक्षणमस्त्यपि ।
नामरूपादिभिर्भिन्ना अप्यन्ते ब्रह्मणि स्थिताः ॥२८॥

यो विश्वं सृजते नित्यं स्थितिं प्रकुरुतेऽनिशम् ।
जगत् संलीयते यस्मिन् श्रौतं तद् ब्रह्मलक्षणम्[१३] ॥२९॥

सत्यं ज्ञानमनन्तं तत् स्वरूपं ब्रह्मलक्षणम् ।
भिन्नरूपाणि वा चैकं स्वरूपं ब्रह्मलक्षणम् ॥३०॥

लक्षणार्थं सूत्रमेकं श्रुतिसारं गदत्यहो !
'जन्माद्यस्य यतः' सूत्रं तटस्थं ब्रह्मलक्षणम्[१४] ॥३१॥

## (३) शास्त्रयोनित्वाधिकरणम् (ब्रह्मसूत्रम् १।१।३।१)

वर्णकद्वयमस्त्यस्मिन् प्रथमे वेदकर्तृकम् ।
निर्णीयते द्वितीये तु ब्रह्मज्ञानार्थवर्णकम् ॥३२॥

वर्णकम् १

शिष्यः –

वेदोऽयं पौरुषेयोऽस्ति ? किं वा वेदोऽस्त्यपौरुषः ?
कर्तृत्वेऽस्याऽस्ति सन्देहः कोऽयं कर्ताऽस्त्यनिर्णयः ॥३३॥

---

१२. (क) मुख्यसमानाधिकरणम् – यथा घटाकाशस्तथा महाकाशः, तत्त्वमसि आदि ।
(ख) बाधसमानाधिकरणम् – स्थाणुरयं नायं पुरुषः, यो भुजङ्गः सा स्रक्, यज्जगत्कारणं तद् ब्रह्म आदि ।

१३. भृगुर्वै वारुणिः वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेति इत्युपक्रम्याऽऽह – यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति तद् विजिज्ञासस्व, तद् ब्रह्मेति । – तैत्तिरीयोपनिषद् ३।१।१

१४. जन्माद्यस्य यतः । – ब्रह्मसूत्रम् १।१।२।२

वादिनः कथयन्त्यत्र श्रुतिस्मृतिप्रमाणतः[१५] ।
वेदो नित्यो नाऽस्य कर्ता तद्ब्रह्माऽस्तीति वादिनः ॥३४॥

विषयेऽस्मिन् भवानाज्ञापयत्वद्य गुरो ! किमु ?
वेदोऽस्त्यकर्तृको नित्यः किमनित्योऽस्ति कर्तृकः ? ॥३५॥

गुरुः –
वच्मि सङ्क्षेपतोऽद्याऽहं ब्रह्मणो लक्षणद्वयम् ।
प्रमाणं दर्शयाम्यत्र पश्य सावधानमना शृणु ॥३६॥

जगत्कारणमस्त्येतद् ब्रह्मैवेतीह वर्णितम् ।
दृढतार्थमिदं सूत्रं शास्त्रयोनित्वमद्भुतम् ॥३७॥

वेदोऽस्ति ब्रह्मनिश्वासः श्रुतिरित्थं जुघोषति ।
ब्रह्मणो हि विनिःश्वासाद् वेदाः समुदिता भुवि[१६] ॥३८॥

पूर्वकल्पसमानः स वेदः प्रकटितोऽधुना ।
एतस्मात् कारणाद् वेदो नित्यो निगदति श्रुतिः[१७] ॥३९॥

तद् योनिः सर्वशास्त्राणां सर्वसृष्टिविवर्तकम् ।
सर्वज्ञैश्वर्यसम्पन्नं ब्रह्माऽस्ति वेदकारणम् ॥४०॥

---

१५. (क) हे विरूप नित्यया स्तुतिं प्रेरय । – श्रुतिः
(ख) अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।
आदौ वेदमयो दिव्या यतः सर्वाः प्रवृत्तयः ॥ – स्मृतिः

१६. (क) अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः ।
– बृहदारण्यकोपनिषद् २।४।१०
(ख) यस्य निःश्वसितं वेदाः । – सायणाचार्यः ।

१७. यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । – शुक्लयजुर्वेदः ३१।१६

स्वप्रकाशाच्च सर्वज्ञाद् ब्रह्मणो हि प्रकाशनम् ।
शास्त्राणि प्रभवन्तीह ब्रह्मोपादानकारणम् ॥४१॥

नाऽभवत् पुरुषःकोऽपि वेदकर्ता कथञ्चन ।
अक्षमः पुरुषस्तस्माद् वेदो नित्योऽस्त्यकर्तृकः ॥४२॥

यस्मान्निःश्वसिता वेदा ब्रह्मणः श्वासरूपकाः ।
वेदा हि ब्रह्मणो ज्ञानं कारयन्ति तदन्तिमे[१८] ॥४३॥

वेदा हि ब्रह्मणः कार्यं शास्त्राणां ब्रह्मकारणम् ।
वेदादेव भवेत्पुंसां तत्त्वज्ञानञ्च ब्रह्मणः ॥४४॥

वर्णकम् २
शिष्यः –
वेदस्य हेतु ब्रह्मास्ति तत्कार्यं वेदहेतुकम् ।
कार्यज्ञानात् कथं वा स्यात् तत्त्वज्ञानस्य कारणम् ॥४५॥

अनेन कारणेनान्यैः प्रमाणैः सकलैरपि ।
ब्रह्म ज्ञातुं शक्यते वा न ? वेदादितरैरपि ॥४६॥

सन्दिग्धं मानसं मेऽद्य गुरावद्य निवेदितम् ।
पूर्वपक्षमतं भिन्नं दर्शयन्तीदृशं गुरो ! ॥४७॥

---

१८. वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वाऽतिमृत्युमेति नाऽन्यः पन्था विद्यतेऽयनाय ॥ – शु. यजुर्वेद
(ख) कं ब्रह्म, खं ब्रह्म । – शु. यजुर्वेद
(ग) सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं सर्वतः स्पृत्वाऽत्यतिष्ठद् दशाङ्गुलम् ॥ – शु. यजुर्वेद

यथा सिद्धो घटोऽस्तीह सिद्धं ब्रह्माऽपि वस्तु सत् ।
अन्यैः प्रमाणैरपि तज्जायते सरलैरिह ॥४८॥

प्रोच्यतां हे गुरो ! किन्तद् ब्रह्म विज्ञायते कथम् ?
श्रुतिप्रमाणतो बाह्यैरन्यैर्वा कारणैः पुनः ॥४९॥

गुरुः –
रूपलिङ्गादिभिर्हीनं दुर्ज्ञेयं ब्रह्म वस्तुतः ।
बाह्यैः प्रमाणैरपरैर्ज्ञायते न हि तत्त्वतः ॥५०॥

[१९]वेदप्रमाणैर्वेद्यं तद् ब्रह्म वेदैर्विना न हि ।
ब्रह्म ज्ञातुं कथं शक्यं वेदज्ञानं विना क्वचित् ॥५१॥

यो वेदान् न हि जानाति ब्रह्म ज्ञातुमसम्भवम् ।
यो वेदान् सुष्ठु जानीते ब्रह्म ज्ञातुं क्षमो भवेत् ॥५२॥

वेदान्तशास्त्रमपठन् ब्रह्मज्ञं मनुते स्वकम् ।
यस्तु [२०]शाकल्यवत् तस्य पतनं सम्भवेद् द्रुतम् ॥५३॥

सम्प्रदायानुसारेण[२१] गुरुभक्त्या क्रमेण च ।
वेदंवेदान्तशास्त्रञ्च पठित्वा ब्रह्म बुध्यते ॥५४॥

अपठित्वा तु यो वेदान् ब्रह्मज्ञानं सुदुष्करम् ।
ब्रह्म तु वेदहेतुत्वं ज्ञेयं वेदेभ्य एव तत् ॥५५॥

---

१९. नावेदविन्मनुते तं बृहन्तम् । – तैत्तिरीयब्राह्मण ३।१२।९
२०. तं त्वौपनिषदं पुरुषं पृच्छामि तं (त्वा त्वां विद्याभिमानिनं पुरुषम्) चेन्मे न विवक्ष्यसि मूर्धा ते विपतिष्यतीति । – बृहदारण्यकोपनिषद् ३।९।२६
२१. तस्माद् असम्प्रदायवित् सर्वशास्त्रविद् अपि मूर्खवद् देव उपेक्षणीयः ।
– शाङ्करभाष्य, श्रीमद्भगवद्गीता १३।२

ब्रह्माऽस्ति वेदहेतुत्वं [२२]वेदोऽयं कार्यहेतुकः ।
यो हि वेदं विजानीते तद्धेतुमपि बोधति ॥५६॥

[२३]सूत्रमेकं विद्यतेऽस्मिन् वर्णकद्वयमर्थकृत् ।
द्वयोर्वर्णकयोरेव कुरुतेऽर्थप्रकाशनम् ॥५७॥

## ४. समन्वयाधिकरणम् (ब्रह्मसूत्रम् १।१।४।१)

वर्णकद्वयमस्त्यस्मिन् भिन्नं वर्णयति द्वयम् ।
अधोलिखितरूपेण प्रमाणैः श्रुतिसम्मतैः ॥५८॥

वर्णकम् – १
शिष्यः –
वेदान्तो देवकर्तृत्वं मत्वा किं प्रतिपद्यते ?
कर्माङ्गरूपे कुरुते ब्रह्मणः प्रतिपादनम् ? ॥५९॥

यद्वा स्वतन्त्ररूपेण वेदान्तः प्रतिपद्यते ?
वादिनः प्रवन्त्यत्र प्रमाणैः संशयास्पदम् ॥६०॥

साक्षान्न कुरुते सैष ब्रह्मणः प्रतिपादनम् ।
[२४]फलं किञ्चिन्नाऽऽप्यतेऽत्र ब्रह्मणः प्रतिपादनात् ॥६१॥

गृहीत्वा देवतादीनामदृष्टं कर्मणां बलम् ।
परम्पराश्चलन्त्येषाः स्वर्गप्राप्त्यादिकर्मणः ॥६२॥

---

२२. वेदहेतुरपि ब्रह्म तद्वेदादेव मीयते । – लघुवार्तिक १।१।३
२३. शास्त्रयोनित्वात् । – ब्रह्मसूत्रम् १।१।३।३
२४. क. आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते ।
ख. तथा फलाभावात् । – पूर्वमीमांसासूत्रम् १।२।१ तथा १।२।३

अतः कर्ता च कर्माङ्गं गृहीत्वा देवतामपि ।
वेदस्तु ह्यन्त्ये कुरुते ब्रह्मणः प्रतिपादनम् ॥६३॥

वदणत्वत्र गुरो ! युक्तं वादिनो मतमस्ति किम् ?
यद्वा न चेत् तद् वदतु सिद्धान्त उचितोऽस्ति कः ? ॥६४॥
गुरुः –
वेदान्तः कर्मणां शेषः सर्वथा न हि सम्भवेत् ।
ज्ञानं वेदान्ततत्त्वस्य भवेत् तात्पर्यरूपकम् ॥६५॥

[२५]उपक्रमादिषड्लिङ्गैः कृत्वा तात्पर्यनिर्णयम् ।
वेदान्तः कुरुते सच्चिद्ब्रह्मणः प्रतिपादनम् ॥६६॥

भवेत् स्वतन्त्ररूपेण ब्रह्मज्ञानं सुनिश्चितम् ।
तत्त्वतो न भवेद् ज्ञानं कर्ता दैवतकर्मभिः ॥६७॥

सिद्धं सद् ब्रह्म वस्त्वस्ति साधनं श्रवणादिकम् ।
पूर्णीभूते साधने तु हृदि ब्रह्म चकास्त्यहो ! ॥६८॥

इदं ब्रह्म सिद्धवस्तु साध्यं स्वर्गादितुल्यकम् ।
विधिशेषं न चैतत् तु प्राप्तमस्ति हि सर्वदा ॥६९॥

वेदे भिन्नं ज्ञानकाण्डं तद्भिन्नं कर्मकाण्डकम् ।
ज्ञानं प्रमेयाधीनं हि कर्म तु पुरुषार्जितम् ॥७०॥

एतस्मात् कारणाद् ब्रह्म तात्पर्येणैव बुद्ध्यते ।
विधिशेषं कर्म नास्ति, हृदये स्फुरति स्वतः ॥७१॥

---

२५. उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥ – बृहत्संहिता

वर्णकम् – २

शिष्यः –

सत्यं ज्ञानमनन्तादिवाक्यस्यार्थोऽस्ति यस्तथा ।
'आत्मा वाऽरे ! विचार्योऽस्ति' वेदस्य विधिरुच्यते ॥७२॥

आत्मस्वरूपबोधो यः कर्मणामङ्गमस्ति किम् ?
वेदान्तः कुरुते यद्वा स्वतन्त्रः स्फुरति स्वतः ॥७३॥

सन्देहोऽस्मिन्नभूद् ब्रह्मन् ! दर्शयन्तीह वादिनः ।
सुस्पष्टानि प्रमाणानि तन्मतं रुच्यमागतम् ॥७४॥

वेदान्तशास्त्रमस्त्यत्र स्थाप्यतामनुशासनम् ।
वश्यञ्च रक्षितव्यं तदन्यथा न विधीयताम् ॥७५॥

भवेत् स्वतन्त्ररूपेण भवेद् वा श्रवणादिना ।
ब्रह्मज्ञाने कृते व्यर्थं भवन्ति मननादयः ॥७६॥

अत एवोपासनाया विधिरङ्गं भवेत् किमु ?
'सत्यं ज्ञानमनन्तादि'-वाक्यानि बोधयन्त्यपि ॥७७॥

ब्रह्मन् ! भवान् वदत्वत्र युक्तं किं वादिनां मतम् ?
अयुक्तं चेद् युक्तियुक्तं सिद्धान्तं दर्शयत्वहो ! ॥७८॥

गुरुः –

यागहोमादिविधयः पुरुषाधीनतागताः ।
अपरोक्षञ्च सज्ज्ञानं वशं तेषां भवन्ति नो ॥७९॥

प्रमेयाधीनमस्त्येतद् ब्रह्मज्ञानं परात्परम् ।
विधेयं न भवत्येव यादृक् तर्कं करोष्यपि ॥८०॥

निवारणमसम्भाव्यं क्रियते मननादिभिः ।
वेदान्तसिद्धं सद्ब्रह्म चिन्तनं क्रियते ततः ॥८१॥

गौणो मिथ्याऽस्ति जीवात्मा ब्रह्मज्ञाने निवार्यते ।
अध्यासजन्यः संसारः सज्ज्ञानेन निवार्यते ॥८२॥

[२६]सूत्रमेकं समन्वेति यत्प्रोक्तं वर्णकद्वयम् ?
सद्ब्रह्मणो विधेः शेषं न भवत्यत्र निश्चयम् ॥८३॥

## (५) ईक्षत्यधिकरणम् (ब्रह्मसूत्रम् १।१।५।५)

शिष्यः –
'तदैक्षत' इदं वाक्यं श्रुतिर्यत्र समागतः ।
अनेन सृष्टिकर्तारं सुस्पष्टं नैव सूच्यते ॥८४॥

प्रधानं प्रकृतिः किं वा पुरुषो ब्रह्मकारणम् ।
सन्देहो जगदुत्पत्तौ सन्देग्धि हृदयं मम ॥८५॥

पूर्वपक्षा गदन्त्यत्र प्रधानं सृष्टिकारणम् ।
ज्ञानशक्तिः क्रियाशक्तिः प्रकृतेः सृष्टिसाधने ।८६॥

कार्ये समायान्त्यत्रैव कारणस्य गुणाः सदा ।
निर्गुणं सद् ब्रह्म वस्तु कथं स्यात् सृष्टिकारणम् ? ॥८७॥

जगतां कारणं स्पष्टं प्रधानं त्रिगुणात्मकम् ।
निर्गुणं वस्तु सद्ब्रह्म कथं स्यात् सृष्टिकारणम् ? ॥८८॥

---

२६. तत्तु समन्वयात् । – ब्रह्मसूत्रम् १।१।४।१

जगत्कर्ता प्रधानं स्यात् कथयन्तीह वादिनः ।
किं प्रधानं ब्रह्म यद्वा हेतुं वदतु मामिह ॥८९॥

गुरुः –
न जगत्कारणार्थेऽयं श्रुतौ शब्दः समागतः ।
अतः प्रधानं जगतो हेतुर्वक्तुं न शक्यते ॥९०॥

यदीक्षणं करोत्यत्र जगत्कारणमस्ति तत् ।
श्रुतिः स्पष्टं निगदति सच्चिद् ब्रह्म सनातनम् ॥९१॥

[२७]'सदेव सौम्ये'ति वाक्यादुपक्रामत्यहो ! श्रुतिः ।
[२८]'तदैक्षत बहुस्यां' हि सच्चिद् ब्रह्म समीक्षणम् ॥९२॥

[२९]यः सर्वज्ञः सर्वविच्च स आसीत् सृष्टिकारणम् ।
जडात्मा तत्प्रधानं तु कथं स्यात् सृष्टिकारणम् ॥९३॥

क्रियापदमैक्षतेति गौणं वक्तुं न शक्यते[३०] ।
अतो ब्रह्म जगद्धेतुः श्रुतिर्वक्तीह शब्दतः ॥९४॥

जडं प्रधानं तु कथं भवेदात्माऽप्यसम्भवम्[३१] ।
जडं प्रधानं तं ज्ञात्वा मोक्षं प्राप्तुमसम्भवम् ॥९५॥

---

२७. सदेव सोम्येदमग्र आसीदेकमेवाद्वितीम् । – छान्दोग्योपनिषद् ६।६।१
२८. तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत । – छान्दोग्योपनिषद् ६।३।३
२९. यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः । तस्मादेतद् ब्रह्म नाम रूपमन्नञ्च जायते ।
– मुण्डकोपनिषद् १।१९
३०. सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि । – छान्दोग्योपनिषद् ६।३।२
३१. स आत्मा तत्त्वमसि श्वेतकेतो, इति । – छान्दोग्योपनिषद् ६।१४।३

[३२]आचार्याद् ज्ञानमभ्येत्य मननादिकृते सति ।
ज्ञानी सद्ब्रह्मणो ज्ञानं कृत्वा पारं तरिष्यति ।।९६।।

[३३]सुषुप्तिकाले जीवस्तु लीनं भवति चात्मनि ।
जडे प्रधाने जीवोऽयं प्रधाने लीयते कथम् ? ।।९७।।

[३४]सम्पूर्णायाः श्रुतेरुक्तिः समाना हि विलोक्यते ।
ब्रह्मैवाऽस्ति जगद्धेतुः सच्चिदात्मा परात्परः ।।९८।।

जडाद्धेतौ यदि जडं प्रधानं मन्यते तदा ।
सदात्माहेतुरित्यादि श्रुतिशब्दा निरर्थकाः ।।९९।।

[३५]प्राज्ञेनैवात्मना जीवः परिष्वक्तो भवेद् यदि ।
बाह्यमन्तर्न जानाति वस्त्वन्यन्नैव किञ्चन ।।१००।।

[३६]'स कारण'मयं मन्त्रः श्रुतौ दृष्टः सदात्मकः ।
जडं प्रधानमन्यच्च सृष्टौ हेतुरसम्भवः ।।१०१।।

---

३२. आचार्यवान् पुरुषो वेद, तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये ।
– छान्दोग्योपनिषद् ६।१४।२

३३. यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवति । – छान्दोग्योपनिषद् ६।८१

३४. क. यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः ।
– कौषीतकिब्राह्मणोपनिषद् ३।।३

ख. तस्माद् वा एतस्मादात्मन आकाशः सम्भूतः । – तैत्तिरीयोपनिषद् २।१

ग. आत्मन एवेदं सर्वम् । – छान्दोग्योपनिषद् ७।२६।१

घ. आत्मन एष प्राणो जायते । – प्रश्नोपनिषद् ३।३

३५. प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम् ।
– बृहदारण्यकोपनिषद् ४।३।२१

३६. स कारणं कारणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः ।
– श्वेताश्वतरोपनिषद् ६।९

श्रुतिर्गदति सर्वज्ञं ब्रह्मास्ति सृष्टिकारणम् ।
जडं प्रधानमित्यादेर्हेतुत्वञ्च निवारितम् ॥१०२॥

एतस्मिन् विषये सप्त सूत्राणि लिखितान्यहो !
ब्रह्मैवाऽस्ति जगत्कर्ता निर्दिशन्ति प्रमाणतः ॥१०३॥

## (६) आनन्दमयाधिकरणम् (ब्रह्मसूत्रम् १।१।६।१२–१९)

वर्णकद्वयमालम्व्य ह्यानन्दमयमन्ततः ।
प्रतिपादयति ब्रह्म यत्सदात्मकलक्षितम् ॥१०४॥

वर्णकम् – १
शिष्यः –
आनन्दमयजीवोऽस्ति ? किं वा ब्रह्ममयोऽस्ति तत् ?
वादिनः कथयन्त्यत्र जीवोऽयं संशयाऽऽस्पदम् ? ॥१०५॥

सार्थं मयट्प्रत्ययेन प्रियाद्यङ्गे समाश्रिते ।
आनन्दमयजीवोऽस्ति प्रमाणैः प्रवदन्त्यपि ॥१०६॥

विकारी मयडस्त्येव मिथ्या ब्रह्म कथं भवेत् ?
आनन्दमयजीवोऽस्ति युक्तियुक्तः सुसङ्गतः ॥१०७॥

हे गुरो ! वादिनामद्य तदित्थं मतमागतम् ।
ब्रह्माऽऽनन्दमयं यद्वा जीवो भणतु तत्त्वतः ॥१०८॥

गुरुः –

[३७]उपक्रमोपसंहारादिकान् सङ्गृह्य शास्त्रतः ।
ब्रह्माऽऽनन्दमयं शुद्धं श्रुतिवाक्यानुसारतः ॥१०९॥

प्राचुर्यार्थस्य वाच्योऽऽस्ति प्रत्ययो मयडित्यपि ।
विज्ञानमयकोषस्य सन्त्यङ्गानि प्रियादयः ॥११०॥

[३८]रूपद्वयं ब्रह्मणोऽस्ति शुद्धमौपाधिकं पुनः ।
उपाधिहीनं शुद्धं स्याददद्वैतात्मकनिर्भरम् ॥१११॥

नामरूपादिभिर्युक्तं भेदोपाधिविशेषितम् ।
[३९]ब्रह्म तद् गौणमन्यत्तु ब्रह्माऽद्वैतं निरञ्जनम् ॥११२॥

[४०]आनन्दमयमेवाऽस्ति ब्रह्म श्रुतिभिरीडितम् ।
जीवो नैवाऽऽनन्दमयो ब्रह्माऽऽनन्दमयं पदैः ॥११३॥

[४१]रसस्वरूपं ब्रह्माऽस्ति सम्प्राप्ते सति निर्मलम् ।
आनन्दयुक्तो ज्ञानी तु भवेद् ब्रह्म सनातनम् ॥११४॥

---

३७. ईक्षतेर्नाशब्दम् । – ब्रह्मसूत्रम् १।१।५।५–११
क. सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ।
ख. तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत ।
ग. अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि ।
– छान्दोग्योपनिषद् ६।२।१, ६।२।३, ६।३।२

३८. यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति, यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् । – बृहदारण्यकोपनिषद् ४।५।१५

३९. निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ।
अमृतस्य परं सेतुं दग्धेन्धनमिवानलम् ॥ – श्वेताश्वतरोपनिषद् ६।१९

४०. तस्माद्वा एतस्माद् विज्ञानमयाद् अन्योऽन्तर आत्माऽऽनन्दमयः ।
– तैत्तिरीयोपनिषद् २।५

४१. रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति । – तैत्तिरीयोपनिषद् २।७

ब्रह्मेति बुद्ध्वाऽऽनन्दं हि मानवो निर्भयो भवेत् ।
[४२]आनन्दं ब्रह्म सच्चिद्धि श्रुतिभिः सुनिरूपितम् ॥११५॥

आनन्दं नैव जीवोऽस्ति प्रधानं तन्न दृश्यते ।
[४३]ब्रह्माऽऽनन्दमयं सच्चिदानन्दं चिद्घनं परम् ॥११६॥

वर्णकम् – २

शिष्यः –

[४४]'ब्रह्म पुच्छं प्रतिष्ठा'ऽस्ति ब्रह्मणोऽन्याङ्गरूपितम् ।
प्रतिपादितमेवं वा किमु प्राधान्यरूपकम् ॥११७॥

इत्यस्मिन्नभवच्छङ्का मतमेतत्तु वादिनः ।
ब्रह्माऽऽनन्दमयस्याऽङ्गं सुस्प्रष्टं प्रवदन्ति ते ॥११८॥

श्रुतौ पुच्छमयं शब्दो गुरो यत्र समागतः ।
किमु देहस्य लाङ्गूलमिति लोकैः प्रबुध्यते ॥११९॥

किं तद् वदत्वत्र भवान् प्रधानं वाऽप्रधानकम् ।

गुरुः –

ब्रह्माऽऽनन्दमयस्याङ्गं न हि तद् गौणमुच्यते ॥१२०॥

सुस्पष्टः पुच्छशब्दोऽयं लक्षणाऽर्थे समागतः ।
अर्थोऽत्र पुच्छशब्दस्य ब्रह्माऽऽधारः प्रबुध्यताम् ॥१२१॥

---

४२. आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन । – तैत्तिरीयोपनिषद् २।८।९

४३. आनन्दो ब्रह्मेति व्यजानात् । – तैत्तिरीयोपनिषद् ३।६
सोऽकामयत बहु स्यां प्रजायेय । – तैत्तिरीयोपनिषद् २।८।९

४४. तस्य प्रियमेव शिरः, मोदो दक्षिणः पक्षः, प्रमोद उत्तरः पक्षः, आनन्द आत्मा, ब्रह्मपुच्छं प्रतिष्ठा । – तैत्तिरीयोपनिषद् २।५

ब्रह्माऽऽनन्दमयं यत् तद् वादिनः प्रवन्त्यपि ।
आनन्दमयकोषं तं ज्ञेयमन्नमयाऽऽदिकम् ॥१२२॥

ब्रह्मज्ञानार्थमत्रैते पञ्चकोषाः प्रकल्पिताः ।
तेष्वाऽऽनन्दमये कोषे कुरुते श्रुतिसूचनम् ॥१२३॥

उपक्रमोपसंहारावभ्यासादिसमुल्लिखन् ।
[४५]'ब्रह्म पुच्छं प्रतिष्ठेति प्रधानं ब्रह्म कीर्तितम् ॥१२४॥

[४६]आनन्दांशं गृहीत्वैवाऽऽनन्दी जीवः प्रसन्नति ।
[४७]आनन्दं ब्रह्म बुद्धैव ब्रह्माऽऽनन्दी भवेज्जनः ॥१२५॥

[४८]'तस्माद् वे'ति श्रुतावात्मा दृष्टः पुल्लिङ्गशंसितः ।
प्रकृतं दृश्यते ब्रह्म भृगुवल्यां निदर्शितम् ॥१२६॥

आरभ्य शिरसः पुच्छपर्यन्ताऽङ्गानि संस्तुवन् ।
प्रतिष्ठां ब्रह्मणः कृत्वा प्रतिपादयति श्रुतिः ॥१२७॥

[४९]'तद्धेतुव्यपदेशाच्च' सूत्रं ब्रह्म प्रशंसति ।
सर्वं तदानन्दमयं चिद्घनं ब्रह्महेतुकम्[५०] ॥१२८॥

---

४५. 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यत्र ब्रह्मण एव स्वप्रधानत्वमिति ।
— शाङ्करभाष्यम् ब्रह्मसूत्रम् १।१।६।१९

४६. एतस्यैवाऽऽनन्दस्याऽन्यानि भूतानि मात्रामुपजीवन्ति । — बृहदारण्यकोपनिषद् ४।३।३२

४७. यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह, आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति ।
— तैत्तिरीयोपनिषद् २।९

४८. तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः । — तैत्तिरीयोपनिषद् २।१।१

४९. तद्धेतुव्यपदेशाच्च । — ब्रह्मसूत्रम् १।१।६।१४

५०. इदं सर्वमसृजत यदिदं किञ्च । — तैत्तिरीयोपनिषद् २।६

ब्रह्महेतोरतो मुख्यवृत्तिर्धृत्त्या विनिश्चिता ।
ब्रह्माऽऽनन्दमयं चान्यविकारो ब्रह्मकल्पितः ॥१२९॥

ब्रह्मणो हि विकाराङ्गं कथं ब्रह्म भवेदिह ।
'निष्कलं निष्क्रियं शान्तं ब्रह्माऽस्ति' वदति श्रुतिः ॥१३०॥

आनन्दमस्ति ब्रह्मैव साक्षात् प्रवदति श्रुतिः ।
ब्रह्माऽऽनन्दमयं ज्ञात्वा निर्भयो जायते सुधीः ॥१३१॥

वर्णकद्वयसम्बद्धसूत्राण्यष्टौ भवन्त्यतः[५१] ।
ब्रह्माऽऽनन्दमयं पुच्छं प्रतिष्ठेति वदन्त्यहो[५२] ! ॥१३२॥

### ७. अन्तराधिकरणम् (ब्रह्मसूत्रम् १।१।७।२०–२१)

शिष्यः –

[५३]आदित्यमण्डलाऽन्तस्थः पुरुषो वाऽयमस्ति कः ?
हिरण्मयः पुमान् यद्वा सूर्यो वा विबुधो भवेत् ॥१३३॥

[५४]श्रुतिमन्त्रैरभिव्यक्तः श्रौतः पुरुषशब्दितः ।
हिरण्मयः पुमान् किं वा ब्रह्म भवितुमर्हति ॥१३४॥

गुरुः –

सत्यं सर्वात्मकैश्वर्यं जीवे वाऽऽदित्यमण्डले ।
न भवेत् तत् परं सर्वं भवेद् हि परमेश्वरे ॥१३५॥

---

५१. आनन्दमयोऽभ्यासात् । – ब्रह्मसूत्रम् १।१।६।१२–१९

५२. क. रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति ।
ख. आनन्दो ब्रह्मेति व्यजानात् । – तैत्तिरीयोपनिषद् २।७।१, ३।६।१

५३. अथ य एषोऽन्तरादित्ये हिरण्यमयः पुरुषो दृश्यते ... । – छान्दोग्योपनिषद् १।६।६

५४. भेदव्यपदेशाच्चान्यः । – ब्रह्मसूत्रम् १।१।७।२१

[55]सूत्रमन्यद् वदत्येवं द्वयोर्भेदोऽस्ति निश्चयः ।
[56]श्रुतिरेवं हि मनुते सोच्चैरुद्घोषयत्यपि ।।१३६।।

सूर्यो नियम्योऽस्ति लघुर्बृहद् ब्रह्म नियामकम् ।
ब्रह्माऽन्तःस्थं वसति तत् सूक्ष्मरूपेण मोक्षदम् ।।१३७।।

सर्वान्तर्हृदयाऽन्तःस्थं तन्नजानाति कोऽप्यहो ! ।
एतस्मात् कारणाद् ब्रह्म तन्न सूर्यश्चकास्त्यपि ।।१३८।।

सूत्रद्वयेन तस्याऽत्र क्रियते चिन्तनाधिकम् ।
आभ्यां वर्णयतस्तस्याऽन्तर्यामित्वं चिदात्मनः ।।१३९।।

## (८) आकाशाधिकरणम् (ब्रह्मसूत्रम् १।१।८।२२)

शिष्यः –
श्रुतौ शब्दो[57] य 'आकाश'मागतोऽस्ति गुरो ! ऽधुना ।
तद्भूताकाशमत्राऽस्ति सत्यं ब्रह्माऽस्ति वा किमु ? ।।१४०।।

तत् तु भूताऽकाशमस्ति वदन्ति पूर्वपक्षिणः ।
भूताकाशं किमु ब्रह्म ? गुरो ! निर्दिशतु स्वयम् ।।१४१।।

---

५५. य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्याऽऽदित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः । – बृहदारण्यकोपनिषद् ३।७।९
५६. आकाशस्तल्लिङ्गात् । – ब्रह्मसूत्रम् १।१।८।२२
५७. आकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम् । – छान्दोग्योपनिषद् १।९।१

गुरुः –

श्रुतौ [५८]यदा'ऽऽकाश'मित्यभिधानं समुपागतम् ।
तत्त्वतो 'ब्रह्म' तद् विद्धि भूताकाशं न सौम्य ! तत् ॥१४२॥

सृष्टिप्रपञ्चमाकाशाद् भवति चरति जगत् ।
जडाऽऽकाशं न सृष्ट्यादिं कर्तुं शक्नोत्यसम्भवम् ॥१४३॥

एतस्मात् कारणात् सौम्या'ऽऽकाश' वाग् 'ब्रह्म' भाषितम् ।
सृष्टिः स्थितिश्च संहारः सकलं ब्रह्मकारणात् ॥१४४॥

जडः कर्ता न शक्नोति चेतनः सर्वकर्मकृत् ।
चितेः कार्यं हि सृष्ट्यादि जडादेः तन्न सम्भवम् ॥१४५॥

अत एवाऽऽकाशमस्ति ब्रह्मोपादानकारणम् ।
श्रुतिः करोति [५९]शब्दाद्धि भूताऽऽकाशनिवारणम् ॥१४६॥

एतदन्तर्गतं चैकं सूत्रमस्ति विनिश्चितम् ।
निर्भयं तत्करोत्येव ब्रह्मणः प्रतिपादनम् ॥१४७॥

## (९) प्राणाधिकरणम् (ब्रह्मसूत्रम् १।१।९।२३)

शिष्यः –

श्रुतौ या प्राणचर्चाऽऽयात् तद् विकारोऽस्ति वा किमु ?
ब्रह्मैवाऽस्ति न वा ब्रह्मन् ! आज्ञापयतु मामिह ॥१४८॥

---

५८. क. आकाशो वै नामरूपयोर्निर्वहिता ते यदन्तरा तद् ब्रह्म ।
– छान्दोग्योपनिषद् ८।१४।१

ख. तस्माद् वा एतस्मादात्मन आकाशः सम्भूतः, आकाशाद् वायुः, वायोरग्निः ।
– तैत्तिरीयोपनिषद् २।१।१

५९. आकाशस्तल्लिङ्गात् । – ब्रह्मसूत्रम् १।१।८।२२

पूर्वपक्षा वदन्त्यत्र प्राणस्यैव विकारकः ।
विकारास्ते सुषुप्तौ हि यतः प्राणे मिलन्त्यहो ! ॥१४९॥

गुरुः –
सुषुप्तौ हि मिलन्त्येव प्राणे तस्येन्द्रियाणि च ।
पञ्चभूतादिका नैव ब्रह्मण्येव मिलन्त्यमी ॥१५०॥

एतस्मात् कारणादन्त्ये प्राणा मिलन्ति ब्रह्मणि ।
ब्रह्मण्येव विलीयन्ते तद्धि सर्वस्य कारणम् ॥१५१॥

'यः प्राण इति होवाच' विकारान् नैव बोधति ।
विधानं ब्रह्मणः कर्तुं वाक्यमेतत् समागतम् ॥१५२॥

प्राणमेवेति वाक्येऽपि नैव शब्दोऽयमागतः ।
ब्रह्मणः क्रियतेऽनेनाऽवश्यं निर्धारणं पुनः ॥१५३॥

अत्राऽपि सूत्रमेकं हि[६०] 'प्राणो ब्रह्मा'ऽस्ति संवदन् ।
तत्प्राणोपासकं सूत्रं निर्द्वन्द्वं ब्रह्म वक्ति च ॥१५४॥

## (१९) ज्योतिश्चरणाधिकरणम् (ब्रह्मसूत्रम् १।१।१०।२४–२७)

शिष्यः –
[६१]श्रुतौ ब्रह्मन् ! 'दिवो ज्योतिः' समायातं तदस्ति किम् ?
कार्यज्योतिरिदं यद्वा किं ब्रह्मज्योतिरुच्यते ? ॥१५५॥

---

६०. अत एव प्राणः । ब्रह्मसूत्रम् – १।१।९।२३

६१. अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिः । – छान्दोग्योपनिषद् ३।१३।७

जठराग्निरिदं[६२] ज्योतिस्तद् वदन्ति विपश्चितः ।
जठराग्निरिदं ब्रह्म किमाज्ञापयतु प्रभो ! ॥१५६॥

गुरुः –
चतुष्पादस्य कुरुते विधानं ब्रह्मणः श्रुतिः ।
कार्यज्योतिर्नैतदस्ति ब्रह्मज्योतिः सनातनम् ॥१५७॥

अनुवृत्त्या समायातो [६३]यच्छब्दो यद्यपि श्रुतौ ।
तद् वक्ति भासकं ब्रह्म कुरुतेऽन्यनिवर्तनम् ॥१५८॥

अत्राधिकरणे प्राप्तसूत्राणां हि चतुष्टयम्[६४] ।
समागतं सर्वमतं ब्रह्मज्योतिरिदं स्मृतम् ॥१५९॥

### (२०) प्रतर्दनाधिकरणम् (ब्रह्मसूत्रम् १।१।११।२८–३१)

शिष्यः –
'प्राणोऽस्मी'ति श्रुतौ चापि वायुशब्दः समागतः ।
इन्द्रो जीवाऽर्थको वाऽयं शब्दो ब्रह्माऽर्थवाचकः ॥१६०॥

ब्रह्मेति वायुशब्दार्थं न स्वीकुर्वन्ति वादिनः ।
सन्दिग्धं हृदयं तेषां तदर्थं वक्तुमक्षमाः ॥१६१॥

एतस्मात् कारणाद् ब्रह्मन् ! कोऽयं प्राणोऽस्ति वस्तुतः ।
श्रुतौ किमागतं चार्थं शुश्रूषा मयि चाऽऽगता ? ॥१६२॥

---

६२. पादोऽस्य सर्वाभूतानि त्रिपादस्यामृतं दिवि । – छान्दोग्योपनिषद् ३।१२।६
६३. अथ यदतः परो ज्योतिर्दीप्यते । – छान्दोग्योपनिषद् ३।१३।७
६४. ज्योतिश्चरणाभिधानात् । – ब्रह्मसूत्रम् १।१।१०।२४–२७

गुरुः –

'प्राणोऽहमस्मि प्रज्ञात्मा' स्पष्टं प्रवदति श्रुतिः ।
ब्रह्मैवाऽर्थोऽस्ति सुष्पष्टमिन्द्राद्यर्थो न सम्भवः ॥१६३॥

बहूनि ब्रह्मवाच्यानि सिद्धलिङ्गानि सन्ति हि ।
अन्यथा नैव सिद्धानि ब्रह्मणो बाधकानि नो ॥१६४॥

ब्रह्मवाच्यानि लिङ्गानि ब्रह्मण्येवाऽन्वितान्यहो !
नाऽन्वितानि भवन्तीह शक्रजीवाऽनिलादिषु ॥१६५॥

एतस्मात् कारणात् सौम्य ! प्राणोऽपि ब्रह्मवाचकम् ।
न वायुरिन्द्रो जीवात्मा भवन्ति प्राणवाचकाः ॥१६६॥

अस्मिन् प्रकरणे प्राप्तं सूत्राणां हि चतुष्टयम् ।
ब्रुवते तानि सूत्राणि प्राणार्थो ब्रह्मवैभवम् ॥१६७॥

ब्रह्मसूत्रे कारिकायां प्रथमाध्यायवर्णितः ।
एष प्रथमपादोऽत्र समनूद्य समापितः ॥१६८॥

॥ इति ब्रह्मसूत्रकारिकायां प्रथमाऽध्याये प्रथमः पादः ।,

ॐ तत्सद्ब्रह्मणे नमः ।

## ब्रह्मसूत्रकारिकायां

# प्रथमे समन्वयाऽध्याये

## द्वितीयः पादः

(अस्मिन् पादे सर्वत्र प्रसिद्ध्यधिकरणादारभ्य वैश्वानरसहितानि सप्ताऽधिकरणानि सन्ति । अत्राऽस्पष्टब्रह्मलिङ्गयुक्तवाक्याना-मुपास्यब्रह्मविषये विचारः क्रियते ।)

### (१) सर्वत्र प्रसिद्ध्यधिकरणम् (ब्रह्मसूत्रम् १।२।१।१–८)

शिष्यः –

मनोमयादिके वाक्ये[१] यद्रूपं श्रुतिवर्णितम् ।
तत् किं ? परेश्वरो यद्वा ब्रह्मन् ! जीवोऽस्ति वस्तुतः ॥१॥

जीवो मनोमयः किं वा विकारो मनसो भवेत् ?
मयट्प्रत्ययनिष्पन्नो जीवः स्याद् ब्रह्म नैव तत् ॥२॥

[२]'अप्राणो ह्यमना शुभ्रेत्यादिवाक्यादपि श्रुतेः ।
व्यावर्तिते ब्रह्मणस्तज्जीव एव वदन्त्यपि ॥३॥

पूर्वोक्तैः पूर्वपक्षिणां प्रमाणैरपि तर्कितैः ।
ब्रह्म नास्त्येव तज्जीवो दृश्यते सरलैर्जनैः ॥४॥

कृत्वा विनिश्चयं किं तद् आज्ञापयतु मां गुरो !
श्रुतिप्रमाणैः सह तच्छुश्रूषा मे बलीयसी ॥५॥

---

१. मनोमयः प्राणशरीरो भारूपः । – छान्दोग्योपनिषद् ३।१४।२

२. अप्राणो ह्यमनाः शुभ्रः । – मुण्डकोपनिषद् २।१।२

गुरुः –

'जन्माद्यस्य यतः' सूत्रं प्रथमे पाद आगतम् ।
सूत्रेऽस्मिन् स्पष्टमस्त्येव ब्रह्मलिङ्गाख्यवर्णनम् ॥६॥

द्वितये तृतये पादे ब्रह्मणः प्रतिपादनम् ।
सुस्पष्टं दृश्यते नैव कुरुतः पादमन्थनम् ॥७॥

'सर्वं खलु इदं ब्रह्म' [३]छान्दोग्ये शमपूर्वकम् ।
ब्रह्मणः क्रियते चर्चा मनोमननपूर्वकम् ॥८॥

मनोमयादिके वाक्ये प्रत्ययस्तद्धितात्मकः ।
'प्राणशरीरो' वाक्येऽपि बहुब्रीहिसमासकः ॥९॥

शमार्थं विद्धि सर्वं हि ब्रह्माण्डं ब्रह्मकल्पितम् ।
ब्रह्मण्येव विलीयेत तदन्ते तद्विसर्जितम् ॥१०॥

तस्माद्धि कारणादेव श्रुत्युक्तं तन्मनोमयम् ।
जीवो नास्त्येव ब्रह्माऽस्ति मननार्थं विनिश्चितम् ॥११॥

उपास्यरूपेणाऽऽयातं मनोमयमितीरितम् ।
ब्रह्मैवाऽस्ति प्रसिद्धं तन्मनोमयाऽऽख्यशंसितम् ॥१२॥

अस्मिन् प्रकरणे चाष्टौ सन्ति सूत्राणि विद्धि भो !
सर्वत्रादीनि [५]कुर्वन्ति ब्रह्मणः प्रतिपादनम् ॥१३॥

---

३. सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत । – छान्दोग्योपनिषद् ३।१४।१

४. मनोमयः प्राणशरीरो भारूपः । – छान्दोग्योपनिषद् ३।१४।२

५. सर्वत्र प्रसिद्धोपदेशात् । – ब्रह्मसूत्रम् १।८

## (२) अत्त्रधिकरणम् (ब्रह्मसूत्रम् १।२।२।९–१०)

शिष्यः –

अत्ताविषयके ब्रह्मन् ! नैका विप्रतिपत्तयः ।
समायातास्तदुपरि जिज्ञासार्थं निवेदनम् ।।१४

अत्ताविषयके 'यस्य' [६]मन्त्रद्वारा श्रुतिः स्वयम् ।
भोक्ताविषयसम्बन्धे प्रशंसा संस्तुतिः कृता ।।१५।।

सोऽग्निर्जीवोऽस्ति वा ब्रह्म ? यतोऽयं सर्वभक्षकः ।
पूर्वपक्षा वदन्त्यत्र वह्निजीवौ हि भक्षकौ ।।१६।।

क्वचित् कदाचिद् ब्रह्मेदमत्ता नैव भवेदिह ।
भोक्ता जीवो वदन्त्येताः श्रुतयश्चेतरेतराः[७] ।।१७।।

फलानि कर्मणां भुक्त्वा जीवो भोक्ता भवत्यहो !
सदा विस्मयमाविष्टः पश्चात्तापेन तिष्ठति ।।१८।।

सम्पश्यन् तिष्ठतेऽस्माकमनश्नन् परमेश्वरः ।
श्रुतिरुद्घोषतीत्यत्र साक्षी नित्यं चकास्ति सः[८] ।।१९।।

अत्ता जीवोऽथवाऽग्निश्च श्रुतिरुक्तिः प्रदृश्यते ।
सुस्पष्ट'मग्निरन्नादः' [९]श्रुतिः कथयति स्वयम् ।।२०।।

---

६. यस्य ब्रह्म च क्षत्रञ्च उभे भवत ओदनः ।
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ।। – कठोपनिषद् १।२।२४

७. तयोरन्यः पिप्पलं स्वाद्वत्ति । – मुण्डकोपनिषद् ३।१।१

८. (क) अनश्नन्नन्यो अभिचाकशीति । – मुण्डकोपनिषद् ३।१।१
(ख) एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ।।

९. अग्निरन्नादः । – बृहदारण्यकोपनिषद् १।४।६

गुरुः –

अत्ता जीवोऽस्ति वाऽग्निश्च वदन्ति पूर्वपक्षिणः ।
अत्तारौ तावुभौ न स्तो ब्रह्मैवाऽत्ताऽस्ति केवलम् ॥२१॥

ब्रह्मक्षत्रपदैरत्र बुद्ध्यते ह्युपलक्षणम् ।
अत्ता परेश्वरो ब्रह्म नाऽन्योऽत्ता कोऽपि भक्षकः ॥२२॥

ब्रह्मवाचकशब्देन बुद्ध्यते जीवलक्षकः ।
क्षत्रवाचकशब्देन बुद्ध्यते जडलक्षकः ॥२३॥

'अत्ता सर्वं भक्षयते' [१०]सुस्पष्टं भणति श्रुतिः ।
स्थावरा जङ्गमाः सर्वं भक्ष्यं जानीहि ब्रह्मणः ॥२४॥

अत्ता परेश्वरो ब्रह्म खादति ब्रह्मबाहुजौ ।
भक्तवच्छमनाचारं किमन्ये तेमनायिताः[११] ॥२५॥

एतस्मात् कारणादत्ता ब्रह्मैवाऽस्ति दिनक्षये ।
ब्रह्मक्षत्रमुभौ लीनौ भवतस्तद्दिनक्षये ॥२६॥

एतत्प्रकरणं सत्यं ब्रह्मणो [११]बुद्धि नाऽन्यथा ।
अत्ताशब्दार्थको ब्रह्म तदन्ये विनिवारितः ॥२७॥

---

१०. मृत्युर्यस्योपसेचनं क इत्था वेद । – कठोपनिषद् १।२।२४

११. (क) अचारं कथ्यते तद् यत् कटूवम्ललवणान्वितम् ।
(ख) भोज्योपस्करणं मुख्यं मिष्ठान्नं तेमनं स्मृतम् ।
– अमरकोषः (कुलचन्द्रगौतमकृतपरिशेषवर्गः १३७–३८)
(ग) न जायते म्रियते वा विपश्चित् । – कठोपनिषद् १।२।१८
(घ) प्राणस्यान्नमिदं सर्वं प्रजापतिरकल्पयत् ।
स्थावरं जङ्गमं चैव सर्वं प्राणस्य भोजनम् ॥
चराणामन्नमचरा दंष्ट्रिणामप्यदंष्ट्रिणः ।
अहस्ताश्च सहस्तानां शूराणां चैव भीरवः ॥ – मनुस्मृतिः ५।२८–२९

[12]सूत्रद्वयं विद्यतेऽत्र ब्रह्मैवाऽत्ता जुघोषते।
निवार्यते सर्वमन्यद् ब्रह्मैव प्रतिपाद्यते ॥२८॥

## (३) गुहाप्रविष्टाधिकरणम् (ब्रह्मसूत्रम् १।२।३।११–१२)

शिष्यः –
गुहा प्रवेशाभिमुखौ बुद्धिजीवौ न वा किमु ?
पूर्वपक्षा वदन्त्येतौ गुहाविष्टौ न चान्यथा ॥२९॥

सुस्पष्टं गदतु ब्रह्मन् ! गुहायां कौ प्रवेशितौ ?
गुहा काऽस्ति गुरो ! तस्यां प्रविष्टौ तिष्ठतः कथम् ॥३०॥

गुरुः –
भुक्त्वा कर्मफलानीह गुहामन्तः प्रवेशितौ[13] ।
छायाऽऽतपसमानौ द्वौ जीवेशौ मिलितौ स्थितौ ॥३१॥

जडा बुद्धिः कर्मफलं नैव भुङ्क्ते कदाचन।
एतस्मात् कारणाद् बुद्धिं गृह्णन्ति श्रुतयो न हि ॥३२॥

गुहाऽस्ति दहराकाशं तस्मिन् छायाऽऽतपौ यथा।
जीवात्मपरमात्मानौ मिलितौ वसतः सह ॥३३॥

जीवश्छायासमः साक्षी परेशस्तापतूलितः।
यद्वा बिम्बोऽभवत् साक्षी जीवस्तत्प्रतिबिम्बितः ॥३४॥

---

१२. अत्ता चराचरग्रहणात्। – ब्रह्मसूत्रम् १।२।२।९–१०
१३. ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे छायातपौ ब्रह्मविदो वदन्ति।
– कठोपनिषद् १।३।१

अस्मिन् प्रकरणे सूत्रद्वयमस्ति [14]गुहादिकम् ।
छायाऽऽतपसमानौ तौ साक्षीजीवौ हि दृश्यताम् ॥३५॥

## (४) अन्तराधिकरणम् (ब्रह्मसूत्रम् १।२।४।११–१२)

शिष्यः –
छायात्मा वाऽपि जीवात्मा यत् तच्चक्षुषि दृश्यते[15] ।
देवता वा परात्माऽस्ति ? हे गुरो ! तन्निगद्यताम् ॥३६॥

एकं ब्रह्माऽतिरिक्तं तद् वदन्ति पूर्वपक्षिणः ।
तेषु निश्चित्य वदतु छायात्मा कः स एकलः ॥३७॥

गुरुः –
'य एषोऽक्षिणि'[16] यद् दृष्टं तद् विद्धि श्रुतिशंसितम् ।
परमात्मा हि तज्ज्ञेयं दृष्टश्चक्षुषि यः पुमान् ॥३८॥

छायात्मा देवता योऽस्ति दृष्टश्चक्षुषि तद्धि तत् ।
नैव ते देवताछाये पराऽऽत्मा श्रुतिभाषितः ॥३९॥

'कं खं ब्रह्मे'ति यच्चर्चा श्रुत्या हि प्रथमोदिता ।
'वामनित्वादि'चर्चा तु श्रुतिरुद्घोषिता ततः ॥४०॥

श्रुतौ व्यक्तं यदात्मत्वममृतत्वादिकं समम् ।
छायात्मनि न दृश्येते तद्धर्मः परमात्मनः ॥४१॥

---

१४. गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् । – ब्रह्मसूत्रम् ११–१२
१५. ए एषोऽक्षिणि पुरुषो दृश्यते । – छान्दोग्योपनिषद् ४।१५।१
१६. य एषोऽक्षिणि पुरुषो दृश्यत आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेति ।
– छान्दोग्योपनिषद् ४।१५।१

यः साक्षी पुरुषः सौम्य ! स एवाऽक्षिणि दृश्यते ।
उपास्यं तत्तु ब्रह्मैव जीवदेवादयो न हि ॥४२॥

[१७]पञ्चसूत्राणि विद्यन्ते विषयेऽस्मिन् यथार्थतः ।
ब्रुवते तानि सूत्राणि स आत्माऽक्षिणि दृश्यते ॥४३॥

## (५) अन्तर्याम्यधिकरणम् (ब्रह्मसूत्रम् १।२।५।१८–२०)

शिष्यः –
[१८]'अन्तर्यामी'ति शब्दोऽपि श्रुतौ योऽधिगतोऽधुना ।
तस्य कोऽर्थोऽस्ति ? जीवो वा ब्रवीतु परमेश्वरः ॥४४॥

वादिनः प्रवदन्त्यत्र सोऽन्तर्यामी प्रधानकम् ।
जीवोऽस्ति किं वा वदतु सोऽन्तर्यामी परेश्वरः ? ॥४५॥

गुरुः –
श्रुतौ सुस्पष्टमित्युक्त'मन्तर्यामी'ति शब्दतः[१९] ।
भूरापोग्न्यनिलव्योम्नि तिष्ठन् सर्वनियन्त्रकः ॥४६॥

प्रधानं जडमस्त्येव कर्मार्हं तत्कथं भवेत् ?
अदृष्टोऽपि स हि द्रष्टा सैष श्रोताऽश्रुतोऽपि च ॥४७॥

जडात्मकं प्रधानं तु नाऽन्तर्यामी भवत्यतः ।
नियम्योऽस्त्येव जीवस्तु न प्रधानं नियामकम् ॥४८॥

---

१७. अन्तर उपपत्तेः । – ब्रह्मसूत्रम् १३–१७

१८. य इमञ्च लोकं परञ्च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति, यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः । – बृहदारण्यकोपनिषद् ७।१,२

१९. यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः । – बृहदारण्यकोपनिषद् ३।७।२

जीवस्तु दुर्बलोऽज्ञोऽस्ति सीमितो मायिकोऽपि सः ।
अशक्तः स कथं भूयादन्तर्यामी नियामकः ॥४९॥

अन्तर्यामी तु सर्वात्मा व्याप्तो यः सर्वशक्तिमान् ।
सर्वाऽन्तःस्थ स सर्वात्मा सर्वदाऽस्ति नियामकः ॥५०॥

एतस्मात् कारणादेव सर्वज्ञः सर्वसत्त्वकृत् ।
प्रधानजीवौ न स्यातामन्तर्यामी परेश्वरः ॥५१॥

अस्मिन् प्रकरणे सूत्रत्रितयं समुपागतम्[२०] ।
गदन्ति तानि सूत्राणि सोऽन्तर्यामी परेश्वरः ॥५२॥

## (६) अदृश्यत्वाधिकरणम् (ब्रह्मसूत्रम् १।२।६।२१–२३)

शिष्यः –
'भूतयोनिर'यं शब्दःसमायातः श्रुतौ गुरो ![२१] ।
तदर्थः कः प्रधानं वा जीवो वा परमेश्वरः ॥५६॥

विकल्पत्रितये किं तत्प्रधानं वाऽन्यवस्तु किम् ?
भूतसंसृष्टिहेतुः कः सैष वा परमेश्वरः ॥५७॥

धर्मेण वाऽप्यधर्मेण जीवः किं भूतसर्जकः ?
नैवाऽभवद् भूतयोनिरयोनित्वात् परेश्वरः ॥५८॥

एवमित्थं पूर्वपक्षा भूतयोन्यर्थवादिनः ।
दृश्यन्ते किं प्रधानं वा जीवो वा भूतयोनिभाक् ॥५९॥

---

२०. अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् । – ब्रह्मसूत्रम् १।२।५।१८-२०
२१. यत्तददृश्यमग्राह्यं ... तदव्ययं यद् भूतयोनिं परिपश्यन्ति धीराः ।
– मुण्डकोपनिषद् १।१।६

गुरो ! सुस्पष्टमाख्यातु किमेतद् भूतकारणम् ।
सन्दिग्धं मे मनो यस्माद् भवता विनिवार्यताम् ॥६०॥

गुरुः –
'तदव्यय'मयं शब्दः श्रुतौ सुस्पष्टमागतः[२२] ।
अव्ययं ब्रह्ममात्रं हि व्ययार्थाऽन्येऽभिधार्थकाः ॥६१॥

[२३]सर्वज्ञः सर्वविद् ब्रह्माऽभवद् वै भूतकारणम् ।
जडं प्रधानं जीवोऽज्ञो न तौ द्वौ भूतकारणम् ॥६२॥

जगतः समुपादानं निमित्तं वाऽऽदिकारणम् ।
अन्यन्नास्तीह सारांशे समभूत् परमेश्वरः ॥६३॥

[२४]श्रुतिर्भणति कण्ठस्थं प्रत्ययैः सप्रमाणितैः[२५] ।
भूतयोनिरभूद् ब्रह्म नतौ द्वौ समुपस्थितौ ॥६४॥

अस्मिन् प्रकरणे सूत्रत्रितयं समुपागतम्[२६] ।
'ब्रह्मे'ति जगतो हेतुस्तात्पर्यं प्रतिपाद्यते ॥६५॥

## (७) वैश्वानराधिकरणम् (ब्रह्मसूत्रम् १।२।७।२४–३२)

शिष्यः –
[२७]वैश्वानरेण शब्देन श्रुतौ किं वस्तु बुध्यते ।
भूताग्निर्वाऽपि तुन्दाग्निर्जीवो वा परमेश्वरः ? ॥६६॥

---

२२. तदव्ययं यद् भूतयोनिं परिपश्यन्ति धीराः । – मुण्डकोपनिषद् १।१।६
२३. यः सर्वज्ञः स सर्ववित् । – मुण्डकोपनिषद् १।१।६
२४. अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः । – मुण्डकोपनिषद् २।१।२
२५. अग्निर्मूर्धा ... ह्येष सर्वभूतान्तरात्मा । – मुण्डकोपनिषद् २।१।४
२६. अदृश्यत्वादिगुणको धर्मोक्तेः । – ब्रह्मसूत्रम् १।२।६।२१–२३
२७. आत्मानं वैश्वानरमुपास्ते । – छान्दोग्योपनिषद् ५।१८।२

चतुर्ष्वत्र विकल्पेषु पश्यन्तः पूर्वपक्षिणः ।
अन्यान् विहाय ब्रुवते शब्दार्थो जठरानलः ॥६७॥

यद्वा वैश्वानरः शब्दो रूढो भूतानलेऽभवत् ।
किं वा वैश्वानरो जीवः कथ्यते पूर्वपक्षिभिः ॥६८॥

गुरो ! किमीश्वरोऽस्यार्थो भूताग्निर्वा भवेत् किमु ?
यद्वा वैश्वानरस्यार्थो जीवो भवति वा किमु ? ॥६९॥

अनेनैवं प्रकारेण स्वयं ते पूर्वपक्षिणः ।
वैश्वानरार्थं निर्णेतुं न भवन्तीह सक्षमाः ॥७०॥

किं स्याद् वैश्वानरार्थोऽत्र विनिश्चित्य ब्रवीतु माम् ।
श्रुतौ किमुक्तं तद् ब्रह्मन् ! कृपया मां वदत्विह ॥ ७१॥

गुरुः –
वितर्कं कुर्वते ते तु सर्वदा पूर्वपक्षिणः ।
वैश्वानरार्थास्तैरुक्तास्त्रय एव न सन्ति हि ॥७२॥

वैश्वानराऽर्थो ब्रह्मैव पूर्वपक्षा निरर्थकाः ।
वैश्वानरार्थो मूर्धाऽस्ति द्युलोकः श्रुतिघोषितः[२८] ॥७३॥

'किं ब्रह्म ? को न आत्मेति' श्रुतिः प्रश्नयतीत्यतः ।
उपक्रमादितो 'ब्रह्म' तदुत्तरयति श्रुतिः[२९] ॥७४॥

---

२८. तस्य ह वा एतस्याऽऽत्मनो वैश्वानरस्य मूर्धा सुतेजाः ।
– छान्दोग्योपनिषद् ५।१८।२

२९. 'को न आत्मा किं ब्रह्म' इति, 'आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि ।
– छान्दोग्योपनिषद् ५।११।१,६

सोऽस्ति वैश्वानरो ब्रह्म रक्षकं भक्षकं जगत् ।
भूताग्निं वा दवाग्निं वा जीवं ब्रह्म सुरक्षति ।।७५।।

विहाय पूर्वपक्षाणां वितर्कांस्तान्निरर्थकान् ।
[३०]आत्माऽयं परमात्माऽपि सर्वं जानीहि ब्रह्म हि ।।७६।।

[३१]अस्मिन् प्रकरणे सौम्य ! सूत्राणां नवकं पठ ।
वैश्वानरोऽस्ति ब्रह्मैव प्रमाणैर्घोषति श्रुतिः ।।७७।।

ब्रह्मसूत्रे कारिकायां प्रथमाध्यायवर्णितः ।
पादो द्वितीयोऽत्र मया समनूद्य समापितः ।।७८।।

।। इति ब्रह्मसूत्रकारिकायां प्रथमाध्याये द्वितीयः पादः ।।

३०. यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः ।
सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै लोकात्मने नमः ।।
– महाभारतं शान्तिपर्व ४७।६८

३१. वैश्वानरः साधारणशब्दविशेषात् । – ब्रह्मसूत्रम् १।२।७।२४–३२

## ॐ तत्सद्ब्रह्मणे नमः ।
## अथ ब्रह्मसूत्रकारिकायां
## प्रथमे समन्वयाऽध्याये
## तृतीयः पादः

(अस्मिन् पादे द्युभ्वादितः सुषुप्त्युत्क्रान्तिसहितानि त्रयोदशाधिकरणानि सन्ति । अत्र प्रायो ज्ञेयब्रह्मविषये विचारो विहितः ।)

### (१) द्युभ्वाद्यधिकरणम् (ब्रह्मसूत्रम् १।३।१।१–७)

शिष्यः –

ब्रह्मन् ! द्युभ्वादिविषये जिज्ञासा चित्तमागता ।
आधारः कोऽनयोर्ब्रूतां सूत्रात्मा प्रकृतिः किमु[१] ? ।।१।।

जीवः किमथवा ब्रह्म किन्तत् स्यादनयोर्द्वयोः ।
आज्ञापयतु सुस्पष्टं द्युभ्वाधारो भवेन्नु किम् ? ।।२।।

तदित्थं सति सन्देहे भणन्ति पूर्वपक्षिणः ।
आद्यारोऽस्तीह सूत्रात्मा द्वयोजीवप्रधानयोः ।।३।।

ब्रह्मन् ? किमथवा ब्रह्म ? सुस्पष्टं प्रब्रवीतु माम् ।
प्रत्याख्यानेन वादीनां स्वं मतं च निरूप्यताम् ।।४।।

गुरुः –

द्युभ्वादीनां सदाऽऽधारं ब्रह्ममात्रं हि केवलम् ।
अन्ये सर्वे तदाधेया अधिष्ठानं सदेकलम् ।।५।।

---

१. (क) क्षेत्रज्ञ आत्मा पुरुषाः प्रधानं प्रकृतिः स्त्रियाम् । – अमरकोषः
(ख) जीवात्मा परमात्मा च सूत्रात्मेति निगद्यते । – कालवर्गः

जीवो वाऽपि न सूत्रात्मा प्रधानं किमपीह न।
द्युभ्वादीनां सदाऽऽधारो भवितुं शक्नुवन्ति नो ॥६॥

[२]श्रुतिर्वदति सुस्पष्टं सदा मुक्तात्मनामपि।
द्रष्टव्यं चाऽप्यवाप्तव्यं ज्ञेयं ब्रह्माऽऽश्रयं हि तत् ॥७॥

सर्वज्ञत्वं बृहत्त्वं च धर्मौ ब्रह्मण एव हि।
तस्मिन् सदा तौ मिलतो जीवादिषु मिलन्ति नो ॥८॥

अत एवाऽस्ति सर्वात्मा सर्वाऽऽधारं च ब्रह्म हि।
[३]श्रुतिरेतन्निगदति सौम्य ! ज्ञेयं तदेव हि ॥९॥

अस्मिन् प्रकरणे सूत्रसप्तकं [४]समुपागतम्।
वदन्ति तानि सर्वाणि ब्रह्माऽऽधारं सहेतुकम् ॥१०॥

## (२) भूमाधिकरणम् (ब्रह्मसूत्रम् १।३।२।८–९)

शिष्यः –
'यत्र नान्यत्' पदप्राप्तः श्रुतौ मन्त्रः समागतः।
भूम्न उल्लेखमस्त्यत्र भूमा नाम किमस्त्यहो ! ॥११॥

भूमा कः परमात्माऽस्ति ? प्राणात्माऽस्तीह वा किमु।
प्राणी एवाऽस्ति भूमा तु वदन्ति पूर्वपक्षिणः ॥१२॥

---

२. यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः।
तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः ॥
– मुण्डकोपनिषद् २।२।५

३. एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥
– श्वेताश्वतरोपनिषद् ६।११

४. द्युभ्वाद्यायतनं स्वशब्दात्। – ब्रह्मसूत्रम् १।३।१।१–७

सुस्पष्टमाज्ञापयतु भूमा कोऽस्ति गुरो ! मयि ।
प्राणोऽस्ति वा परात्माऽस्ति ? भूमा जिज्ञासितो मया ॥१३॥

गुरुः –
प्राणोपदेशादन्वत्र भूमोल्लेखो यथा कृतः ।
तथा विचारे विहिते न प्राणः परमेश्वरः ॥१४॥

[५]'एष तु' श्रुतिशब्दस्य तत्त्वतोऽर्थे विचारिते ।
व्यावृत्तः प्राणशब्दार्थ आत्माऽस्तीति विचारितः ॥१५॥

प्रसङ्गादागतोऽस्याऽपि 'सोऽहं [६]शोकस्य' चापरः ।
'सत्येनातीति मन्त्राश्च समायाताः परा अपि ॥१६॥

एतस्मात् कारणाद् वत्स ! तात्पर्यार्थो य आगतः ।
सनातनः परब्रह्म भूमाऽस्ति परमेश्वरः ॥१७॥

भूमा नाऽन्यद् विजानाति न शृणोति न पश्यति ।
न स्वल्पे तद्गुणाः सन्ति भूमा ब्रह्माऽस्ति निर्गुणम् ॥१८॥

भूमाऽस्त्यद्वैतरूपेण यत्र तत्राऽस्ति सर्वतः[८] ।
भूमाव्याप्तोऽस्ति सर्वत्र कः कथं कं विपश्यतु ॥१९॥

---

५. एष तु वा अतिवदति यः सत्येनातिवदति । – छान्दोग्योपनिषद् ७।१६।३
६. सोऽहं भगवः शोचामि तं मा भगवान् शोकस्य पारं तारयतु ।
– छान्दोग्योपनिषद् ७।१।३
७. भूमा त्वेव विजिज्ञासितव्य ... यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद् विजानाति स भूमा । – छान्दोग्योपनिषद् ७।२३।१
८. यत्र त्वस्य सर्वमात्मैवाऽभूत्तत्केन कं पश्येत् । – बृहदारण्यकोपनिषद् ४।५।१५

भूमाऽस्ति सुखरूपं हि [9]सुखं नाऽल्पे प्रतिष्ठति ।
ब्रह्माऽनन्दो हि भूमाऽस्ति[10] भूमा बह्वर्थ आगतः ॥२०॥

अस्मिन् प्रकरणे सूत्रद्वयमस्ति समागतम्[11] ॥
तावुभौ वदतो भूमाऽऽनन्दं ब्रह्माऽस्ति तत्त्वतः ॥२१॥

## (३) अक्षराधिकरणम् (ब्रह्मसूत्रम् १।३।३।१०–१२)

शिष्यः –
ओमित्येकाक्षरः शब्दः सुस्पष्टः श्रुतिशंसितः[12] ।
किं ब्रह्मवाचकं यद्वा कोऽर्थोऽस्त्योमस्य वाचकः ॥२२॥

पूर्वपक्षा वदन्त्यत्र ओं शब्दोऽक्षरवाचकः ।
नैतदोमक्षरं ब्रह्मवाचकं वादिनो मतम् ॥२३॥

ओमक्षरसमाम्नाये[13] पठितं सप्रमाणितम् ।
प्रसिद्धं मङ्गलार्थं तद् बह्वर्थं त्र्यक्षरात्मकम् ॥२४॥

इद 'मोंकार एवेदं सर्वं' निगदति श्रुतिः[14] ।
सर्वार्थिकमिदं चैतद् वर्णवाचकमक्षरम् ॥२५॥

---

९. यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखम् । – छान्दोग्योपनिषद्
१०. एषोऽस्य परम आनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति ।
– बृहदारण्यकोपनिषद् ४।३।३२
बहोर्लोपो भू च बहोः । – पाणिनि ६।४।१५८
११. भूमा सम्प्रसादादध्युपदेशात् । – ब्रह्मसूत्रम् १।३।२।१०–१२
१२. एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वम् ।
– बृहदारण्यकोपनिषद् ३।८।८
१३. येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥
१४. ओंकार एवेदं सर्वम् । – छान्दोग्योपनिषद् २।२३।३

एतस्मात् कारणादेनं वदन्ति वर्णमक्षरम् ।
वादिनः पूर्वपक्षास्ते किमस्यार्थः प्रवक्तु माम् ॥२६॥

गुरुः –
अक्षरं परमं ब्रह्म दृश्यते[१५] श्रुतिसंमतम् ।
ओमित्यस्मिन्नक्षरे हि प्रोतमोतमिदं जगत् ॥२७॥

ओमित्येकाक्षरं ब्रह्म पराविद्या[१६] च यं श्रुतिः ।
उद्घोषति सदाऽनेन मुक्तिमार्गोपदिश्यते ॥२८॥

अस्मिन् प्रकरणे सूत्रत्रयमस्ति[१७] समागतम् ।
अक्षरब्रह्मतत्त्वं हि तैः सूत्रैः प्रतिपाद्यते ॥२९॥

## (४) ईक्षतिकर्मव्यपदेशाधिकरणम् (ब्रह्मसूत्रम् १।३।४।१३)

शिष्यः –
ध्येयरूपे समायातमोङ्कारं श्रुतिर्णितम्[१८] ।
तत्किं ब्रह्माऽपरं यद्वा परं ब्रह्म किमुच्यते ॥३०॥

ध्येयमस्त्यपरं ब्रह्म [१९]पूर्वपक्षा वदन्त्यहो ?
आज्ञापयतु किं ध्येयं परंब्रह्माऽथवाऽपरम् ? ॥३१॥

---

१५. एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः ।
– बृहदारण्यकोपनिषद् ३।८।९
१६. अथ परा यया तदक्षरमधिगम्यते । – मुण्डकोपनिषद् १।१।५
१७. अक्षरमम्बरान्तधृते । – ब्रह्मसूत्रम् १।३।३।१०–१२
१८. यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत । – प्रश्नोपनिषद् ५।५
१९. स तेजसि सूर्ये सम्पन्नः ... स सामभिरुन्नीयते ब्रह्मलोकम् । – प्रश्नोपनिषद् ५।५

गुरुः –

ध्येयमस्ति परं ब्रह्म यद्वा तद्वा वदन्तु ते ।
नान्यद् ध्येयं परं ब्रह्म श्रुतिर्घोषिति डिण्डिमः[२०] ॥३२

सनातनं परं ब्रह्म तत् साक्षात्कारमर्हति ।
यदुक्तमपरं ब्रह्म हिरण्यगर्भमस्ति तत् ॥३३॥

परं ब्रह्म समुत्कृष्टमपरब्रह्मणः परम् ।
प्राप्तव्यं तु परं ब्रह्म मोषरूपं परात्परम् ॥३४॥

उपास्ते ब्रह्म चेत् कर्ता [२१]ब्रह्मलोकाऽधिगच्छति ।
ब्रह्मणा सह मुक्तिःस्यान्मुक्तात्मा तदुपासकः ॥३५॥

श्रुतिस्मृतिपुराणाद्या गदन्त्येकमुखा इह[२२] ।
अर्चिर्मार्गं गतो य स्यात् परं ब्रह्माऽधिगच्छति ॥३६॥

यो ब्रह्मबुद्धः सोऽन्त्येऽपि ब्रह्म साक्षात्करिष्यति ।
[२३]ब्रह्मैवाऽऽसीत् पुरा सोऽपि पुनर्ब्रह्माऽधिगच्छति ॥३७॥

अस्मिन् प्रकरणे सूत्रमेकं वक्तीह तत्त्वतः[२४] ।
उपास्ते यः सदोङ्कारं स याति परमां गतिम् ॥३८॥

---

२०. (क) स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते । – प्रश्नोपनिषद् ५।५
(ख) ओमित्येकाक्षरं ब्रह्म ... । – गीता

२१. ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥ –कूर्मपुराण १।१२।२६९

२२. एतेन प्रतिपद्यमान इमं मानवमावर्तं नावर्तन्ते । – छान्दोग्योपनिषद् ८।१५।१

२३. न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति । – बृहदारण्यकोपनिषद् ४।४।६

२४. ईक्षतिकर्म व्यपदेशात्सः । – ब्रह्मसूत्रम् १।३।४।१३

## (५) दहराधिकरणम् (ब्रह्मसूत्रम् १।३।५।१४–२१)

शिष्यः –

श्रुतौ यद् दहराकाशं[२५] समायातं गुरो ! ऽधुना ।
तद् भूताकाशमथवा जीवो वा ब्रह्म किं भवेत् ॥३९॥

किन्तद् ब्रह्मपुरे सूक्ष्मं हृत्पद्ममिव यद् घरम् ।
दहराकाशमस्त्येतज्जिज्ञासा तस्य विद्यते ॥४०॥

तद् ब्रह्मपुरमस्त्यस्य ब्रह्मणः प्रतिपत्तये ।
श्रुतिर्वक्त्यत्र गन्तव्यं बोद्धव्यं वक्तु मां गुरो ! ॥४१॥

पूर्वपक्षा वदन्त्यत्र तद् भूताकाशमस्त्यपि ।
रूढं भूताकाशमिव शास्त्रेऽपीत्थं लगत्यपि ॥४२॥

तदाकाशं परिच्छिन्नमल्पमस्तीति हेतुतः ।
जीव एव वसेन्नूनं ब्रह्म नास्ति ब्रुवन्ति ते ॥४३॥

गुरुः –

दहराकाशवाच्यं तन् न जीवो ब्रह्म विद्धि तत् ।
तन्न भूताकाशमस्ति न तदस्ति श्रुतिर्मतम् ॥४४॥

यन्मात्रं बाह्यमाकाशं [२६]तन्मात्रं दहरोभवेत् ।
द्युभ्वादयः सन्ति तत्र भणति श्रुतिरप्यहो ![२७] ॥४५॥

---

२५. अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम् । – छान्दोग्योपनिषद् ८।१।१

२६. यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः । – छान्दोग्योपनिषद् ८।१।३

२७. उभे अस्मिन्नुद्यावापृथिवी अन्तरेव समाहिते । – छान्दोग्योपनिषद् ८।१।३

बाह्याकाशादपि ज्यायान् [२८]बाह्याकाशस्य कारणम्[२९] ।
पापहीनो लोकधर्ता सेतुरात्माऽत्र तिष्ठति[३०] ।।४६।।

ब्रह्मैव दहराकाशः श्रुतिः कथयतीत्यतः ।
भूताकाशं न जीवात्मा दहरे वसतो नहि ।।४७।।

अस्मिन् प्रकरणे चाष्टौ सूत्राणि [३१]कथयन्त्यपि ।
ब्रह्मैव दहराकाशो जडं भूतं न जीवकः ।।४८।।

## (६) अनुकृत्याधिकरणम् (ब्रह्मसूत्रम् १।३।६।२२–२३)

शिष्यः –
श्रुतिः सुस्पष्टमाख्याति [३२]येन भासयते जगत् ।
यस्य भासा सर्वमिदं भासते भुवनत्रयम् ।।४९।।

यस्य भासमवाप्यैव चन्द्रताराश्चकासते ।
विभाति ब्रह्म किं वा तद् भासकं सूर्यबिम्बकम् ।।५०।।

पूर्वपक्षा वदन्त्यत्र कश्चित् सूर्यादपि बृहत् ।
सम्भवेदति तेजस्वी ज्योतिष्मान् विश्वभासकः ।।५१।।

गुरो ! किमाज्ञपयतु भासकं ब्रह्म वाऽपरम् ?
किं तत् सूर्यसमश्चाऽन्यत् सूर्यादन्यो भवेन्नु कः ? ।।५२।।

---

२८. ज्यायानाकाशात् । – शतपथब्राह्मण १०।६।३।२
२९. तस्माद् वा एतस्मादात्मन आकाश सम्भूतः । – तैत्तिरीयोपनिषद् २।१।१
३०. एष आत्माहपतपाप्मा विजरो विमृत्युः । – छान्दोग्योपनिषद् ८।१।५
३१. दहर उत्तरेभ्यः । – ब्रह्मसूत्रम् १।३।५।१४–२१)
३२. न तत्र सूर्यो भाति न चन्द्रतारकम् । – मुण्डकोपनिषद् २।२।१०

गुरुः –

विपक्षाः कल्पयन्त्यन्यं सूर्यादन्योऽस्ति भासकः ।
ब्रह्मणः को भवेदन्यः सूर्यादीनां च भासकः ॥५३॥

यस्य भासा विभान्त्येते विश्वं सूर्यादयः समे ।
वायुर्वाति जलं याति मही धारयतेऽखिलम् ॥५४॥

सर्वं प्रकाशते ब्रह्म परमात्मा सचेतनः ।
सूर्याचन्द्रमसौ तारास्तत एव चकासते ॥५५॥

[३३]श्रुतयः स्मृतयश्चापि[३४] भाषन्ते ब्रह्म भासकम् ।
यस्य भासा सर्वमिदं भासितं भुवनंत्रयम् ॥५६॥

सूत्रद्वयं समायातमत्रापि [३५]वदतो हिते ।
सप्रमाणं प्रस्तुतः किं ब्रह्माऽस्ति सर्वभासकम् ॥५७॥

## (७) प्रमिताधिकरणम् (ब्रह्मसूत्रम् १।३।७।२४–२५)

शिष्यः –

'अङ्गुष्ठमात्रः' पुरुषो हृदाकाशेऽधितिष्ठति[३६] ।
श्रुतेरुद्घोष एषोऽस्ति सर्ववेदान्तडिण्डिमः ॥५८॥

---

३३. न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ – मुण्डकोपनिषद् २।२।१०

३४. न तद् भासयते सूर्यो न शशाङ्को न पावकः ।
यदादित्यगतं तेजो जगद् भासयतेऽखिलम् ॥
यच्चन्द्रमसि यच्चाग्नौ तत् तेजो विद्धि मामकम् ॥– श्रीमद्भगवद्गीता १५।१६,१२

३५. अनुकृतेस्तस्य च । – ब्रह्मसूत्रम् १।३।६।२२–२३

३६. अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । – कठोपनिषद् २।४।१३

योो मध्यदेहे वसति स जीवो वा किमीश्वरः ?
स ईश्वरो न जीवोऽस्ति वदन्ति पूर्वपक्षिणः ॥५९॥

शास्त्रं वदति सुस्पष्टं जीवोऽङ्गुष्ठप्रमाणकः[३७] ।
सूक्ष्मदेहाभिमानी स स्वर्गं वा नरकं भ्रमेत् ॥६०॥

गुरुः –
ते मिथ्यावादिनः सन्ति सर्वांशे पूर्वपक्षिणः ।
अयुक्तं ते वदन्तीह जीवो नास्ति स ईश्वरः ॥६१॥

ते वदन्तीह तं जीवं तथापि न हि तत्त्वतः ।
परमेश्वर एवाऽस्ति श्रुतिर्घोषति कण्ठतः[३८] ॥६२॥

केवलोऽङ्गुष्ठमात्रो न स ईशानोऽपि शासकः ॥
परमात्मा च ब्रह्मैव भूतभव्यभवत्प्रभुः ॥६३॥

ब्रह्मणः स्थापनं कृत्वा जीवं व्यावर्तते श्रुतिः ।
श्रुतिर्मण्डयते ब्रह्म वेदानां च मतं त्विदम् ॥६४॥

जीवोऽपि ब्रह्मणः स्वल्प आभासः प्रतिबिम्बते ।
सर्वाऽधारं तु सद्ब्रह्म भासकं च नियामकम् ॥६५॥

एतस्मात् कारणाद् ब्रह्माऽङ्गुष्ठतुल्यं शरीरगम् ।
तमेव जीवं जल्पन्ति ब्रह्मणोंऽशस्तदेव सः ॥६६॥

---

३७. अथ सत्यवतः कायात् पाशबद्धं वशं गतम् ।
अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात् ॥ – महाभारत ३।२९७।१७

३८. अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ।
ईशानो भूतभव्यस्य स एवाद्य स उ श्वः ॥ एतद्वै तत् ॥– कठोपनिषद् २।१।१३

३९. शब्दादेव प्रमितः । – ब्रह्मसूत्रम् १।३।८।२४–२५

अस्मिन् प्रकरणे सूत्रद्वयमस्ति वदव्यपि[३९] ।
अङ्गुष्ठमात्रः पुरुषो ब्रह्मणोशः स ईश्वरः[४०] ॥६७॥

## (८) देवताधिकरणम् (ब्रह्मसूत्रम् १।३।८।२६–३३)

शिष्यः –
यो दृष्टवान् ब्रह्म साक्षाद् ऋषि र्वा देवताऽपि वा ।
[४१]श्रुतिर्वदति कैवल्यं प्राप्य मुक्तोऽभवत् स तु ॥६८॥

उभयोर्ब्रह्मविद्यायामधिकारोऽस्ति वा न वा ? ।
इत्थमत्राऽस्ति सन्देहः किं तयोर्ऋषिदेवयोः ? ॥६९॥

नार्थित्वं नाऽपि सामर्थ्यं विद्वत्ता योग्यतादिकम् ।
संस्कारहीने देवे तु नाऽधिकारित्वमस्त्यहो ![४२] ॥७०॥

तदित्थमत्र सन्देहे पूर्वपक्षा वदन्त्यपि ।
शरीरहीने देवे तु संस्काराणामसम्भवः ॥७१॥

संस्कारहीनेषु कथं ब्रह्मविद्याऽस्त्यसम्भवः ? ।
अत एवाऽस्ति देवेषु ब्रह्मविद्याऽप्यसम्भवः ॥७२॥

---

४०. ईश्वरः सर्व भूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥ – श्रीमद्भगवद्गीता १८।६१
४१. तद्यो यो देवानां प्रत्यबुद्ध्यत स एव तदभवत् तथर्षीणाम् ।– बृहदारण्यकोपनिषद्
४२. अर्थी समर्थो विद्वाञ्शास्त्रेणापर्युदस्तोऽधिक्रियते ।
४३. विरोधे गुणवादः स्यादनुवादोऽवधारिते ।

गुरुः –
अधिकारोऽस्ति देवेषु यद्वा तद्वा वदन्तु ते ।
अर्थवादेन मन्त्रादिद्वारा देहोऽभिजायते[४३] ॥७३॥

व्रतबन्धादिसंस्कारो देवेषु न कृतेष्वपि ।
[४४]तेषु वेदाः प्रस्फुरन्ति वेदवाक्यं प्रदृश्यते ॥७४॥

पूर्वं शक्रादयो देवा[४५] गच्छन्तो ब्रह्मणा सह ।
प्राप्ता ब्रह्मोपदेशं ते छान्दोग्येऽपि च वर्णितम् ॥७५॥

दध्यङ्ङाथर्वणश्चाऽपि [४६]गच्छन्तौ [४७]भृगुरश्विनौ ।
ब्रह्मोपदेशमकरोद् दृश्यते श्रुतिवर्णितम् ॥७६॥

---

भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः ॥
(क) प्रजापतिरात्मनो वपामुदक्खिदत् । – गुणवादः
(ख) अग्निर्हिमस्य भेषजम् । – अनुवादः
(ग) इन्द्रो वृत्राय वज्रमुदयच्छत् । – अर्थवादः
(घ) आदित्यो यूपः । यजमानः प्रस्तरः । वायुर्वै क्षेपिष्ठा देवता ।
– शुक्लयजुर्वेदः, अद्वैतसिद्धिः

४४.क. यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥ – श्वेताश्वतरोपनिषद् ६।१८
ख. सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।
दिवञ्च पृथिवीञ्चैव चान्तरिक्षमथो स्वः ॥ – ऋग्वेदसंहिता १०।१९०।३
ग. युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवाः ॥ – वेदव्यासः

४५. एकशतं ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवास ।
– छान्दोग्योपनिषद् ८।११।३

४६. भृगुर्वै वारुणि वरुणं पितरमुपससार अधीहि भगवो ब्रह्म ।
– तैत्तिरीयोपनिषद् ३।१

४७. इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतद् ऋषिः पश्यन्नवोचत्, रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय । – बृहदारण्यकोपनिषद् २।५।१९

४८. तदुपर्यपि बादरायणः सम्भवात् । – ब्रह्मसूत्रम् १।३।९।३४–३८

एतस्मात् कारणाद् ब्रह्मविद्यायामधिकारवान् ।
सुस्पष्टं दृश्यते देवो भ्रमो नास्ति न विस्मयः ॥७७॥

सूत्राणामष्टकं चात्र [४८]मुक्तकण्ठं ब्रवीति तत् ।
देवानामधिकारोऽस्ति ब्रह्मविद्याऽवगाहने ॥७८॥

## (९) अपशूद्राधिकरणम् (ब्रह्मसूत्रम् १।३।९।३४–३८)

शिष्यः –
तदित्थं ब्रह्मविद्यायां देवाः सन्त्यधिकारिणः ।
तथैव वेदविद्यायां शूद्राः किमधिकारिणः ? ॥७९॥

त्रैवर्णिकाऽधिकारोऽस्ति ब्रह्मविद्याप्रपाठने ।
यथा तथैव शूद्राणामधिकारोऽस्ति शास्त्रतः[४९] ॥८०॥

ब्रह्मविद्याधिकारोऽस्ति विदन्ति पूर्वपक्षिणः ।
शूद्राणां च गुरो ! वक्तु किं ते स्युरधिकारिणः ? ॥८१॥

गुरुः –
देवादृशा न शूद्रास्ते ब्रह्मविद्याधिकारिणः ।
संस्कारो नाऽपि देवानामधिकारोऽस्ति शास्त्रतः ॥८२॥

देवेषु पूर्वसंस्कार आगतः सुकृताऽनुकृत् ।
तेषां वेदार्थज्ञानं तु स्फुरेणं भवति स्वतः ॥८३॥

श्रुतौ शूद्रस्तु राजाऽस्ति जानश्रुत्यभिधो जनः ।
रैक्वस्तं स्मारयन्नासीत् शोकं मा कुरु तन्मृषा ॥८४॥

---

**४९. आजहारेमाः शूद्र अनेनैव मुखेनाऽऽलापयिष्यथः । – छान्दोग्योपनिषद्**
**५०. न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हीति । – मनुस्मृतिः १०।१२।६**

शूद्रशब्दो न रूढोऽस्ति शुद्धः शब्दोऽस्ति यौगिकः ।
एतस्माद् वेदविद्यायां शूद्रास्ते नाऽधिकारिणः ॥८५॥

संस्कारहीनः शूद्रोऽस्ति तदित्थं मनुरब्रवीत[५०] ॥
संस्कारादिक्रियाहीना आसन् शूद्रास्तु पूर्वतः ॥८६॥

[५१]यज्ञक्रियासु शूद्राणां नाधिकारः श्रुतौ श्रुतम् ।
अतस्ते वेदविद्यायां कथं स्युरधिकारिणः ॥८७॥

अस्मिन् प्रकरणे चापि सूत्राणामस्ति पञ्चकम्[५२] ।
नाऽधिकारोऽस्ति शूद्राणां मतं तेषां हि तत्त्वतः ॥८८॥

## (१०) कम्पनाधिकरणम् (ब्रह्मसूत्रम् १।३।१०।३९)

शिष्यः –

[५३]श्रुतौ कम्पनशब्दो य आगतो दृश्यते मया ।
स किं लोकान् भीषयते ? ब्रह्मन् ! किं वक्तु मामिह ॥ वा
स विभी भीषयन् लोकान् किं वा ब्रह्मन् ! प्रवक्तु माम् ॥८९॥

स किं वज्रोऽस्ति वायुर्वा न चेत् किं ? परमेश्वरः ?
सन्दिग्धं मे मनस्तस्मात् शूश्रूषा महती मम ॥ (वा)
शुश्रूषा महती ब्रह्मन् सन्देग्धि हृदयं मम ॥९०॥

शब्दान् 'महद्भय'मिति वदन्ति पूर्वपक्षिणः ।
भयङ्करोऽस्ति किं वज्रो यद्वा किं भयकारणम् ॥९१॥

---

५१. तस्माच्छूद्रो यज्ञेनऽनवा । – तैत्तिरीयसंहिता ७।१।१।६
५२. शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते । – ब्रह्मसूत्रम् १।३।९।३४–३८
५३. यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम् ।
महद्भयं वज्रमुद्यतं य एतद् विदुरमृतास्ते भवन्ति ॥ – कठोपनिषद् २।६२

'प्राण एजति' वाक्येन किं वा वायुः प्रचक्षते ?
अधिदैवादिरूपेण किं वायुर्विश्वचालकः ? ॥९२॥

एतस्मात् कारणाद ब्रह्मन् ! श्रुतिवाक्यविवेचनात् ।
विश्वं प्रकम्पयन् कोऽस्ति ? मनो मे बोद्धुमुत्सुकम् ॥९३॥

गुरुः –
श्रुतौ सुस्पष्टमायातास्त्रयः शब्दा विलोकिताः ।
तेषामाधारतश्चात्र कुर्वे किञ्चिद् विवेचनम् ॥९४॥

शब्दा'न्महदभय'मिति[५४] यस्माद् भयमुपागतम् ।
देवाः सूर्यादयः सर्वे स्वकार्यं कुर्वतेऽनिशम् ॥९५॥

'प्राण एजति' वाक्येन वायुरूपः सदागतिः ।
देहादिविश्वं ब्रह्माण्डं सञ्चालयति सन्ततम् ॥९६॥

वायुर्वज्रो न कोऽप्यस्ति तत्तु ब्रह्म सनातनम् ।
तन्मतं पूर्वपक्षाणां सर्वं भवति खण्डितम् ॥९७॥

यस्य ज्ञानेन मनुजश्चाऽमृतं विन्दते परम्[५५] ।
श्रुतिः सुस्पष्टमाख्याति सच्चिद् ब्रह्माक्षरं परम् ॥९८॥

---

५४. क. भयादस्याग्निस्तपति भयात्तपति सूर्यः ।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥ – कठोपनिषद् २।६।३
ख. भीषास्माद् वातः पवते भीषोदेति सूर्यः ।
भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः ॥ – तैत्तियरीयोपनिषद् ८।१

५५. तदेव शुक्लं तद्ब्रह्म तदेवामृतमुच्यते ।
तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन ॥ – कठोपनिषद् २।६।१
तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ।
– शुक्लयजुर्वेदः ३१।१८, श्वेताश्वतरोपनिषद् ६।१५।३

अस्मिन् प्रकरणे सूत्रमेकमस्ति[५६] प्रवक्ति तत् ।
वज्रवाय्वादयः सर्वं ब्रह्माऽस्ति परमेश्वरः ॥९९॥

## (११) ज्योतिरधिकरणम् (ब्रह्मसूत्रम् १।३।११।४०)

शिष्यः –
श्रुतौ समागतः शब्दः [५७]'परं ज्योतिरिरिति' श्रुतः ।
स ब्रह्मवाचकः किं वा नो चेत् किं सूर्यमण्डलम् ? ॥१००॥

वदन्ति वादिनोऽत्रापि श्रुत्याधारे वितर्किताः ।
परं ज्योतिर्ब्रह्म नास्ति तदर्थः सूर्यमण्डलम् ॥१०१॥

साक्षात्कारे कृते जीवो जीवन्मुक्तो भवत्यतः ।
परब्रह्म भवंत्येव शास्त्रसम्मतिरीदृशी ॥१०२॥

गमागमौ न भवत उत्क्रान्तिस्तु निषेधिता ।
एतस्मात् कारणाज्ज्योतिर्वस्तुतः सूर्यमण्डलम् ॥१०३॥

पूर्वोक्तपूर्वपक्षाणां मतमेतद्धि सारतः ।
परं ज्योतिर्ब्रह्म किं वा तत्त्वतः सूर्यमण्डलम् ? ॥१०४॥

गुरुः –
तज्ज्योतिस्तु परं ब्रह्म कथं स्यात् सूर्यमण्डलम् ।
ज्योतिषामपि तज्ज्योतिः परं ज्योतिः सुनिर्मलम् ॥१०५॥

---

५६. कम्पनात् । – ब्रह्मसूत्रम् १।३।१०।३९
५७. एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते ।
– छान्दोग्योपनिषद् ८।१२।३

शरीरान्निर्गतं ज्योतिः परं ज्योतिषि लीयते[५८] ।
एतदर्थं श्रुतेर्वाक्यं ब्रह्मण्येव मिलत्यहो ! ॥१०६॥

समुत्थानार्थकञ्चैतन्निर्गमार्थो न देहतः ।
हृदन्तर्ज्योतिरुत्थाय गत्वामिलति नाऽर्थतः ॥१०७॥

एतद् वाक्यार्थमस्त्येतत् त्वं पदार्थविवेचनम् ।
स्थूल सूक्ष्मं च विज्ञाय देहहेतुविवेचनम् ॥१०८॥

उपसम्पत्तिशब्दार्थः प्राप्तिर्नैवाऽभिधीयते ।
'त्वं' वस्तु शोधितं शुद्धं ब्रह्मसायुज्यमेव हि ॥१०९॥

अत्राऽस्ति सूत्रमेकं हि [५९]ज्योतिःशब्दार्थमन्ततः ।
ब्रह्मज्योतिषि लीनार्थो ज्योतिर्दर्शन शब्दतः ॥११०॥

## (१२) अर्थान्तरत्वव्यपदेशाधिकरणम् (ब्रह्मसूत्रम् १।३।१२।४१)

शिष्यः –
'आकाश' शब्दश्चाऽऽयातो दृष्टः पुनरिह श्रुतौ[६०] ।
किं तद् ब्रह्माऽथवा भूताकाशं सन्देग्धि मे मनः ॥१११॥

अवकाशात्मकं शून्यं स्थानं तन्नामरूपयोः ।
[६१]निर्वाहकं चाऽस्मदीयं भूताकाशं तदुच्यते ॥११२॥

---

५८. शरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य । – छान्दोग्योपनिषद् ८।१२।३
५९. ज्योतिर्दर्शनात् । – ब्रह्मसूत्रम् १।३।११।४०
६०. आकाशो वै नाम नामपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा ।
– छान्दोग्योपनिषद् ८।१४।१
६१. नामरूपयोर्निर्वहिता । – छान्दोग्योपनिषद् ८।१४।१

पूर्वपक्षा वदन्त्येतद् युक्त्या वाऽपि न भाषया ।
वक्तुमर्हति न ब्रह्म दृढविश्वासधारिणः ॥११३॥

इदमित्थं पूर्वपक्षा भूताकाशं वदन्त्यतः ।
आज्ञापयतु मामत्र भूताकाशं न वा परम् ? ॥११४॥

गुरुः –
श्रुतौ निर्वाहकः शब्द अवकाशार्थ आगतः ।
इत्यत्र पूर्वपक्षाणामर्थस्य न हि सङ्गतिः ॥११५॥

निर्वाहकत्वशब्दस्य गम्योऽर्थोऽस्ति नियन्त्रकः ।
ब्रह्मैवाऽस्ति नियन्ता तु सुस्पष्टं श्रुतिवाक्यतः[६२] ॥११६॥

नियन्ता भवितुं नार्हो भूताकाशोऽस्त्यचेतनः ।
[६३]श्रुतिर्वदति तद् ब्रह्माऽमृतं कं खं च ब्रह्म तत् ॥११७॥

ब्रह्मत्वममृतत्वं च कं खं धर्माश्चितेरिह ।
जानीहि शब्दं चाऽऽकाशं न ब्रह्माऽस्ति प्रभाषितम् ॥११८॥

ब्रह्माऽतिरिक्तः को भूयात् कर्ताऽस्मन्नामरूपयोः ।
भूताकाशः कथं भूयात् ? पञ्चतत्त्वेषु सैकलः ॥११९॥

अस्मिन् प्रकरणे दृष्टं सूत्रमेकं समागतम्[६४] ।
आकाशशब्दाद् ब्रह्मैव श्रुत्या तर्केण बुध्यते ॥१२०॥

---

**६२. अनेन जीवेनाऽऽत्मनानुप्रविश्य नामरूपे व्याकरवाणि ।– छान्दोग्योपनिषद् ६।३।२**
**६३. तद्ब्रह्म तदमृतं स आत्मा । – छान्दोग्योपनिषद् ८।१४।१**

## (१३) सुषुप्त्युत्क्रान्त्यधिकरणम् (ब्रह्मसूत्रम् १।३।१३।४२–४३)

शिष्यः –
ब्रह्मन् ! 'कतम आत्मेति' [६५]श्रुतौ वाक्यं समागतम् ।
सविज्ञानमयश्चात्मा जीवो वा ब्रह्म वा किमु ? ॥१२१॥

श्रुतेश्चादौ च मध्ये च तदन्तेऽपि च वर्णिता[६६] ।
संसारिणां हि जीवानां गतिर्जीवनपद्धतिः ॥१२२॥

स विज्ञानमयश्चात्मा कदा स्वप्नेऽपि जाग्रति ।
सुषुप्तौ च भ्रमत्येवं मनसा सह सञ्चरन् ॥१२३॥

इत्थं लोके सञ्चरति विज्ञानमयजीवकः ।
आदौ दृष्ट उभौ शब्दोऽस्त्यन्ते विज्ञानवाचकः ॥१२४॥

पूर्वपक्षा ददत्यत्र प्रमाणं जीवनिर्णये ।
सजीवोऽस्त्यथवा ब्रह्म ? भवान् वदतु मां गुरो ! ॥१२५॥

गुरुः –
विषयेऽस्मिन् पूर्वपक्षा जीवपक्षे ब्रुवन्तु यत् ।
स जीवो न हि ब्रह्मैव तर्कान् बहुददत्वपि ॥१२६॥

'मयट्प्रत्ययरूपत्वा'दादौ जीवकुराऽऽगता[६७] ।
मध्येऽन्त्ये च समायाता सङ्गहीनाऽस्त्यसत्कुरा ॥१२७॥

---

६४. आकाशोऽर्थान्तरत्वादि व्यपदेशात् । – ब्रह्मसूत्रम् १।३।१२।४१
६५. पुरुषः समानः सन्नुभौ लोकावनुसञ्चरति । – बृहदारण्यकोपनिषद् ४।३।७
६६. कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः ।
– बृहदारण्यकोपनिषद् ४।३।७

ताषामन्त्ये समायाता जीवरूपार्थबोधिका ।
अनुवादेन सा साक्षात् ब्रह्मविज्ञापिनी कुरा ॥१२८॥

आभ्यः कुराभ्यः परतो जाग्रदादेरवस्थितिः ।
ताभ्योऽपि परतः साक्षी परमात्मा वसत्यहो ! ॥१२९॥

सरलेन प्रमाणेन ब्रह्म न ज्ञायते परम् ।
श्रुतिवाक्यस्य तात्पर्यद्वारा तद् बुध्यते परम् ॥१३०॥

'त्वं' जीवात्मनमाकृष्य 'तद्' ब्रह्माऽक्षरचायकम्[६८] ।
तिस्रोऽवस्था विनिर्दिश्य ब्रह्म ज्ञातुं समाहिताः ॥१३१॥

तदत्र जीवमुल्लिख्य तदन्ते प्रतिपादितम् ।
श्रुतिवाक्यं ब्रह्मणो हि चिन्तनं कुरुतेऽनिशम् ॥१३२॥

अस्मिन् प्रकारणै सूत्रद्वयमस्ति समागतम्[६९] ।
प्रतिपादय तस्तौ द्वौ ब्रह्मैवाऽस्तीति निर्णयम् ॥१३३॥

ब्रह्मसूत्रे कारिकायां प्रथमाऽध्यायवर्णितः ।
पादस्तृतीयोऽपि मया समनूद्यसमापितः ॥

॥ इति ब्रह्मसूत्रकारिकायां प्रथमाध्याये तृतीयः पादः ॥

६७. कुर शब्दे इति धातो रूपम् (तुदादौ)
६८. चाय पूजनिशामनयो इति धातो रूपम् (भ्वा.उ.)
६९. सुषुप्त्युत्क्रात्योर्भेदेन। – ब्रह्मसूत्रम् १।३।१३।४२–४३

ॐ तत्सद्ब्रह्मणे नमः ।

अथ ब्रह्मसूत्रकारिकायां

# प्रथमे समन्वयाऽध्याये चतुर्थः पादः

(अस्मिन् पादेऽनुमानतः सर्वव्याख्यानसहितान्यष्टावधिकरणानि सन्ति । अत्र प्रधानविषये सन्दिग्धानां, अव्यक्ताऽजादिपदार्थानां सम्बन्धे विचारः कृतोऽस्ति)

## (१) अनुमानाधिकरणम् (ब्रह्मसूत्रम् १।४।१।१–७)

शिष्यः –

समायातोऽत्र विषयश्चाऽव्यक्तः श्रुतिगोचरः[1] ।
प्रधानमथवा किं तत् शरीरं किं निगद्यताम् ॥१॥

तदित्थं सति सन्देहे – प्रधानं साङ्ख्यवादिनः ।
अव्यक्तशब्दवाच्यं तु प्रधानं ते वदन्त्यतः ॥२॥

महतः परमव्यक्तमव्यक्तात्मपुरुषः परः ।
प्रत्यभिज्ञतयाऽऽयातौ द्वौ शब्दौ श्रुतितः स्वतः ॥३॥

इदं साङ्ख्यमतं प्रोक्तमव्यक्तं तैः प्रधानकम् ।
शरीरं न भवत्येतत् प्रमाणैः श्रुतिदर्शितैः ॥४॥

किं स्यादव्यक्तवाच्यं तदाज्ञापयतु मां गुरो !
शरीरमथवा किं तत् प्रधानं किमुत प्रभो ! ॥५॥

---

१. महतः परमव्यक्तमव्यक्तात्पुरुषः परः । – कठोपनिषद् १।३।११

अव्यक्तं हि शरीरं चेत् स्थूलं सूक्ष्मं च कारणम् ।
निवारयतु सन्देहमेतेषां कतमं भवेत् ? ॥६॥

गुरुः –
अव्यक्तं पदमेतद्धि शरीरप्रतिपादकम् ।
प्रत्यभिज्ञाऽभवच्चाऽस्य श्रुतिवाक्यसमर्थितम् ॥७॥

श्रुतौ सजीवो देहो हि रथमारोप्य भाषितः[२] ।
पूर्वोक्तश्रुतिवाक्येन सम्बन्धोऽपि च शंसितः ॥८॥

साङ्ख्याः प्रधानं भाषन्ते प्रत्यभिज्ञाऽस्ति कारणम् ।
शरीरं प्रवदन्त्यर्थं श्रुत्या सोऽर्थो निवार्यते ॥९॥

प्रत्यभिज्ञाऽपेक्षया तु साङ्ख्यानां श्रुतिवर्णिता ।
प्रत्यभिज्ञा विशेषाऽस्ति या भवेत् श्रुतिसम्मता ॥१०॥

त्रिषु देहेषु मध्येषु कारणं यत् तदस्त्यहो !
अतीव सूक्ष्मं भाषन्ते सुधियस्तन्न भासते ॥११॥

अव्यक्तशब्दवाच्यं तत्छरीरं यद्धि कारणम् ।
प्रधानं न भवत्येतत् श्रुतिसारः स एव हि ॥१२॥

ईक्षतेरिति सूत्रेण प्रधानं खण्डितं भवेत् ।
अत एवाऽव्यक्तमिति शरीरं कारणाऽन्वितम् ॥१३॥

अव्यक्तं न भवेद् ज्ञेयं श्रुतिस्तत् परिबोधते ।
ज्ञेयोऽस्ति परमात्मा हि प्रधानं नैव तत्त्वतः ॥१४॥

---

२. **आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।**
**बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ।**
**इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ॥ – कठोपनिषद् १।३।३।४**

अस्मिन् प्रकरणे सूत्रसप्तकं समुपागतम्[३] ।
श्रुतितो बाधितं चैतत् प्रधानं नाऽनुमानतः ॥१५॥

## (२) चमसाधिकरणम् (ब्रह्मसूत्रम् १।४।२।८–१०)

शिष्यः –
गुरो ! श्रुतौ समायातमजामेकां[४] किमर्थकम् ।
दृष्टं साङ्ख्यमते स्पष्ट'मजा'प्रकृतिशंसनम् ॥१६॥

'अजा' नाम जलं तेजो यद्वाऽन्नं प्रकृतिः किमु ?
एतेषु किमजा ब्रह्मन् ! सन्देग्धि हृदयं मम ॥१७॥

किं वा लोहितकृष्णाऽऽख्या सत्त्वादिगुणसंयुता ।
किं वा जलान्नतेजोभिः संयुता प्रकृतिर्भवेत् ॥१८॥

अजां प्रकृतिमेकां हि वदन्ति साङ्ख्यवादिनः ।
आज्ञापयतु मामत्र नजाने तामजामहम् ॥१९॥

गुरुः –
अग्निस्तेजो लोहितं स्याच्छान्दोग्यश्रुतिभाषितम्[५] ।
शुक्लवर्णं तु सलिलमन्नं कृष्णमिहोच्यते ॥२०॥

---

३. आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ।
– ब्रह्मसूत्रम् १।४।१।१

४. अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥
– छान्दोग्योपनिषद् ६।१।४

५. यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य ।
– छान्दोग्योपनिषद् ६।१।४

सृष्ट्यादौ हि समायातः त्रिवृद्वर्णाऽऽवृतोऽक्षरः ।
सैवोङ्कारो हि वेदोक्ताः साङ्ख्योक्तं न प्रधानकम् ॥२१॥

प्रकृत्यर्थे समायातोह्यजा शब्दस्तु वस्तुतः ।
आदित्यो मधुविद्येव कल्पितो यस्तदर्थकः ॥२२॥

अर्वाग्बिलश्च शब्दोऽपि [६]ह्यागतश्चमसार्थकः ।
सोमपानार्थकं यज्ञपात्रवद् विद्ध्यजामपि ॥२३॥

'अजा' प्रकृतिरित्यर्थे यत् साङ्ख्यमतमस्ति तत्[७] ।
तत् साङ्ख्यमतसूत्रादौ कारिकायां च वर्णितम् ॥२४॥

'अजा' लोहितशुक्लाऽऽख्या प्रकृतिः श्रुतिवर्णिता ।
अजा प्रकृतिरन्नाऽऽख्या जलं तेजःसमन्विता ॥२५॥

स्मतेरुत्कर्षतामाप्ता श्रुतिः स्याद् बलवत्तरा ।
अत एव हि वेदोक्ता ह्यजा प्रकृतिरेव हि ॥२६॥

साङ्ख्योक्ता प्रकृतिर्याऽस्ति साऽजा शब्देन खण्डिता ।
यच्छान्दोग्यश्रुतौ व्यक्ता बोध्या प्रकृतिरस्त्यजा ॥२७॥

अस्मिन् प्रकरणे सूत्रत्रयं तैः [८]श्रुतिवर्णिताम् ।
अजां प्रकृतिमेवात्र क्रियते प्रतिपादनम् ॥२८॥

---

६. अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः । – बृहदारण्यकोपनिषद् २।२।३
७. मूलप्रकृतिरविकृतिः । – साङ्ख्यकारिका ४
८. चमसवदविशेषात् । – ब्रह्मसूत्रम् १।४।२।८–१०

## (३) सङ्ख्योपसङ्ग्रहाधिकरणम् (ब्रह्मसूत्रम् १।४।३।११–१३)

शिष्यः –

एष पञ्चजनः शब्द आयातो विषयादिह ।
[९]श्रुतेर्मतं भिन्नमस्ति क एषस्तत्त्वतोऽर्थतः ? ॥२९॥

कं स्यात् पञ्चजनेनेह साङ्ख्यतत्त्वानि वा नवा ?
श्रुत्युक्ता पञ्चसंख्या वा सन्देग्धि हृदयं मम ॥३०॥

'पञ्च-पञ्चजनाः' शब्दौ गुणितौ तौ परस्परम् ।
[१०]पञ्चविंशतितत्त्वानि भाषन्ते पूर्वपक्षिणः ॥३१॥

पञ्चविंशतितत्त्वानि किमु साङ्ख्या वदन्त्युत ?
यद्वा प्राणादिसंख्यास्ताः किमुत श्रुतिवर्णिताः ॥३२॥

गुरुः –

'पञ्च-पञ्चजनाः' शब्दाद् या संख्या श्रुतिवर्णिता ।
पञ्चविंशतितत्त्वानि नार्थः प्राणादयो हि ते ॥३३॥

अत्राऽऽकाशस्तथाऽऽत्मा च श्रुतौ स्पष्टमुदीरितौ ।
साङ्ख्ये न स्त इमे तत्त्वे कथं तौ मन्महे वयम् ॥३४॥

प्रथमः पञ्चशब्दस्तु संख्या, पञ्चजनोऽभिधा ।
इममर्थं विजानीहि श्रुतेरर्थो विनिर्णयः ॥३५॥

---

९. **यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः ।
तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम् ॥ – बृहदारण्यकोपनिषद् ४।४।१७**

१०. **मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ – साङ्ख्यकारिका ४**

आत्मा समेषामाधार आधेयः कथमस्तु सः ?
विरोधाभासमनयोः कथं वर्णयतु श्रुतिः ? ॥३६॥

प्राणश्चक्षुः श्रोत्रमन्नं मनः पञ्चाऽर्थका इमे ।
संज्ञावाचकशब्दोऽयं श्रुतेरर्थप्रकाशकः ॥३७॥

द्वितयः पञ्चशब्दोऽपि साक्षी प्राणादिसंज्ञितः ।
तद्वाक्यशेषेणाऽपीह[११] श्रुतेरर्थः प्रकल्पितः ॥३८॥

अत एव हि साङ्ख्योक्तः सिद्धान्तः श्रुतिखण्डितः ।
प्राण आत्मादयोऽर्था हि पञ्च-पञ्चैर्निरूपिताः ॥३९॥

आत्मन्येव प्रतिष्ठन्ते पञ्च-पञ्चजनाः समे ।
[१२]श्रुतिः सुस्पष्टमाख्याति साङ्ख्यतत्त्वं न तत्त्वतः ॥४०॥

अस्मिन् प्रकरणे त्रीणि सूत्राणि[१३] श्रुतिवर्णितम् ।
सुस्पष्टं पञ्चसिद्धान्तं वर्णयन्तीह तत्त्वतः ॥४१॥

## (४) कारणत्वाधिकरणम् (ब्रह्मसूत्रम् १।४।४।१४–१५)

शिष्यः –

जगत्कारणसम्बन्धे संशयं गाहते मनः ।
समन्वयोऽपि वेदान्ते युक्तो वाऽस्ति न वा किमु ? ॥४२॥

---

११. प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमुतान्नस्यान्नं मनसो ये मनो विदुः । – श्रुतिः

१२. अस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः ।
तमेव मन्य आत्मानं विद्वान् ब्रह्माऽमृतोऽमृतम् ॥ – बृहदारण्यकोपनिषद् ४।४।१७

१३. न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च । – ब्रह्मसूत्रम् १।४।३।११–१३

वादिनः प्रवदन्त्यत्र ह्ययुक्तोऽस्ति समन्वयः ।
श्रुतिवाक्येषु सर्वत्र विरोधोऽस्ति परस्परम् ॥४३॥

कांश्चिन्मन्त्रान् समुद्धृत्य[१४] वादिनः कथयन्त्यऽपि ।
नास्त्यैकत्वं सृष्टिविधौ श्रुतिमन्त्रेष्वहो ! क्वचित् ॥४४॥

स्मृतिन्यायादिशास्त्रेषु ब्रह्मणोऽन्यद् यदुच्यते ।
तन्मान्यं कारणं सृष्टौ श्रुत्युक्तं नास्ति कारणम् ॥४५॥

श्रुतिषु सृष्टिवाक्येषु पूर्वपक्षा गुरो ! कथम् ?
विरोधं दर्शयन्त्यत्र जगतामादिकारणे ॥४६॥

अति भ्रान्तोऽभवं चात्र बोद्धुं कठिनतामभूत् ।
आज्ञापयतु सुस्पष्टं जिज्ञासा मेऽस्ति साम्प्रतम् ॥४७॥

गुरुः –
जगत्सर्जनमन्त्रेषु दृष्टश्चेदसमन्वयः ।
चर्मचक्षुप्रभावः स दृश्यते ज्ञानचक्षुषा ॥४८॥

उपक्रमोपसंहारवभ्यासादिप्रबोधकम् ।
षड्लिङ्गं बुध्यते चेत् ते मन्त्रास्तात्पर्यबोधकाः ॥४९॥

---

१४. क. आत्मन आकाश सम्भूतः । – तैत्तिरीयोपनिषद् २।१
ख. तत्तेजोऽसृजत । – छान्दोग्योपनिषद् ६।२।३
ग. स प्राणमसृजत प्राणाच्छ्रद्धाम् । – प्रश्नोपनिषद् ४।१।२
घ. स इमाल्लोँकानसृजत अम्भोमरीचीर्मरमापः । – ऐतरेयोपनिषद् ४।१।२
ङ. असद् वा इदमग्र आसीत्ततो वै सदजायत । – तैत्तिरीयोपनिषद् २।७
च. असदेवेदमग्र आसीत्तत्सदासीत्तत्समभवत् । – छान्दोग्योपनिषद् ३।१९।१
छ. सदेव सौम्येदमग्र आसीत्, तद्धैक आहुरसदेवेदमग्र आसीत् ।
– छान्दोग्योपनिषद् ६।२।१,२
ज. तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियते । – श्रुतिः

कुर्वते श्रुतिमन्त्रास्ते भविष्यद्वृत्तिचोदिताः[15] ।
गूढार्थं चिन्तनं कृत्वा मन्त्रार्थमवभासते ॥५०॥

एतदर्थं श्रुतौ ये ये पूर्वपक्षैः समर्थिताः ।
श्रुतिमन्त्राः समायातास्ते सिद्धान्तप्रवर्द्धकाः ॥५१॥

आगता ये पूर्वमन्त्रा अध्यारोपार्थमेव ते ।
ये सिद्धान्त समायातास्तेऽपवादार्थका इह ॥५२॥

ये व्यक्ताः श्रुतिमन्त्रास्ते सृष्टिवर्णनकर्मणि[16] ।
टिप्पण्यामुद्धृताः सन्ति दृष्ट्वा त्वमपि तान् पठ ॥५३॥

अथवा सम्भवेत् क्वापि विभेदः सृष्टिवर्णने ।
परं विभेदो नास्त्येव विधातरि कथञ्चन ॥५४॥

स्मृतिन्यादिषु व्यक्तं यद् यद् तत् सृष्टिकारणम् ।
सर्वथा वेदबाह्यानि सिद्धान्ते नाऽनुयान्त्यपि ॥५५॥

---

१५. मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदितान्यथा ।
उपायः सोऽवतराय नास्ति भेदः कथञ्चन ॥ – माण्डूक्यकारिका ३।२५

१६. क. तत्सृष्ट्वा तदेवानुप्राविशत् । – तैत्तिरीयोपनिषद् २।६।१
ख. बहु स्यां प्रजायेय । – तैत्तिरीयोपनिषद् २।६।१
ग. इदं सर्वमसृजत यदिदं किञ्च । – तैत्तिरीयोपनिषद् २।६।१
घ. सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्, तदैक्षत बहु स्यां प्रजायेयेति, तत्तेजोऽसृजत । – छान्दोग्योपनिषद् ६।२।१,३
ङ. आत्मा वा इदमेक एवाग्र आसीत् नान्यत्किञ्चन मिषत्, स ईक्षत लोकान्नु सृजा इति । – ऐतरेयोपनिषद् ४।१।२
च. तद्धेवं तर्ह्यव्याकृतमासीत् । – श्रुतिः
छ. अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि । – छान्दोग्योपनिषद् ६।३।२

वादिनां मतमायातं खण्डितं जडकारणम् ।
मण्डनं क्रियते सच्चिद्ब्रह्मणः सृष्टिकारणम् ॥५६॥

अस्मिन् प्रकरणे सूत्रद्वयमस्ति समागतम्[१७] ॥
जगतः कारणं ब्रह्म श्रुत्याऽन्यत् तु निवारितम् ॥५७॥

## (५) बालाक्यधिकरणम् (ब्रह्मसूत्रम् १।४।५।१६–१८)

शिष्यः –
जगत्कर्तृत्वविषये श्रुतिर्वर्णयतीह[१८] यत् ।
प्राणो वा किमु जीवो वा कर्ता ब्रह्माऽस्ति वा किमु ॥५८॥

तदित्थं सति सन्देहे विषये पूर्वपक्षिणः ।
जगद्धेतौ वदन्त्यत्र जीवो वा कर्म कारणम् ॥५९॥

स्रष्टाऽपूर्वस्य कर्माऽस्ति सर्वं कर्मैव चालकम् ।
सर्वं मिमीते कर्मैव प्राणं कर्मैव चालकम् ॥६०॥

स्वामी जीवोऽस्त्यपूर्वस्य चैतस्मात् कारणादपि ।
कर्ता प्राणोऽस्ति वा जीवो जगत्कर्ता न चेश्वरः ॥६१॥

तदित्थं पूर्वपक्षास्तु जगत्कर्तरि नेश्वरम् ।
मन्यन्ते किमु जीवो वा प्राणो वा वदतु प्रभो ! ॥६२॥
गुरुः –

---

१७. कारणत्वेन चाऽऽकाशादिषु यथाव्यपदिष्टोक्ते । – ब्रह्मसूत्रम् १।४।४।१४–१५
१८. यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वेदितव्यः ।
– कौषीतकिब्राह्मणोपनिषद् ४।१९

क्रियावाचकमस्त्येतत् कर्म नाऽपूर्ववाचकम् ।
क्रियतेऽर्थे हि कमाऽस्ति तस्मात् संसारवाचकम् ॥६३॥

जीवप्राणौ न कर्तारौ जगदुत्पत्तिहेतवे ।
सर्वाऽऽधारोऽस्ति कर्ताऽपि जगतः परमेश्वरः ॥६४॥

यः स्वतन्त्रः स कर्ताऽस्ति[१९] स एव परमेश्वरः ।
जीवप्राणौ न स्वतन्त्रौ कर्तारौ भवतः कथम् ? ॥६५॥

उपक्रमोपसंहारावभ्यासादिक्रमादिह ।
तात्पर्येण श्रुतिर्वक्ति कर्ताऽस्ति परमेश्वरः ॥६६॥

'यस्य वै' 'यस्य कर्मेति' श्रुतिवाक्यविचारितम् ।
जगत्कर्तृत्वविषये कर्ता ब्रह्माऽस्ति कीर्तितम् ॥६७॥

जीवप्राणादयः सर्वे ब्रह्मण्येवाऽवलम्बिताः ।
एतस्मात् कारणात् ते तु शास्त्रेणैव विखण्डिता ॥६८॥

मृषावादित्वविषये राजानं नैव दूषयन् ।
कौषीतकि श्रुतिर्वक्ति–कर्तृत्वे ब्रह्मशंसनम् ॥६९॥

वेदितव्यत्वविषये[२०] श्रुतौ सुस्पष्टमागतम् ।
ब्रह्मैव वेदितव्यं हि नैव जीवादयः समम् ॥७०॥

---

१९. स्वतन्त्रः कर्ता । – पाणिनीयं सूत्रम्, अष्टाध्यायी
२०. यस्य वैतत्कर्म स वेदितव्यः । – कौषीतकिब्राह्मणोपनिषद् ४।१९

अस्मिन् प्रकरणे सूत्रत्रयमस्ति समागतम्[२१] ।
ब्रुवते त्रीणि सूत्राणि जगत्कर्ताऽस्ति ब्रह्म हि ॥७१॥

## (६) वाक्यान्वयाधिकरणम् (ब्रह्मसूत्रम् १।४।६।१९–२२)

शिष्यः –

[२२]आत्मा वाऽरे ! श्रुतौ मन्त्रे यज्ज्ञानं स्पष्टमागतम् ।
याज्ञवल्क्यः स्वधर्मिण्यै तज्ज्ञानमददात् स्वयम् ॥७२॥

कुरु दर्शनमात्मानं श्रवणादि स्वयं कुरु ।
श्रुतिर्ब्रूतेऽत्र सुस्पष्टमात्मा को वक्तु मां गुरो ! ॥७३॥

स्वार्थं स्वकीयं मन्यन्तावुभौजायापती स्वयम् ।
अन्योऽन्यं प्रेम कुर्वन्तौ जीव आत्मेति निश्चितौ[२३] ॥७४॥

समुत्थितोऽत्र सन्देह आत्मा जीवोऽस्ति ब्रह्म वा ? ।
वादिनः कथयन्त्यत्र जीव आत्माऽस्ति ब्रह्म नो ॥७५॥

आज्ञापयतु मामत्र जीव आत्माऽस्ति ब्रह्म किम् ?
जीवात्मा किं परात्मा किं ? आत्मा किं वस्तु बोधताम् ॥७६॥

---

२१. जगद्वाचित्वात् । – ब्रह्मसूत्रम् १।४।५।१६–१८

२२. आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ।
– बृहदारण्यकोपनिषद् २।४।५

२३. न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवति ।
... न सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति ।
– बृहदारण्यकोपनिषद् २।४।५

गुरुः –

उपक्रमं चिन्तय त्वं मैत्रेयी तत्र वक्ति किम् ?
पत्युरंशं धनं धृत्वा नारी किममृता भवेत् ? ॥७७॥

भूमिं धनं धृते कोऽपि मुच्यते नैव लोकतः[२४] ।
याज्ञवल्क्यः प्रियां ब्रूते त्वमात्मज्ञा भव प्रिये ! ॥७८॥

उपक्रमोऽभवच्चात्र ह्यात्मज्ञानं कुरुष्व तत् ।
दर्शनश्रवणाद्यास्तु भूत्वा साधनमागताः ॥७९॥

समायातो पसंहार स्तदन्ते फलबोधकः[२५] ।
शीघ्रं भव त्वमात्मज्ञा मुच्यसे लोकबन्धनात् ॥८०॥

उपक्रमोपसंहारौ दृष्टौ चेदमृतार्थक ।
आत्मज्ञानं समायातं श्रुतौ तत्त्वार्थरूपतः ॥८१॥

आत्मज्ञानं कृते पूर्व बुध्येते जडचेतनौ ।
आत्मा ब्रह्माऽस्ति बोद्धव्यं जीवः स्वल्पोऽस्त्यकिञ्चनः ॥८२॥

अस्मिन् प्रकरणे सूत्रचतुष्टयं समागतम्[२६] ।
'आत्मा-ब्रह्मेति' मूलार्थस्तैः सूत्रैः प्रतिपाद्यते ॥८३॥

## (७) प्रकृत्यधिकरणम् (ब्रह्मसूत्रम् १।४।७।२३–२७)

शिष्यः –

जगत्कारणकर्तृत्वे सन्देहोऽत्र समागतः ।
गुरो ! वदतु किं ब्रह्मोपादानं वा निमित्तकम् ॥८४॥

---

२४. अमृतत्वस्य तु नाशास्ति वित्तेन । – बृहदारण्यकोपनिषद् २।४।२
२५. अयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् । – बृहदारण्यकोपनिषद् २।५।११
२६. वाक्यान्वयात् । – ब्रह्मसूत्रम् १।४।६।१९–२२

तदत्र पूर्वपक्षास्तदैक्षतेति प्रमाणतः[२७] ।
कुम्भकारो यथा ब्रह्म जगद्धेतोर्निमित्तकम् ॥८५॥

घटनिर्माण हेतौ तूपादानं मृत्तिकाऽभवत् ।
निमित्तं कारणं ब्रह्म कुम्भकारो यथा घटे ॥८६॥

तदित्थं भवति ब्रह्म जगद्धेतौ निमित्तकम् ।
उपादानं न भवति सृष्टिकर्मणि ब्रह्म तत् ॥८७॥

श्रुतिवाक्यं गृहीत्वा ते पूर्वपक्षा वदन्त्यतः ।
जगत्सृष्टौ निमित्तं तत् कथं ब्रह्म भवेद् गुरो ! ॥८८॥

गुरुः –
[२८]'तदैक्षत बहु स्यामहं प्रजायेय' वाक्यतः ।
'तदैक्षता'ऽभणत् पूर्वं 'बहु स्या'मन्ततो ब्रवीत् ॥८९॥

समीक्षको यः कर्ता स 'बहु स्यां' तस्य वाञ्छया ।
प्रथमं जगदुत्पन्नं तदुपादानकारणम् ॥९०॥

निमित्तं वाऽप्युपादानमभिन्नं कारणद्वयम् ।
ब्रह्मैव जगदुत्पत्तौ न जडं सृष्टिकारणम् ॥९१॥

[२९]पूर्वं ब्रह्मणि विज्ञातेऽन्यत् सर्वं ज्ञायते ततः ।
[३०]पूर्वं मृद्ज्ञानतो ज्ञानं घटादीनां यथैव हि ॥९२॥

---

२७. तदैक्षत । – छान्दोग्योपनिषद् ६।२।३।
२८. तदैक्षत बहु स्यां प्रजायेय । – छान्दोग्योपनिषद् ६।२।३
२९. यथा सोम्येकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् । – छान्दोग्योपनिषद् ६।१।४
३०. आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम् ।
– बृहदारण्यकोपनिषद् ४।५।६।

[31]तथाऽऽत्मनि सुविज्ञाते सर्वं ज्ञानं भविष्यति ।
श्रुतिर्वदति सुस्पष्टं ब्रह्माऽस्ति सर्वकारणम् ॥९३॥

जगत्कारणकर्तृत्वे ब्रह्मोपादानकारणम् ।
निमित्तं च ब्रह्मणो हि विवर्तः सचराऽचरः ॥९४॥

वदन्ति श्रुतयः सर्वा ब्रह्मैवाऽस्तीह कारणम् ।
अतस्तत् पूर्वपक्षाणां मतं सर्वं निवारितम् ॥९५॥

अस्मिन् प्रकरणे सूत्रपञ्चकं समुपागतम्[32] ॥
वदन्ति जगदुत्पत्तौ ब्रह्म सर्वत्र कारणम् ॥९६॥

### (८) सर्वव्याख्यानाधिकरणम् (ब्रह्मसूत्रम् १।४।८।२०)

शिष्यः –
अण्वादिः सृष्टिहेतुश्च श्रुतौयत् समुपागतम् ।
अणुः किमथवा ब्रह्म ? जगतो मुख्यकारणम् ॥९७॥

सन्दिग्धं मे मनोऽत्राऽपि किमण्वाद्यादिकारणम् ।
अण्वादि भवितुं शक्यं वादिनां मतमागतम् ॥९८॥

यथाऽस्ति वटवृक्षाणां प्ररोहे बीजकारणम् ।
वादिनां मतमायातमणुः सृष्टौ च कारणम् ॥९९॥

केचिद् वदन्त्यसच्छन्यं जगतां सृष्टिकारणम् ।
[33]स्वभावः कथयन्त्येके परे कालो हि कारणम् ॥१००॥

---

३१. आत्मनि विज्ञाते सति सर्वं विज्ञातं भवति ।
३२. प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् । – ब्रह्मसूत्रम् १।४।७।२३–२७
३३. स्वभावमेके कवयो वदन्ति कालं तथान्ये । – वेदान्तसन्दर्भ

[३४]असदेवाऽस्ति कतिचिद् वदन्ति सृष्टिकारणम् ।
विज्ञानवादी ब्रूतेऽत्र मनः स्यात् सृष्टिकारणम् ॥१०१॥

आज्ञापयतु मामद्य ब्रह्म वाऽप्यणुकारणम् ।
सन्देहो जगदुत्पत्तावुपदेशान्निवार्यताम् ॥१०२॥

गुरु :–
[३५]एकेन वस्तुज्ञानेन सर्वं विज्ञायते न हि ।
तथा शून्यमणुज्ञानात् कालात् सृष्टिर्न सम्भवेत् ॥१०३॥

वटबीजस्य दृष्टान्तः सूक्ष्मं स्यात् सृष्टिकारणम् ।
वटवृक्षो महानेष सूक्ष्माद् बीजात् समुद्भवः ॥१०४॥

[३६]सूक्ष्माद् बाह्येन्द्रियातीतात् सृष्टिः सद् ब्रह्मणोऽभवत् ।
विवर्तिते ब्रह्मणि हि दृष्ट एष चरोऽचरः ॥१०५॥

अत एवाऽस्ति चिद् ब्रह्म जगतां मुख्यकारणम् ।
स्रष्टृत्वे जडहेतुत्वं [३७]श्रुतिभूलान्निवार्यते ॥१०६॥

[३८]सूत्रमेकं समायात् मस्मिन् प्रकरणान्तिमे ।
जगत् सृष्टिविधौ हेतुः सच्चिद् ब्रह्माऽस्ति वक्ति यत् ॥१०७॥

---

३४. असदेवेदमग्र आसीत् । – छान्दोग्योपनिषद् ६।२।२
क. असद् वा इदमग्र आसीत् । – तैत्तिरीयोपनिषद् २।७।१
३५. एकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् । – छान्दोग्योपनिषद् ६।१।४
३६. अणोरणीयान् । – कठोपनिषद् २।२०
३७. तदैक्षत बहु स्यां प्रजायेय । – छान्दोग्योपनिषद् ६।२।३
ईक्षतेर्नाशब्दम् । – ब्रह्मसूत्रम् १।१।५
३८. एतेन सर्वे व्याख्याता व्याख्याताः । – ब्रह्मसूत्रम् १।४।८।२८

ब्रह्मसूत्रे कारिकायां प्रथमाऽध्याय वर्णिताः ।
ब्रह्मतत्त्वे चतुष्पादाः समनूह्य समापिताः ।।१०८।।

देवीप्रसादतनयो बुधभीमकान्त–
स्तस्याऽत्मजेन कवितारुचिमानसेन ।
नित्यं बुधैरभिहितेन जनेन लक्ष्मी–
कान्तेन मुग्धहृदयेन कृतोऽनुवादः ।।१०९।।

।। इति ब्रह्मसूत्रकारिकायां प्रथमोऽध्यायः ।।

ॐ तत्सद्ब्रह्मणे नमः ।

अथ ब्रह्मसूत्रकारिकायां

# द्वितीयोऽविरोधाऽध्यायः

द्वितीये स्मृतितर्काभ्यामविरोधाऽन्यदुष्टता ।
भूतभोक्तृश्रुतेर्लिङ्गश्रुतेरप्यविरुद्धता ॥

## प्रथमः पादः

(अस्मिन् पादे स्मृतितः सर्वधर्मोपपत्तिसहितानि त्रयोदशाऽधिकरणानि सन्ति । अत्र साङ्ख्य-योग-वैशेषिकैः प्रस्तुतानां पूर्वपक्षाणां वेदान्ते समन्वयं कृत्वा तेषां परिहारो विहितः ।)

### (१) स्मृत्यधिकरणम्(ब्रह्मसूत्रम् २।१।१।१–२)

शिष्यः –

वेदे समन्वयोऽस्याऽस्ति साङ्ख्यसृष्टेर्नवाऽस्ति किम् ?
वेदान्ते तद्विरोधो वाऽविरोधो वक्तु मां गुरो ? ॥१॥

साङ्ख्यं वक्तीह वेदस्य धर्मेऽस्ति सावकाशता ।
स्मृतिर्वक्तीह देवार्थो धर्मे सङ्कुचति स्वयम् ॥२॥

स्मृत्या तु केवलं कार्ये वस्तुतत्त्वं निरूप्यते ।
अनुष्ठेयस्य धर्मस्य स्मृत्या न प्रतिपाद्यते ॥३॥

वेदे तु सह धर्मेण ब्रह्मणोऽपि निरूपणम् ।
वेदार्थे धर्मबाधातु मा स्यादिति निरूप्यते ॥४॥

एतस्मात् कारणाद् वेदः सावकाशोऽस्ति नित्यशः ।
साङ्ख्यं सङ्कोचमायाति नावकाशं कथञ्चन ॥५॥

जगतः कारणं ब्रह्म मन्वते स्मृतयोऽखिलाः ।
साङ्ख्यसृष्टिर्बाधितास्ति ताभिः स्मृतिभिरन्ततः ।।६।।

स्मृतयो वेदमूलास्ता दृश्यन्ते प्रबलाः सदा ।
प्रधानं सृष्टिकर्ताऽस्ति मतयः साङ्ख्यवादिनः ।।७।।

श्रुतेरर्थो न सङ्कोचः स्मृतिभिस्तैरवैदिकैः ।
श्रुतेरर्थो यथा तद्वत् [1]स्मृतयोऽर्थं प्रकुर्वते ।।८।।

अस्मिन् प्रकरणे सूत्रद्वयं [2]साङ्ख्यं निरस्यते ।
स्मृतिं वेदानुकूलार्थं कुरुते मण्डनादिकम् ।।९।।

## (२) योगप्रत्युक्त्यधिकरणम् (ब्रह्मसूत्रम् २।१।२।३)

शिष्यः –
योगः सङ्कोचति किमु ? वेदोक्तार्थं समन्वयम् ।
सन्देग्धि हृदयं मेऽत्र किं न सङ्कोचति प्रभो ।।१०।।

सत्यमष्टाङ्गयोगस्तु वेदस्यार्थाऽनुकूलदृक् ।
योगोऽयं तत्त्वबोधार्थं साधनं प्रभवेद् भृशम् ।।११।।

योगः प्रधानं मनुते जगदुत्पत्तिहेतवे ।
एतस्मात् कारणादस्मात् वेदः सङ्कुचति स्वतः ।।१२।।

योगिनां मतमायातं किमनेन न सम्भ्रमः ?
आज्ञापयतु मामत्र क्षीयते सम्भ्रमः कथम् ? ।।१३।।

---

१. श्रुतेरिवार्थं स्मृतिरन्वगच्छत् । – रघुवंश २।२

२. स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ।
– ब्रह्मसूत्रम् २।१।१।१–२

गुरुः –

योगस्मृत्याऽनया वेदस्यार्थो नैवाऽस्ति सीमितः ।
चित्तवृत्तिनिरोधो हि [3]योगकार्यं विशेषतः ॥१४॥

योगलक्ष्यं लक्षते न प्रधानप्रतिपादनम् ।
न संकुचति वेदार्थश्चित्तवृत्तिनिरोधतः ॥१५॥

योगचर्चा श्रुतौ चाऽस्ति तेनाऽऽत्मा नैव बुध्यते ।
अनेन मुक्तिं न मिलेद् ज्ञानमावश्यकं भवेत् ॥१६॥

विरोधो यत्र नास्त्येव वेदार्थे साङ्ख्ययोगयोः ।
तत्तदंशा हि स्वीकार्याः स्युर्वेदे साङ्ख्ययोगयोः ॥१७॥

यस्मिन् वेदाऽवबोधो नो मोक्षमाप्तुमसम्भवम् ।
सम्यग् वेदाऽवबोधेन ज्ञानमाप्तुं हि[4] सम्भवम् ॥१८॥

साङ्ख्यशास्त्रे खण्डिते चेद् योगशास्त्रं च खण्डितम्[5] ।
अत्रैकं सूत्रमायातं तत्तु सूत्रमखण्डितम् ॥१९॥

## (३) विलक्षणत्वाधिकरणम् (ब्रह्मसूत्रम् २।१।३।४–११)

शिष्यः –

वेदे समन्वयस्तर्कद्वारा किं बाधितो भवेत् ?
यद्वा तद्बाधितो न स्याद् गुरो ! मे संशयोऽभवत् ॥२०॥

३. अथ योगानुशासनम्, योगश्चित्तवृत्तिनिरोधः । – योगसूत्रम्
४. नावेदविन्मनुते तं बृहन्तम् । – तैत्तिरीयब्राह्मणम् ३।१२।९।७
५. एतेन योगः प्रत्युक्तः । ब्रह्मसूत्रम् २।१।२।३

तर्कद्वारा बाधितः स्याद् वदन्ति तर्कवादिनः ।
निश्चितं न भवेद् ब्रह्म, जगत्कर्ता जडो भवेत् ? ॥२१॥

तद् ब्रह्म चेतनं, दृश्यं जगत् तु वस्तुतो जडम् ।
वैलक्षण्यं जगत् सृष्टं तत्त्वतः कथमुद्भवेत् ॥२२॥

कारणास्य गुणाः कार्ये दृश्यन्ते [६]स्पष्टमन्ततः ।
जगत्सु नव दृश्यन्ते तद्धेतोर्ब्रह्मणो गुणाः ॥२३॥

वैलक्षण्यं ब्रह्मणि वा जीवे जगति दृश्यते ।
एतस्मात् कारणाद् वेदस्तार्किकैर्बाधितोऽभवत् ॥२४॥

किं तर्कैर्बाधितो वेदो यद्वा किं नैव बाधितः ।
तत्त्वतो मयि सुस्पष्टमाज्ञापयतु हे गुरो ! ॥२५॥

गुरुः –
कार्यकारणसामान्यमिति यो [७]नियमोऽस्ति सः ।
व्याप्तः सर्वत्र नास्तीति तस्योदाहरणं शृणु ॥२६॥

लूताकृमेर्यथा जालं बहिरायाति तत्परम् ।
कार्यकारणयोर्व्याप्तिः सर्वत्र न हि दृश्यते ॥२७॥

समुद्भवो वृश्चिकस्य जडाद् गोमयराशितः ।[८]
नखकेशादयस्तस्य चिन्मनुष्याद् यथा तथा ॥२८॥

---

६. कारणगुणाः कार्यगुणानारभन्ते । – साङ्ख्यदर्शनम्
७. यत्र यत्र धूमस्तत्र तत्र वह्निः । – अनुमानखण्डः, तर्कसङ्ग्रहः
८. यथोर्णनाभिः सृजते गृह्णते च । – मुण्डकोपनिषद् १।१।७

न तर्केण भवेद् ब्रह्मज्ञानं वास्तविकं स्मृतम् ।
न ते तार्किकनामान अवेदज्ञाः कुतार्किकाः[९] ॥२९॥

तर्कस्यान्तो न तर्केण परं वृद्धिमुपैति सः ।[१०]
एकस्तर्कयति तर्कमन्यस्तर्कं विकुण्ठति ॥३०॥

बैलक्षण्यं हेतुभूतं तर्काभासोऽस्ति न्यायतः ।
तत्त्वतो बाधते नैव वेदमन्त्रसमन्वयम् ॥३१॥

श्रुतिप्रमाणेन विना तर्केऽचिन्त्येऽपि वस्तुनि[११] ॥
कृतेऽपि ज्ञायते नैव वस्तु प्रकृतिसम्भवम् ॥३२॥

वेदबाह्यं न जानन्ति सद्धर्मा ऋषयः खलु[१२] ॥
तर्कस्थानं न किमपि नियमे धर्मनिर्णये ॥३३॥

---

९. नैषा तर्केण मतिरापनेया । – कठोपनिषद् १।२।९
  क. तार्किको हि अनागमज्ञः स्वबुद्धिपरिकल्पितं यत् किञ्चिदेव कथयति ।
  – शाङ्करभाष्यम्, कठोपनिषद् १।२।९
  ख. ते तु कुतर्कदूषितान्तःकरणा ब्राह्मणादिवर्णापसदा अनुकम्पनीया आगमार्थविच्छिन्नसम्प्रदायबुद्धय इति । अहो अनुमानकौशलं दर्शितमपुच्छशृङ्गैस्तार्किकवलिवर्दैः । यो ह्यात्मानमेव न जानाति स कथं मूढस्तद्गतं भेदमभेदं वा जानीयात् ?
  – बृहदारण्यकोपनिषद् २।१।२० – शाङ्करभाष्यम्
१०. यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः ।
  अभियुक्ततरैरन्यैरन्यथैवोपपद्यते । – वाक्यपदीयम्, ब्रह्मकाण्डम् ४२
११. अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् ।
  प्रकृतिभ्यः परं यत्तु यदचिन्तस्य लक्षणम् ॥ – महाभारतम्, भीष्मपर्व ५।१२
१२. न चागमादृते धर्मस्तर्केण व्यवतिष्ठते ।
  ऋषीणामपि यज्ज्ञानं तदप्यागमपूर्वकम् ॥ – वाक्यपदीयम्, ब्रह्मकाण्डम् ३०

यदि वेदाऽनुकूलाः स्युः सुतर्कास्ते हि तार्किकाः[१३] ॥
तर्काश्चेद् वेदबाह्यास्तु कुतर्कास्ते कुतार्किकाः ॥३४॥

वेदे समन्वये बाधः कुतर्केण न शक्यते ।
वेदाऽनुकूलास्तर्काश्चेद् साधनानि भवन्ति ते ॥३५॥

सूत्राणामष्टकं प्राप्तमत्र प्रकरणाऽगतम्[१४] ।
ब्रुवते तानि तर्केण बाधते न समन्वयम् ॥३६॥

## (४) शिष्टापरिग्रहाधिकरणम् (ब्रह्मसूत्रम् २।१।४।१२)

शिष्यः –
कणादन्यायसिद्धान्तादिह वेदसमन्वयम् ।
वेदान्ते बाधते यद्वा बाधते नाऽत्र संशयः ॥३७॥

पटं वयति विस्तीर्णं सूक्ष्मादेवेह तन्तुतः ।
तथा विशालविश्वं चाऽणोरेव रचितं भवेत् ॥३८॥

एतस्मात् कारणादल्पं न बृहद्ब्रह्मणो भवेत् ।
पृथ्वीजलादिद्रव्याणि भवितुं सम्भवो न हि ॥३९॥

अतो ब्रह्मणि वेदोऽपि समन्वितो भवेत् कथम् ?
निश्चयं बाधते वेदं काणादेन मतेन वै ॥४०॥

बाधन्ते वेदवाक्यानि पूर्वपक्षमतं श्रुतम् ।
इत्थमाज्ञापयतु मां बाधो भवति  वा न वा ॥४१॥

---

१३. बुद्ध्यारोहाय तर्कश्चेदपेक्षेत तथा सति ।
स्वानुभूत्यानुसारेण तर्क्यतां मा कुतर्क्यताम् ॥– वाक्यपदीयम्

१४. न विलक्षणत्वादस्य तथात्वञ्च शब्दात् । – ब्रह्मसूत्रम् २।१।३।४–११

गुरुः –

साङ्ख्ययोगमतं दृष्टं सृष्टिमार्गेऽति दुर्बलम् ।
व्यासादिभिः परित्यक्तं काणादं दुर्बलं मतम् ॥४२॥

जगत्सृष्टिविधौ दृष्टं वैशेषिकमुपेक्षितम् ।
शिष्टैर्व्यासादिभिर्हेयमणुवादं च तत्त्वतः ॥४३॥

नैयायिकैर्हेतुमद्भिस्तैः सर्वैर्बकवृत्तिभिः[१५] ।
न वक्तव्यं चेति शिष्टास्तान् निन्दन्तीह शब्दतः ॥४४॥

'सृष्टौ न्यूनाद् बृहद्रूपः संसारोऽयं विरच्यते ।
एष काणादसिद्धान्तः श्रुतिभिर्नैव मन्यते ॥४५॥

नैयायिकमतं मान्यं वेदान्ते न हि दृश्यते ।
श्रौतसिद्धान्तसम्बद्धो विवर्तवाद इष्यति ॥४६॥

एतस्मात् कारणाद् वेदाः काणादैर्न समन्विताः ।
बाधन्ते न च तैर्वेदा वादोऽद्वैतः सुनिश्चितः ॥४७॥

अत्र सूत्रं चैकमस्ति तस्य दृष्टमिदं मतम्[१६] ।
काणादं बाधते नैव वक्ति वेदसमन्वयम् ॥४८॥

## (५) भोक्त्रापत्त्याधिकरणम् (ब्रह्मसूत्रम् २।१।४।१३)

शिष्यः –

भोक्ता भोग्यादिभिर्ब्रह्मन्नद्वैतं बाधते न वा ?
न बाधते चेत्तदपि सन्देहो लगतीह माम् ॥४९॥

---

१५. हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् ।

१६. एतेन शिष्टापरिग्रहा अपि व्याख्याताः । – ब्रह्मसूत्रम् २।१।४।१२

ब्रह्महेतुर्भवेदेवं सर्वं ब्रह्माऽतिरिच्यते ।
द्वैते बाधे सति भवेद् व्यवहारोऽप्यसम्भवः ॥५०॥

प्रत्यक्षादिप्रमाणानि गृहीत्वा पूर्वपक्षिणः ।
भणन्ति बाधो भवति श्रुतौ सततमुत्थिताः ॥५१॥

बाधो भवेद् वा न भवेत् प्रमाणं च किमस्ति तत् ।
जिज्ञासां मे शमयतु हृदयं सोत्सुकं मम ॥५२॥

गुरुः –
यथा समुद्रे दृश्यन्ते तरङ्गाः फेनबुद्बुदाः ।
समुद्रः केवलं तत्र भेदो यद्यपि दृश्यते ॥५३॥

भोक्तृभोग्यादयः सर्वे वस्तुतो व्यावहारिकाः ।
समुद्रः केवलं तत्र भेदो यद्यपि दृश्यते ॥५४॥

द्वैतसृष्टेऽपि तत्रैवाऽनुस्यूतं ब्रह्म वर्तते[१७] ।
द्वैतेऽपि तत्र ब्रह्मैव भासते हि विचारिते ॥५५॥

उपाधिरूपो भेदोऽस्ति ह्यभेदो निरूपाधिकः ।
व्यवहारे तु भेदोऽस्ति ह्यभेदे ब्रह्म तात्त्विकम् ॥५६॥

अस्मिन् प्रकरणे[१८] सूत्रमेकं भेदनिवारकम् ।
उपादानं कारणं तद् ब्रह्माऽस्ति पारमार्थिकम् ॥५७॥

---

१७. तत्सृष्ट्वा तदेवानुप्राविशत् । –तैत्तिरीयोपनिषद् २।६।१
१८. भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् । – ब्रह्मसूत्रम् २।१।५।१३

## (६) आरम्भाधिकरणम् (ब्रह्मसूत्रम् २।१।६।१४–२०)

शिष्यः –

भेदाऽभेदौ किमत्र स्तो व्यावहारिकतात्त्विकौ ?
सन्दिग्धं मे मनश्चात्र तयोनिर्णेतुमक्षमः ॥५८॥

पूर्वपक्षा वदन्त्यत्र द्वयोः फेनसमुद्रयोः ?
विभेदो दृश्यते नैव पानीयं दृश्यतेऽखिलम् ॥५९॥

अभेदभेदयोर्लोके विरोधो नैव दृश्यते ।
भेदाऽभेदावुभावेव पारमार्थिकमन्तिमे ॥६०॥

तदित्थं पूर्वपक्षाणामभेदसाधकं मतम् ।
समायातं किं तदेकं व्यावहारिकतात्त्विकम् ? ॥६१॥

गुरुः –

नास्ति ब्रह्मणि नानात्वं स्पष्टं निगदति श्रुतिः[१९] ।
अस्माद् भेदस्य बाधोऽपि लक्ष्यते ब्रह्मणि स्वतः ॥६२॥

परस्परविरुद्धौ तौ भेदाऽभेदावुभौ कुतः ?
एकश्चन्द्रसमो ब्रह्म व्याप्तं तेनाऽखिलं जगत्[२०] ॥६३॥

अद्वितीये पदार्थेऽत्राऽऽकारभेदो न लक्ष्यते ।
समुद्रे सम्भवेदेष परमार्थे कुतो भवेत् ? ॥६४॥

शास्त्रैकवेद्यं ब्रह्माऽस्ति [२१]प्रत्यक्षं न हि दृश्यते ।
भेदोऽयं व्यवहारेऽत्र न भेदः पारमार्थिके ॥६५॥

---

१९. नेह नानास्ति किञ्चन । – बृहदारण्यकोपनिषद् ४।४।१९
२०. इदं सर्वं यदयमात्मा । – बृहदारण्यकोपनिषद् ४।४।१९
२१. ब्रह्मैवेदं सर्वम् । – मुण्डकोपनिषद् २।२।११

दृश्यन्ते घटभाण्डाद्या मृत्पिण्डादिविनिर्मिताः ।
सत्यं मृत्पिण्डमेवाऽस्ति [२२]भाण्डाद्या मृद्विकारतः ॥६६॥

भेदस्तदित्थं मिथ्याऽस्ति सत्यं ब्रह्म तदेकलम् ।
नानात्वं दृश्यते येन [२३]स जातो म्रियते मुहुः ॥६७॥

ब्रह्माऽभयं समाप्नोति[२४] शंसन कुरुते श्रुतिः ।
अद्वैत ब्रह्मणि नाना सर्वथा खण्डितं भवेत् ॥६८॥

[२५]अस्मिन् प्रकरणे सूत्रसप्तकं भेदखण्डनम् ।
कृत्वा भणति तात्पर्ये 'नेह नानाऽस्ति किञ्चन' ॥६९॥

## (७) इतरव्यपदेशाधिकरणम् (ब्रह्मसूत्रम् २।१।७।२१–२३)

शिष्यः –
स्वस्मिञ्जीवे सदैवैक्यं यः पश्यति तदीश्वरे ।
हिताऽहितादिविषये दोषो लगति वा न वा ? ॥७०॥

पूर्वपक्षा वदन्त्यत्र जीवान् भेदयतीश्वरः ।
क्वचिद् हितं प्रकुरुते चाऽहितं कुरुते क्वचित् ॥७१॥

हिताऽहितादिनां दोषो लगतीति वदन्ति ते ?
शास्त्रानुसारतो दोषभागी भवति वा न वा ? ॥७२॥

---

२२. यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् । – छान्दोग्योपनिषद् ६।१।१
२३. मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ।– बृहदारण्यकोपनिषद् ४।४।१९
२४. अभयं वै जनक प्राप्तोऽसि । – बृहदारण्यकोपनिषद् ४।२।४
२५. तदन्यत्वमारम्भणशब्दादिभ्यः । – ब्रह्मसूत्रम् २।१।६।१४–२०

गुरुः –

मिथ्या जीवोऽपि संसार ईश्वरं न ततो भयम् ।
ईशस्य हानिर्नास्त्येव यद्वा तद्वा वदन्तु ते ॥७३॥

शुभानामशुभानां च कर्मणां फलमाप्यते ।
ईश्वरो जीवहानिर्वा हितं न कुरुते क्वचित् ॥७४॥

अस्मिन् प्रकरणे सूत्रत्रितयं समुपागतम्[२६] ।
जीवे दोषो न लगति तैरुक्तं वेदमार्गतः ॥७५॥

## (८) उपसंहारदर्शनाधिकरणम् (ब्रह्मसूत्रम् २।१।८।२४–२५)

शिष्यः –

अद्वैतब्रह्मणो विश्वसृष्टिं भवति वा न वा ? ।
सन्दिग्धं हृदयं मेऽत्र कथं सृष्टिर्भवत्यहो ? ॥७६॥

स्वगतादिकभेदादिशून्यं ब्रह्म सनातनम् ।
अद्वैतमस्ति न हि तद् भवति सृष्टिकारणम् ॥७७॥

स्रष्टव्यं वस्तु गगनं वायुस्तेजो जलं रसाः ।
विभिन्नरूपा दृश्यन्ते तद्गतौ च विचित्रता ॥७८॥

कारणे ब्रह्मणि चित्रं वैचित्र्यं नैव दृश्यते ।
तत्कार्ये कथमायाता गुरो ! चित्रविचित्रता ? ॥७९॥

तादृशं सृष्टिवैचित्र्यं क्रमयुक्तव्यवस्थया ।
अद्वैतब्रह्मणोद्वारा भवितुं नास्ति सम्भवम्[२७] ॥८०॥

---

२६. इतरव्यपदेशाद‍धिकताकारणादिदोषप्रसक्तिः ।– ब्रह्मसूत्रम् २।१।७।२१–२३
२७. सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । – छान्दोग्योपनिषद् ६।२।१

तदित्थं पूर्वपक्षाणां मतमेतत् समागतम् ।
कथं सृष्टिर्भवेदित्थं ब्रुवते तन्न सम्भवम् ॥८१॥

गुरो ! वदतु मामस्मिन् विषये संशयोऽलगत् ।
भवतो वचनादद्य संशयं मे क्षयं भवेत् ॥८२॥

गुरुः –
सनातनमद्वितीयमेकं ब्रह्माऽस्ति वस्तुतः ।
ब्रह्मैव मायामाश्रित्य सृष्टि प्रकुरुतेऽनिशम्[२८] ॥८३॥

मायाद्वारा परंब्रह्म नानारूपाणि संदधत्[२९] ।
सृष्टौ विवर्तरूपेण स्वयं ब्रह्मैव भासते ॥८४॥

सा व्यवस्थापिका माया ब्रह्मणो हि सहायिका[३०] ।
क्रमात् सृष्टिं प्रकुरुते साऽविद्याभावरूपिणी ॥८५॥

नानात्वं नास्ति किञ्चिद्धि सृष्टिरेषाऽवभासते[३१] ।
विवर्तितमिदं ब्रह्म वैचित्र्येणाऽवभासते ॥८६॥

ब्रह्मणो नैव देहोऽस्ति नेत्रादीनीन्द्रियाणि नो[३२] ॥
सजातीया विजातीया नो समं ब्रह्म केवलम् ॥८७॥

---

२८. मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।– श्वेताश्वतरोपनिषद् ४।१०
२९. रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय । – बृहदारण्यकोपनिषद् २।५।१३
३०. इन्द्रो मायाभिः पुरुरूप ईयते । – बृहदारण्यकोपनिषद् २।५।१३
३१. मनसैवानुद्रष्टव्यं नेह नानास्ति किञ्चन । – बृहदारण्यकोपनिषद् ४।४।१९
३२. न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।
परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ।
– श्वेताश्वतरोपनिषद् ६।२

इच्छाशक्त्या क्रियाशक्त्या ज्ञानशक्त्याऽपि मायया।
सह स्वभावेन सृष्टं विचित्रं सृष्टिवैभवम् ॥८८॥

साधनानि विनैवाऽपि देवताः पितरो यथा।
सृष्टिं प्रकुर्वते तद्वद ब्रह्मणोद्भासितं जगत् ॥८९॥

अस्मिन् प्रकरणे सूत्रद्वयं वक्ति न साधनैः[३४]।
चित्रां प्रकुरुते सृष्टिमदृश्यं ब्रह्म मायया ॥९०॥

## (९) कृत्स्नप्रसक्त्यधिकरणम् (ब्रह्मसूत्रम् २।१।९।२६–२९)

शिष्यः –
ब्रह्म किं परिणाम्यस्ति ? यद्वा तन्नास्ति किं भवेत् ?
सन्दिग्धं मे मनोऽत्यन्तं भारवद् गरिमाऽन्वितम् ॥९१॥

ब्रह्म सम्पूर्णरूपेण परिणामि भवेद् यदि।
अनित्यं प्रवदन्त्येव तन्नित्यं सम्भवेत् कथम् ? ॥९२॥

अंशतः परिणामित्वे तत्सावयवमाप्नुयात्।
'निष्कलं निष्क्रियं शान्तं श्रुतिरेषाऽपि बाध्यते[३५]॥९३॥

---

३३. उपसंहारदर्शनान्नेति चेन्न क्षीरवद्। – ब्रह्मसूत्रम् २।१।८।२४–२५
३४. निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्। – श्वेताश्वतरोपनिषद् ६।१९
३५. क. दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः। – मुण्डकोपनिषद् २।१।२
ख. इदं महद् भूतमनन्तमपारं विज्ञानघन एव। – बृहदारण्यकोपनिषद् २।४।१२
ग. स एष नेति नेत्यात्मा। – बृहदारण्यकोपनिषद् ३।९।२६
घ. अस्थूलमनणु। – बृहदारण्यकोपनिषद् ३।८।८

श्रुतिप्रमाणैः सह ते[३६] पूर्वपक्षा भणन्त्यहो !
न ब्रह्म परिणाम्यस्ति विवर्त्यपि न किञ्चन ॥९४॥

तन्निष्क्रियं ब्रह्म कथं परिणामि कुतो भवेत् ।
आज्ञापयतु मामद्य कथं जगदसृज्यत ? ॥९५॥

गुरुः –
वदन्ति श्रुतयो नैका ब्रह्म कारणमस्त्यपि[३७] ।
मायां संश्रित्य तन्नानारूपं जगति गृह्यते ॥९६॥

सारल्येनैव तद् ब्रह्म परिणाम्यवत् स्वयम् ।
अनुस्यूतेन जगति[३८] सृज्यते निखिलं जगत् ॥९७॥

अचिन्त्ये ब्रह्मणि बहु सन्देहोऽयुक्त एव हि[३९] ।
ब्रह्मेदं नेति निर्दिष्टं भुक्तिमुक्तिप्रदायकम्[४०] ॥९८॥

---

३६. क. सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि । – छान्दोग्योपनिषद् ६।३।२

ख. एतावानस्य महिमा ततो ज्यायांश्च पुरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि । – छान्दोग्योपनिषद् ३।१२।६

ग. सता सोम्य तदा सम्पन्नो भवति । – छान्दोग्योपनिषद् ६।८।१

३७. तत्सृष्ट्वा तदेवानुप्राविशत् । – तैत्तिरीयोपनिषद् २।६।१

३८. अचिन्त्याः खलु ये भावा न तांस्तर्केण साधयेत् ।
प्रकृतिभ्यः परं यत्तु तदचिन्त्यस्य लक्षणम् ॥ – महाभारतम् भीष्मपर्व ५।१२

३९. स एष नेति नेत्यात्मा ... अभयं वै जनक प्राप्तोऽसि ।
– बृहदारण्यकोपनिषद् ४।२।४

४०. क. इन्द्रो मायाभि पुरुरूप ईयते । – बृहदारण्यकोपनिषद् २।५।१९

ख. न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते ।
– बृहदारण्यकोपनिषद् ४।३।१०

तद् ब्रह्म परिणाम्यस्ति जगदन्तः स्थितं पुनः[४१] ।
प्रथमं माययाऽऽश्रित्य पुनर्जगदसृज्यत ॥९९॥

अस्मिन् प्रकरणे सूत्रचतुष्टयसमागतम्[४२] ।
सर्वं चैकमुखं वक्ति ब्रह्म विश्वं सिसृक्षति ॥१००॥

## (१०) सर्वोपेताधिकरणम् (ब्रह्मसूत्रम् २।१।१०।३०–३१)

शिष्यः –
शरीरहीनं ब्रह्माऽस्ति तेन माया वसेन्न वा ?
सन्दिग्धं मे मनोऽत्राऽपि बोद्धुमेतन्न शक्यते ॥१०१॥

तदित्थं सति सन्देहे पूर्वपक्षा भणन्त्यपि ।
अशरीरे ब्रह्मणि तु माया न वसति ध्रुवम् ॥१०२॥

ये ऐन्द्रजालिकाः सन्ति सशरीरा भवन्ति ते ।
मायया सह सम्मेल्य पदार्थान् संसृजन्त्यपि ॥१०३॥

अत एवाऽशरीरेण ब्रह्मणा संविशेत् कथम् ?
अलिङ्गेनाऽपि सा माया भवेत् सहचरी कथम् ॥१०४॥

आज्ञापयतु मामेषा माया किं ब्रह्मणा सह ।
वसन्ती च विशन्ती च सप्रमाणं शृणोमि तत् ॥१०५॥

गुरुः –
सुस्पष्टं दृश्यते लोके निर्माणार्थं तु साधनम् ।
आवश्यकं भवत्येव कर्ता सृजति तत्परम् ॥१०६॥

---

४१. कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा । – ब्रह्मसूत्रम् २।१।९।२६–२९
४२. सर्वकर्माः सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः ।
– छान्दोग्योपनिषद् ३।१४।४

परन्तु सर्वकर्मा तद् ब्रह्म तु बाह्यसाधनम्[४३] ।
विनाऽपि सहजेनैव रचनार्थं हि सक्षमम् ॥१०७॥

ब्रुवते श्रुतयो नैकाः सत्यकाम[४४] इदं पुनः ।
[४५]सर्वज्ञं ब्रह्म कुरुते सूर्यादीनां प्रवर्तनम्[४६] ॥१०८॥

श्रोत्रे द्वे नैव नेत्रे स्तो[४७] हस्तपादं विनाऽपि तत्[४८] ।
सर्वज्ञं ब्रह्म कुरुते सृष्टिकर्माणि मायया[४९] ॥१०९॥

एतस्मात् कारणान्माया ब्रह्मणाऽप्यशरीरिणा ।
अनिर्वाच्यस्वरूपाऽस्ति साहाय्यं च प्रकुर्वती ॥११०॥

यथाऽस्मान् बाधते मायाऽनिशं संमोहन्त्यपि ।
तथा सम्मोहयन्ती सा कथं ब्रह्म न बाधते ? ॥१११॥

प्रश्नश्चेदीदृशस्तेषामुत्तरं शृणु साम्प्रतम् ।
अहमुत्तरयाम्यत्र माया ब्रह्म न बाधते ॥११२॥

यथा विष्णोरमा शम्भोर्गौरी मघवतः शची ।
संज्ञा भानुमतः सिद्धिर्गणेशस्य यथा प्रियाः ॥११३॥

---

४३. सत्यकामः सत्यसङ्कल्पः । – छान्दोग्योपनिषद् ८।७।१
४४. यः सर्वज्ञः सर्ववित् । – मुण्डकोपनिषद् १।१।९
४५. एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः ।
– बृहदारण्यकोपनिषद् ३।८।९
४६. अचक्षुष्कमश्रोत्रमवागमनः । – बृहदारण्यकोपनिषद् ३।९।८
४७. अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । – श्वेताश्वरोपनिषद् ३।१९
४८. मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । – श्वेताश्वतरोपनिषद्. ४।१०
४९. क. अनिर्वाच्याविद्या । – भामतीटीका १
ख. मायाप्रियैकत्वम् (कविता) विविधपद्यावलिः – पं. भीमकान्तपन्थी

भर्तुः पुंस्त्वादिमाः सर्वाः सतीत्वमभजन् परम् ।
अलिङ्गत्वादसङ्गत्वान्निर्गुणत्वाददेहतः ॥११४॥

ब्रह्मणोऽक्रियतां बुध्वा माया वेश्येव मानवान् ।
समाश्रिता दुःखदाऽस्ति मोहयन्ती प्रबाधते[५०] ॥११५॥

अस्मिन् प्रकरणे सूत्रद्वयं तद् वक्ति मायया[५१] ।
सह ब्रह्माऽपि नानात्वं जगत् सृजति सन्ततम् ॥११६॥

## (११) प्रयोजनवत्वाधिकरणम् (ब्रह्मसूत्रम् २।१।११।३२–३३)

शिष्यः –
ब्रह्म नित्यं हि संतृप्तं क्व तत् सृष्टिं करोत्यहो ?
गुरो ! सृष्टिफलं किं तत् सन्देग्धि हृदयं मम ॥११७॥

वादिनः प्रवदन्त्यत्र ब्रह्माऽऽनन्दस्वरूपकम्[५२] ।
नित्यं तृप्तं कथं कुर्यात् सुचिन्त्यं सृष्टिकर्म तत् ॥११८॥

यदि सृष्टं जगत् तेन तृप्तेर्व्याघातकारि तत् ।
इच्छां विना सृज्यते चेद् यथोन्मत्तस्य कर्तृकम् ॥११९॥

अत एव ब्रह्म स्रष्टा सृष्टेर्न भवति क्वचित् ।
वादिनः प्रवदन्त्येतत् सृष्टेः स्रष्टाऽस्ति वक्तु कः ? ॥१२०॥

---

५०. सर्वोपेता च दर्शनात् । – ब्रह्मसूत्रम् २।१।१०।३०–३१
५१. क. आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन । आनन्दो ब्रह्मेति व्यजानात् ।
– तैत्तिरीयोपनिषद् २।७।१, ३।६।१
ख. विज्ञानमानन्दं ब्रह्म । – बृहदारण्यकोपनिषद् ३।९।२८
५२. लोकवत्तु लीलाकैवल्यम् । – ब्रह्मसूत्रम् २।१।११।।३३

गुरुः –

चिक्रीडति यथा राजा प्रयोजनविना तथा ।
प्रयासेन विनाप्राणी श्वासोच्छ्वासं करोत्यपि ॥१२१॥

चिक्रीडति यथा बालः प्रयोजनविना तथा ।
एकोऽहं बहु भूयासं खेलां खेलति बालवत्[५३] ॥१२२॥

तथैव कुरुते ब्रह्म नित्यतृप्तोऽपि खेलति ।
स्वयं जगद् रचयति विवेकीव विचारयन् ॥१२३॥

विचित्रं सृज्यते स्रष्टा फलहीनं भवेदपि ।
एषाऽस्ति ब्रह्मणो लीला सूत्रं स्पष्टं प्रवक्त्यपि ॥१२४॥

अस्मिन् प्रकरणे सूत्रद्वयमाख्याति ब्रह्म वै ।
सृष्टेरपि स्वयं स्रष्टा लीलामिव करोति वै ॥१२५॥

## (१२) वैषम्यनैर्घृण्याधिकरणम् (ब्रह्मसूत्रम् २।१।१२।३४–३६)

शिष्यः –

गुरो ! किं ब्रह्म वैषम्यनैर्घृण्यादिकदोषभाक् ?
भवेद् यद्वा न वा किं तन्निर्दोषं कथमस्त्यपि ॥१२६॥

वादिनः कथयन्त्यत्र दोषद्वययुगस्ति तत् ।
उदाहरणपूर्वं च सदोषं ते भणन्त्यपि ॥१२७॥

स ईश्वरोऽपि देवादीनत्यन्तं सुखकारकः ।
भयङ्करो दुःखदोऽस्ति निरीहान् पशुपक्षिणः ॥१२८॥

---

**५३. न प्रयोजनवत्त्वात् । – ब्रह्मसूत्रम् २।१।११।३२–३३**

कुर्वन्निव समं दुःखसुखदं ब्रह्म मानवान् ।
वैषम्यं प्रकरोत्यव जीवाऽऽत्मासु निरन्तरम् ॥१२९॥

अन्त्यकालेतु ब्रह्मैव सृष्टं सर्वं विनंक्षति ।
अतो ब्रह्मणि नैर्घण्यं नाम दोषो लगत्यपि ॥१३०॥

तदित्थं पूर्वपक्षास्तु द्वौ दोषौ ब्रह्मणि स्थितौ ।
ब्रुवते, ब्रह्मनिर्दोषमस्ति वा नास्ति किं गुरो ! ॥१३१॥

पूर्वपक्षा यथा दोषौ दर्शयन्ति तथाऽस्ति किम् ।
मानसं भ्रमितं मेऽत्र भवान् भणतु साम्प्रतम् ॥१३२॥

गुरुः –
पूर्वं सर्वे समायातास्तत्र तत्रैव दर्शिताः ।
स्थूणानिखनन्यायेन पुनरुक्तौ प्रकाश्यते ॥१३३॥

दोषौ वैषम्यनैर्घृण्यौ ब्रह्मणि लगतो न हि ।
सर्वं सापेक्षरूपेण सृष्टि प्रकुरुते जगत् ॥१३४॥

निरपेक्षं यदि ब्रह्म तर्हि दोषमवाप्नुयात् ।
श्रुतिरेवं हि मनुते दोषो लगति नान्यथा ॥१३५॥

शिष्यः –
निरपेक्षं च सापेक्षं किं स्यातां सृष्टिकारणे ।
जिज्ञासति मनो मेऽत्र ब्रह्मन्ने तन्निवार्यताम् ।१३६॥

गुरुः –
प्राणिनां सृज्यमानानां पूर्वकर्माणि चिन्तयन् ।
सापेक्षेन समत्वेन ब्रह्म सृष्टिं करोति वै ॥१३७॥

धर्माऽधर्मौ संविचार्य सुखदुःखेऽपि वीक्षयन् ।
ब्रह्म जीवान् संसृजति क्वापि पूर्वाग्रह विना ॥१३८॥

प्रणिनां पूर्वधर्माणि पूर्वकर्माणि कारणम्[५४] ।
असाधारणमाधारे भोगान् भुञ्जन्ति प्राणिनः ॥१३९॥

धर्मेण सुखसंप्राप्तिरधर्माद् दुःखमाप्यते[५५] ।
एतस्माद् भुञ्जते जीवा नेशो विषमति क्वचित् ॥१४०॥

श्रुतयः स्मृतयोऽप्यत्र बहुशो दर्शयन्त्यपि[५६] ।
धर्माऽधर्मानुसारेण भोगान् भुञ्जन्ति प्राणिनः ॥१४१॥

शिष्यः –
यदा कर्मानुसारेण भोगान् भुञ्जन्ति जीविनः ।
तर्हि किं ब्रह्म वर्तेत तस्य का भूमिकाऽस्त्यहो ? ॥१४२॥

गुरुः –
यदि वर्षति पर्जन्यस्तत् साधारणकारणम् ।
बीजं रोहति सामर्थ्यादसाधारणकारणम् ॥१४३॥

तद् वद भोगेऽपि जीवानां ब्रह्म सामान्यकारणम् ।
धर्माऽधर्मौ प्राणिनां यौ तदसामान्यकारणम् ॥१४४॥

ईशः सुखानि दुःखानि दत्ते कर्मानुसारतः ।
दोषौ वैषम्यनैर्घृण्यौ लगतस्तं न कर्हिचित् ॥१४५॥

---

५४. पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन । – बृहदारण्यकोपनिषद् ३।२।१३
५५. एष ह्येव साधु कर्म कारयति त यमेभ्यो लोकेभ्य उन्निनीषते एष उ एवासाधु कर्म कारयति तं यमधो निनीषते ।– कौषीतकीब्राह्मणम् ३।८
५६. ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् । – गीता ४।११

[57]अनादिसृष्टौ जगति सौम्य ! बीजाङ्कुरौ यथा ।
भोगादीन् जन्ममृत्यू च कर्माणि ददतं सदा ।।१४६।।

अस्मिन् प्रकरणे सत्रत्रितयं समुपागतम्[58] ।
सर्वं चैकमुखं वक्ति ब्रह्म दोषैर्न लिप्यते ।।१४७।।

## (१३) सर्वधर्मोपपत्त्यधिकरणम् (ब्रह्मसूत्रम् २।१।१३।३७)

शिष्यः –
निर्गुणी प्रकृतिर्याऽस्ति किं सोपादानकारणम् ।
शक्नोति भवितुं वा न सन्दिग्धं मे मनोऽभवत् ।।१४८।।

अत्राऽस्मिन् पूर्वपक्षास्तु कथं शक्नोति निर्गुणी ।
उपादानं न भवति मृत्तिका सगुणा भवेत् ? ।।१४९।।

यथा घटार्थं भवति मृत्तिका मूलकारणम् ।
निर्गुणं कारणं मा स्यात् सगुणं कारणं भवेत् ।।१५०।।

आज्ञापयतु मामद्य निर्गुणं ब्रह्म कारणम् ।
भवेद् वा न भवेत् तत् किं शङ्का मेऽस्तु निवारणम् ।।१५१।।

गुरुः –
या दृष्टा कार्यरूपेण प्रकृति साऽस्ति तामपि[59] ।
उपादानं कारणं तत् कथ्यतेऽज्ञानिभिर्जनैः ।।१५२।।

द्वे रूपे स्तो विकारस्य दुग्धस्य विकृतं दधि ।
अन्यद् रज्जौ भ्रमात् सर्पो दृश्यते विकृतो हि सः ।।१५३।।

---

५७. न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च सम्प्रतिष्ठा । – गीता १५।३
५८. वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति । – ब्रह्मसूत्रम् २।१।१२।३४–३६
५९. प्रक्रियते अनया प्रकृतिः ।

अधिष्ठानं रज्जुरस्ति भ्रमः सर्पस्य कारणम् ।
अन्ततो निर्गुणं ब्रह्माऽधिष्ठानं सर्वकारणम् ॥१५४॥

भवेत् सगुणरूपार्थं निर्गुणं मुख्यकारणम् ।
ब्रह्मैव पूर्वमप्युक्तं स्यादुपादानकारणम् ॥१५५॥

अतो भवति निर्गौणी चाऽऽद्या प्रकृतिकारणम् ।
अस्याऽप्यधिष्ठानमस्ति निर्गुणं ब्रह्मकारणम् ॥१५६॥

सर्वज्ञं शक्तिमद् ब्रह्म[६०] निर्गुणं चाऽपि मायया ।
सहितं तेन सगुणं जगत् सृष्टं चराऽचरम् ॥१५७॥

अतो हि निर्गुणं ब्रह्म प्रकृतेरादिकारणम् ।
ब्रह्मैव निर्गुणं सृष्टेरस्त्युपादानकारणम् ॥१५८॥

विवर्तनं ब्रह्मणो हि जगदेतच्चराऽचरम् ।
दृष्टान्तोऽस्ति विवर्तस्य रज्जुसर्प भ्रमोऽहि सः ॥१५९॥

भ्रमस्यैतदधिष्ठानं निर्गुणा प्रकृतिः स्वतः ।
सर्वस्य निर्गुणं ब्रह्म स्यादुपादानकारणम् ॥१६०॥

अस्मिन् प्रकरणे सूत्रेणैकेन[६१] प्रतिपाद्यते ।
ब्रह्मणो निर्गुणस्यैव सृष्टेरस्यादिकारणम् ॥१६१॥

॥ इति ब्रह्मसूत्रकारिकायां द्वितीयाऽध्याये प्रथमः पादः ॥

❀

---

**६०. सर्वज्ञं सर्वशक्तिर्महामायञ्च ब्रह्म ।**

**६१. सर्वधर्मोपपत्तेश्च । – ब्रह्मसूत्रम् २।१।१३।३७**

**ॐ तत्सद्ब्रह्मणे नमः ।**

**अथ ब्रह्मसूत्रकारिकायां**

# द्वितीयेऽविरोधाध्याये

## द्वितीयः पादः

द्वितीये स्मृतितर्काभ्यामविरोधाऽन्यदुष्टता ।
भूतभोक्तृश्रुतेर्लिङ्गश्रुतेरप्यविरुद्धता ॥

(अस्मिन् पादे रचनाऽनुपपत्तित उत्पत्त्यसम्भवसहितान्यष्टावधिकरणानि सन्ति । अत्र साङ्ख्यादिमतपरिहारो विहितोऽस्ति ।)

### (१) रचनाऽनुपपत्त्यधिकरणम् (ब्रह्मसूत्रम् २।२।१।१–१०)

शिष्यः –

हे गुरो ! जगतां हेतुः प्रधानं साङ्ख्यवादिनाम् ?
यद्वा नाऽस्त्यत्र सन्देहो मनो मेऽतीव चञ्चति ॥१॥

जडमायाविकारं तद् घटादिकार्यवैभवम् ।
सुखं दुःखं च मोहाक्तं दृश्यते त्रिगुणात्मकम् ॥२॥

तदेतत् त्रितयो भावः प्रधाने स्थीयते स्वतः ।
त्रिभिरेव गुणैरेभिः सृज्यते तत्त्वतो जगत् ॥३॥

एतस्मादेव साङ्ख्योक्तं प्रधानं सृष्टिकारणम् ।
भणन्ति साङ्ख्याश्चैतत् किं ? भवान् वदतु कारणम् ॥४॥

गुरुः –

देहेन्द्रियाणि शैलादि सामान्यं रचनं न तत् ।
न विश्वरचनाकार्यं प्रधानं कर्तुमर्हति ॥५॥

यदेतद् व्यवहारार्थं घरं यानं विरच्यते ।
प्रवीणैः शिल्पिभिर्विज्ञैः पुरे मार्गोऽपि रच्यते ॥६॥

प्रधानं चाऽप्यधिष्ठात्रा सहाऽऽश्रित्य करोति चेत् ।
सृष्टिसंरचने शक्तं दृश्यो बीजसमुद्भवः ॥७॥

क्रियन्ते सञ्चया ये ये घटाद्याश्च पटादयः ।
सुखार्थं धनरत्नानि ते सर्वे दुःखहेतवः ॥८॥

अतो दुःखं सुखं वस्तु सर्वेष्वन्तरितं मनः ।
मनसि प्रीतिमापन्ने सर्वत्र सुखिनो वयम् ।
समन्वयोऽसम्भवोऽस्ति न सुखं बाह्यवस्तुषु ॥९॥

जगत्सृष्टौ तु साङ्ख्यानां मतमस्ति न सङ्गतम् ।
[१]प्रधानमस्ति यत्साङ्ख्यं खण्डितं भ्रान्तिमूलकम् ॥१०॥

प्रारम्भे साङ्ख्यसिद्धान्तोऽयुक्तोऽस्तीति प्रबोधितः ।
प्रधानं जडवादिनां कारणं चाऽस्ति खण्डितम् ॥११॥

जडं प्रधानं सृष्ट्यादि न किञ्चित् कर्तुमर्हति ।
ईक्षतेरिति सूत्रेण पूर्वमेवाऽस्ति खण्डितम् ॥१२॥

निश्चितः सृष्टिसिद्धान्तः साङ्ख्यवादिमते न हि ।
एतस्मात् कारणादस्ति साङ्ख्यानां खण्डितं मतम् ॥१३॥

अस्मिन् प्रकरणे सूत्रदशकं समुपागतम् ।[२]
असङ्गतः सृष्टिविधौ साङ्ख्यसिद्धान्त ईरितः ॥१४॥

---

१. **विप्रतिषेधाच्चासमञ्जसम् । – ब्रह्मसूत्रम् २।२।१।१०**
२. **ईक्षतेर्नाशब्दम् । – ब्रह्मसूत्रम् १।१।५।५**

## (२) महद्दीर्घाधिकरणम् (ब्रह्मसूत्रम् २।२।२।११)

शिष्यः –

सम्भवं न हि सादृश्यमसादृश्येन हेतुना ।
काणादमतमेतद् वै तेन किं क्रियते गुरो ! ।।१५।।

कारणेन विना कार्यं पृथक् क्वाऽपि न विद्यते ।
घटो भवति मृत्पिण्डादन्यैर्निर्मीयते न हि[३] ।।१६।।

श्वेतवस्त्रस्य निर्माणं भवेत श्वेतेन तन्तुना ।
रक्तेन तन्तुना क्वापि श्वेतं वस्त्रं न मीयते ।।
श्वेतं वस्त्रं न निर्माति क्वाऽपि रक्तेन तन्तुना ।।१७।।

कारणस्य गुणाः कार्ये सादृश्येन प्रयान्त्यपि ।
एष सादृश्यसिद्धान्तः काणादमतमिष्यते ।।१८।।

तदित्थं पूर्वपक्षाणां मते संशय आगतः ।
कार्यकारणेसिद्धान्तोऽनिश्चयत्वादसङ्गतः ।।१९।।

किं काणादमतं युक्तमयुक्तं मन्यतेऽथवा ।
आज्ञापयतु मामत्र जिज्ञासा पुनरागता ।।२०।।

गुरुः –

समायात् प्रथमे पादेऽचेतनं चितिरिच्छया ।
वैलक्षण्यं प्रभवति यथा गोमयवृश्चिकम् ।।२१।।

कार्यकारणसादृश्ये मतं वैशेषिकं त्वतः ।
खण्डितं प्रभवत्येव तेषामेव मते स्वतः ।।२२।।

---

३. रचनानुपपत्तेश्च नानुमानम् । – ब्रह्मसूत्रम् २।२।१।१

पारिमाण्डल्यमप्यत्र परमाणोः प्रजायते ।
परिमाणप्रयुक्तोऽस्ति नाऽयुक्तं परमाणुतः ॥२३॥

सूक्ष्माच्च परमाणोर्वै द्व्यणुकं त्र्यणुकं ततः ।
परमाणोरेव महज्जायेत पारिमण्डलम् ॥२४॥

काणादमतमेतद्धि दृश्यते सृष्टिकारणे ।
वैसादृश्यसमुत्पत्तौ काणादमतमाप्यते ॥२५॥

अभिन्नं मतमद्वैतात् काणादं मतमाप्यते ।
चितिरिच्छा समायाता ह्यचिदुत्पद्यते यथा ॥२६॥

सादृश्यं कार्यमुत्पत्तौ काणादं खण्डितं मतम् ।
इत्थमद्वैतसिद्धान्तः सर्वांशे मण्डितोऽभवत् ॥२७॥

अस्मिन् प्रकरणे सूत्रमेकमुद्घोषयत्यपि ।
मतं सादृश्यसिद्धान्ते काणादमिह खण्डितम्[४] ॥२८॥

## (३) परमाणुजगत्कारणत्वाधिकरणम् (ब्रह्मसूत्रम् २।२।३।१२–१७)

शिष्यः –
संयुक्तः परमाणुर्यो जगत्कारणमस्ति किम् ?
न भवत्यथवा किं स्यात् सन्दिग्धं हृदयं गुरो ॥२९॥

सृष्टेः पूर्वं कर्मजन्यसंयोगेन यदा तदा ।
परमाणुर्गतो युक्तो द्व्यणुकस्त्र्यणुकोऽभवत् ॥३०॥

अणुभ्यो मिलितास्ते हि जगतः सन्ति कारणम् ।
जगद्विशालं रचितं वैशेषिकमतं त्विदम् ॥३१॥

---

४. महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् । – ब्रह्मसूत्रम् २।२।२।११

आज्ञापयतु मामद्य जिज्ञासा समुपागता ।
किं काणादमतं मान्यं सिद्धान्तः कोऽस्ति मानितः ॥३२॥

गुरुः –
सनिमित्तकं कर्माऽस्ति यद्वा कर्माऽनिमित्तकम् ।
विकल्पमागतं चाऽत्र निमित्तं चाऽनिमित्तकम् ॥३३॥

निमित्तं प्रथमं नास्तिह्याद्यं कर्माऽस्त्यसम्भवम् ।
अनिमित्ते मानिते तु प्रलयोत्पत्तिदुर्लभा ॥३४॥

कर्माभावो भवति चेत् संयोगस्याऽप्यसम्भवः ।
संयोगाभावो यदि स्याज्जगत्सृष्टिरसम्भवा ॥३५॥

अस्वीकृतं मतं चेदं शिष्टैर्मन्वादिभिः सदा[५] ।
मतं निराकृतं हेयमिदं कल्याणकामिभिः ॥३६॥

अस्मिन् प्रकरणे सूत्रषट्कमेकमतस्थितम्[६] ।
षडभिरेभिः समैः सूत्रैरणुवादो विखण्डितः ॥३७॥

## (४) समुदायाधिकरणम् (ब्रह्मसूत्रम् २।२।४।१८–२७)

शिष्यः –
[७]बाह्याऽतिरिक्तमस्तित्वमन्यदाभ्यन्तरं मतम्[८] ।
बाह्याऽस्तित्वप्रवक्तानां समुदायद्वयं मतम् ॥३८॥

---

५. अपरिग्रहाच्चात्यन्तमनपेक्षा । – ब्रह्मसूत्रम् २।२।३।१७
६. उभयथापि न कर्मास्तदभावः । – ब्रह्मसूत्रम् २।२।३।१२–१७
७. बाह्याः समुदाया पृथ्वीनदीनदसमुद्रादयः ।
८. आन्तराः समुदायाः चित्त–चैत्य–चैतन्यरूपाः ।

संघातः परमाणूनां समुदायौ बहिर्भवौ ।
आभ्यन्तराः समुदायाः पञ्चस्कन्धस्य हेतुकाः[९] ॥३९॥

एतेभ्यो जगदुत्पत्तिः कथं भवितुमर्हति ?
सन्देग्धि हृदयं ब्रह्मन्नाज्ञापयतु मां भवान् ॥४०॥

गुरुः –
समुदायाः समे बाह्याः पृथ्वीनदीनदादयः ।
आन्तराः समुदायास्तु चित्तचैतन्यरूपकाः ॥४१॥

समुदायाः समैवैते जगद्रूपा हि सन्त्यपि ।
एष एवाऽस्ति सिद्धान्तः सर्वाऽस्तित्वप्रवादिनाम् ॥४२॥

बाह्यानां समुदायानां हेतवः परमाणवः ।
समुदायाऽऽन्तराणां तु पञ्चस्कन्धा हि हेतवः ॥४३॥

संघातानां समुत्पत्तौ निमित्तं स्याद्धि चेतनम् ।
नो चेत् कथं तदुत्पत्तिस्तत्सृष्ठिरवरुध्यते ॥४४॥

अचेतनाः पञ्चस्कन्धास्तथा च परमाणवः ।
न तेषां समुदायः स्यात् तेषां सृष्टिर्विखण्डिता ॥४५॥

अस्मिन् प्रकरणे सूत्रदशकं समुपागतम्[१०] ।
स्कन्धानां समुदायानां खण्डनं तानि कुर्वते ॥४६॥

---

९. पञ्च स्कन्धाः सन्ति – रूपस्कन्धः, विज्ञानस्कन्धः, वेदनास्कन्धः, संज्ञास्कन्धः, संस्कारस्कन्धश्च । एते स्कन्धा आध्यात्मिकाः । व्यवहारविषयरूर्वपामे सङ्घात्मकतां भजन्ते ।
१०. समुदाय उभयहेतुकेऽपि तदप्राप्तिः । – ब्रह्मसूत्रम् २।२।४।२८–३२

## (५) अभावाधिकरणम् (ब्रह्मसूत्रम् २।२।५।२८–३२)

शिष्यः –

विज्ञानं मन्वते सृष्टौ बौद्धाविज्ञानवादिनः ।
बाह्या पदार्था हेतुर्नो ह्यान्तरा बुद्धिवादिनः ॥४७॥

बौद्धविज्ञानसिद्धान्तो युक्तो वा नोपयुक्तकः ।
सन्देग्धि मानसं मेऽत्र किं वाऽयं नोपयुक्तकः ॥४८॥

विज्ञानस्कन्धमात्रन्तु मन्यते पूर्वपक्षिभिः ।
उपयुक्तः सृष्टिहेतौ बौद्धसिद्धान्तमन्तरा ॥४९॥

यथा पदार्थाऽभावेऽपि व्यवहाराश्चरन्त्यहो ?
बुद्धिमन्तर्गताः स्वप्ने तथा जगति दृश्यते ॥५०॥

तथा जगन्ति दृश्यन्ते व्यवहाराश्चरन्त्यपि ।
विज्ञानस्कन्धमात्रं तु ते युक्तं ब्रुवते न किम् ? ॥५१॥

गुरुः –

जाग्रति स्वप्नदृष्टान्तो विषमोऽस्ति न शोभते ।
बाध्यन्ते स्वप्नकार्याणि सम्पूर्णानीह जाग्रति ॥५२॥

जाग्रतो व्यवहारास्तु बाध्यन्ते नैव क्वापि हि ।
बाह्यानां च पदार्थानां लब्धिं स्वीकुर्वते जनाः ॥५३॥

आन्तर्विज्ञानमात्रेण व्यवहाराश्चलन्ति नो ।
तेषां स्वप्नस्य दृष्टान्तो व्यवहारे कथं मिलेत् ? ॥५४॥

क्षणिकं मनुते वादी सर्वं विज्ञानमालयम् ।
विज्ञानं नैव शक्नोति वासनायाः समाश्रयः ॥५५॥

ज्ञानं बाह्यपदार्थानां वासनां प्रति कारणम् ।
नाऽस्तीत्यतो बाह्यवस्तु वासना च निवारिता ॥५६॥

स्वप्नस्य जाग्रतो ज्ञानं बाधितं चाऽप्यबाधितम् ।
वैधर्म्यः स्वप्नदृष्टान्तो न जाग्रद् बाधितो भवेत् ॥५७॥

विज्ञानवादसिद्धान्तो बाधितः कारणाद् यतः ।
वैभाषिकाश्च शून्याश्च सौत्रान्तास्तेन बाधिताः ॥५८॥

तदर्था वादिनां ग्रन्था द्वयौ दृष्टावसंगतौ ।
भूत्यर्थं न क्षमौ चैतौ यतो हि भ्रान्तिमूलकौ ॥५९॥

मतमेतन्निराधारमतो विज्ञानवादिनाम् ।
कल्पितश्चैष सिद्धान्तः सर्वांशाऽधारहीनतः ॥६०॥

अस्मिन् प्रकरणे सूत्रपञ्चकं समुपागतम्[११] ।
सर्वैः सूत्रैरुहापोहाद् विज्ञानमत खण्डितम् ॥६१॥

## (६) एकस्मिन्नसम्भवाधिकरणम् (ब्रह्मसूत्रम् २।२।६।३३–३६)

शिष्यः –
सप्तभङ्गिन्यायसिद्ध्या[१२] ज्ञाताः सप्तपदार्थकाः[१३] ।
सिद्धान्तो जैनपक्षस्य सृष्टिहेतौ समागतः ॥६२॥

अनिश्चितः सप्तभङ्गिसिद्धान्तः खलु दृश्यते ।
स्याद्वादोपरिसन्देहोऽनेनैवोत्पादितो भृशम् ॥६३॥

११. नाभाव उपलब्धेः । – ब्रह्मसूत्रम् २।२।५६।२८–३२
१२. स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च स्याद्वक्तव्यः, स्यादस्ति चावक्तव्यश्च, स्यान्नास्ति चावक्तव्यश्च, स्यादस्ति च नास्ति चावक्तव्यश्च ।
१३. जीवः अजीवः आस्रवः स्रंवरः निर्जरः बन्धः मोक्षः ।

एतस्मिन् जैनपक्षाणां साधकन्यायसम्प्लुतम् ।
अस्तित्वमाप्यतेऽनेन प्राप्तासिद्धिर्यथार्थतः ॥६४॥

आज्ञापयत्वत्र गुरो ! जैनानां कीदृशं मतम् ?
साधनान्यपि कानीह ? मोक्षरूपं च कीदृशम् ? ॥६५॥

गुरुः –
राद्धान्तः सप्तभङ्ग्याऽऽख्यो जैनानां न्याय साधकः ।
स्यादस्ति स्यान्नास्ति चादि तेषामस्तित्वसाधनम् ॥६६॥

सप्तभङ्गीन्याय एष उपन्यायसमोऽस्त्यपि ।
एकमप्यत्र जीवं स सदसन्मनुते कथम् ? ॥६७॥

जीवं सावयवं जैना मन्यन्ते विभ्रमन्ति ते ।
यदि सावयवो जीवोऽनित्य एषोऽभिजायते ॥६८॥

जैनानामेष सिद्धान्तो भङ्गी भवति विभ्रमात् ।
वाग्जालपूर्णो दृष्टोऽस्ति तेन मोक्षं कथं मिलेत् ? ॥६९॥

अस्मान्न्यायात् सप्तभङ्ग्या जीवाद्याः सप्तवस्तुनः ।
जैनानां नैव सिद्धिः स्यात् कथमप्यस्ति दुर्लभा ॥७०॥

अस्य विस्तरमालेखाल्लम्बमानोऽत्र जायते ।
सङ्क्षेपः पादटिप्पण्यामुट्टङ्कीक्रियतेऽधुना[१४] ॥७१॥

---

१४. सङ्क्षेपेण पदार्थद्वयमस्ति जीवः, र अजीवश्च एतयोर्ययायोग्यं परस्परमन्तर्भावो भवतीति मन्यते । जीवास्तिकायम्, पुद्गलास्तिकायम्, धर्मास्तिकायम्, अधर्मास्तिकायम्, आकाशास्तिकायञ्चेति । कायपद्यकं तत्र कल्प्यते अस्तिकायसहितानि एतानि युक्ति-प्रमाणशहित्येन आर्हतमतसम्मतानि सन्ति ।

अस्मिन् प्रकरणे सूत्रचतुष्टयं समागतम्[१५] ।
खण्डयन्त्यपि सर्वाणि जैनं मतमनादृतम् ॥७२॥

### (७) पत्यधिकरणम् (ब्रह्मसूत्रम् २।२।७।३७–४१)

शिष्यः –
ईश्वरोऽयं सदा साक्षी तटस्थोऽस्ति परात्परः ।
स भवेत् सृष्टिहेतुः किं ? सन्दिग्धं मे मनोऽधुना ॥७३॥

योगवादी साङ्ख्यवादी कुम्भकारस्य चक्रवत् ।
निमित्तकारणं ब्रूते जगत्सृष्टौ सहेतुकः ॥७४॥

ब्रूवन्त्युदाहरन्त्येषोऽनुपादानं सहेतुकम् ।
कुलालवन्नियन्ताऽस्ति जगच्चक्रे स ईश्वरः ॥७५॥

अत एवाऽत्र मे शङ्काऽस्ति निमित्तं किमीश्वरः ।
उपादानं कारणं वा ? ब्रह्मन् ! ब्रूतां निवार्यताम् ॥७६॥

गुरुः –
इतः पूर्वं हीश्वरोऽयमुपादानं निमित्तकम् ।
प्रोक्तश्चमानितश्चाऽपि कुतर्कः पुनरागतः ॥७७॥

निमित्तमात्रं स्वीकारे हीश्वरः स्यादवैदिकः ।
ईशे वैषम्य नैर्घृण्यौ दोषौच लगतः पुनः ॥७८॥

एतस्मात् कारणादीशस्तटस्थः सृष्टिकर्मणि ।
सापेक्षं कर्म कुरुते जगज्जीवादिसर्जने ॥७९॥

---

**१५. नैकस्मिन्नसम्भवात् । – ब्रह्मसूत्रम् २।२।६।३३–३६**

इत्थं दोषो न लगति तटस्थो वसतीश्वरः ।
एवं ब्रूते हि वेदोऽपि साक्षी चेतन ईश्वरः[१६] ॥८०॥

अस्मिन् प्रकरणे सूत्रपञ्चकं वक्ति सस्वरम्[१७] ।
द्रष्टा स ईश्वरः साक्षी निर्लेपो जगदीश्वरः ॥८१॥

## (८) उत्पत्त्यसम्भवाधिकरणम् (ब्रह्मसूत्रम् २।२।८।४२–४५)

शिष्यः –
तत्पाञ्चरात्रसिद्धान्तस्ततः सम्प्रतिपादिते ।
जगज्जीवोत्पत्तिविधौ सन्देहो मां समागतः ॥८२॥

यथा कृष्णस्य भजनं श्रद्धा पूजनकर्म च ।
प्राक्तनं मन्यते तद्वत् जीवोत्पत्तिः पुरातनम् ॥८३॥

तदित्थं पूर्वपक्षाणां मतमागतवान् दृढम् ।
तद् युक्तमथवाऽयुक्तमाज्ञापयतु मां भवान् ॥८४॥

गुरुः –
पाञ्चरात्रमते त्वेको भगवान् वासुदेवभाः ।
उपादानं निमित्तं च सैकं ब्रह्माऽऽदिकारणम् ॥८५॥

जीवोत्पत्तिं मन्वते ते वासुदेवक्रमादिह ।
सङ्कर्षणश्च प्रद्युम्नोऽनिरुद्धः क्रमविस्तरः ॥८६॥

तदित्थं जीवनोत्पत्तिर्जीवादेव प्रदृश्यते ।
श्रुतिसम्मतमेतन्न मतं शिष्टबहिष्कृतम् ॥८७॥

---

१६. एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥ – श्वेताश्वतरोपनिषद् ६।११
१७. पत्युरसामञ्जस्यात् । – ब्रह्मसूत्रम् २।२।७।३७–४१

भक्तिः श्रद्धोपासना च पूजाकृष्णार्थमीहते ।
उपयुक्ता मन्यते हि विश्वोत्पत्तिर्न मन्यते ॥८८॥

जायते वर्द्धते पश्चात् क्षीयते म्रियतेऽपि च ।
अवैदिकोऽयं राद्धान्तो वैदिको नैव मन्यते ॥८९॥

जीवानामुदिते तेषां संस्काराः पूर्ववासनाः ।
लुप्यन्ते धर्मकर्माणि क्रियन्ते तानि पूर्ववत् ॥९०॥

जीवा नवीना जायन्ते पूर्वलोकोपसंहृतौ ।
पूर्वसंस्का धर्मादि नवसृष्टौ न दृश्यते ॥९१॥

कृतकर्माणि नश्यन्ति जीवोत्पत्तौ पुराणि तु ।
अकृतान्यापतन्त्यत्र[१८] शिष्टैरध्यापितानि च ॥९२॥

वैदिके तु मते दृष्टो जीवात्मा नैव नश्यति ।
मन्यन्ते पाञ्चरात्रास्तु भ्रान्तं चावैदिकं मतम् ॥९३॥

तैर्जीवोत्पत्तिसिद्धान्तोमन्यते करणैः परम् ।
असम्भवोऽस्ति सिद्धान्तो व्यवहारे न सङ्गतः ॥९४॥

न गुणीगुण योर्भेदो दृश्यतेऽस्मिन् मतेक्वचित् ।
दृष्टमस्ति विरुद्धं च परस्परविभेदतः ॥९५॥

पाञ्चरात्राऽऽगमश्चैष शाण्डिल्यो मुनिरालिखत् ।
अस्ति वेदविरुद्धं च तथाऽस्वीकार्य आगमः ॥९६॥

श्रद्धा पूजाऽऽराधनाद्याः स्वीकार्याः सन्ति यद्यपि ।
जगदुत्पत्तिसिद्धान्तः स्वीकार्यो भवतीह नो ॥९७॥

---

१८. अकृताभ्यागमः कृतप्रणाशः ।

अस्मिन् प्रकरणे सूत्रचतुष्कं समुपागतम्[१९] ।
असम्मतं पाञ्चरात्रं मतमुत्पत्ति हेतुकम् ।।९८।।

ब्रह्मसूत्रकारिकायां द्वितीयाध्यायवर्णितः ।
द्वितीयः पाद एषोऽत्र समनूद्य समापितः ।।९९।।

।। इति ब्रह्मसूत्रकारिकायां द्वितीयाध्याये द्वितीयः पादः ।।

१९. उत्पत्त्यसम्भवात् । – ब्रह्मसूत्रम् २।२।८।४–४५

**ॐ तत्सद्ब्रह्मणे नमः ।**

**अथ ब्रह्मसूत्रकारिकायां**

# द्वितीयेऽविरोधाऽध्याये

## तृतीयः पादः

द्वितीये स्मृतितर्काभ्यामविरोधाऽन्यदुष्टता ।
भूतभोक्तृश्रुतेर्लिङ्गश्रुतेरप्यविरुद्धता ॥

(अस्मिन् पादे वियदादीनि अंशसहितानि सप्तदशोऽधिकरणानि सन्ति। अत्र पञ्चमहाभूते जीवादिसम्बन्धे च श्रुता दृष्टानां परस्पराविरोधानां परिहारः कृतोऽस्ति ।)

### १. वियदधिकरणम् (ब्रह्मसूत्रम् २।३।१।१–७ )

शिष्यः –

आकाशमस्ति नित्यं वाऽनित्यमस्तीति वादिनाम् ।
परस्परविरोधोऽत्र भृशं शुश्रूषते मनः ॥१॥

पूर्वपक्षा वदन्त्यत्र तस्माद् वाऽऽकाश आगतः ।
श्रुतावुक्तौ न मिलति विनैव कारणत्रयम् ॥२॥

हेतुना समवायेनऽसमवायेनाहेतुना ।
हेतुनाऽपि निमित्तेन त्रयमुत्पत्तिकारणम् ॥३॥

कारणेन विनाऽऽकाशं कथमुत्पद्यते हठात् ।
अत एव महाकाशं नित्यमस्ति न संशयः ॥४॥

नोत्पद्यते महाकाशं मतमेतन्न हि श्रुतौ ।
अत एव महाकाशं नित्यं दर्शनसम्मतम् ॥५॥

तदित्थं पूर्वपक्षास्तु कारणत्रयदर्शकाः ।
भणन्ति नित्यमाकाशं ? किं वाऽनित्यं तदस्ति किम् ।।६।।

गुरुः –
पूर्वपक्षा भणन्त्यापि स्वसिद्धान्तमते स्थिताः ।
अद्वैतवादे नास्त्येव तन्महत्त्वं तु तत्त्वतः ।।७।।

श्रुतौ नास्त्येव छान्दोग्ये ह्यकाशोत्पत्तिकारणम् ।
तैत्तिरीयश्रुतिर्वक्ति ह्याकाशोत्पत्तिं मादितः[1] ।।८।।

ज्ञाते चैकं वस्तु हेतौ सर्ववस्तूनि बुध्यते[2] ।
मृद्वस्तुहेतुर्विज्ञाते ज्ञाताः सर्वे घटादयः ।।९।।

आकाशं ब्रह्मणः कार्यं ब्रह्म ज्ञाते तु बुध्यते[3] ।
वायुस्तेजो जलं पृथ्वी तत्क सर्वं हि बुध्यते ।।१०।।

सृष्टेरादौ तु सर्वत्र सच्चिदात्मा स एकलः[4] ।
आसीत् तदन्यन्नैवाऽऽसीत् ततः सृष्टिः सुविस्तृता ।।११।।

उपक्रमोपसंहारौ श्रुतेस्तौ बोद्धुमर्हतः ।
सर्वसृष्टेर्हेतुरिदं ब्रह्मैवाऽस्तीति बुद्ध्यते ।।१२।।

श्रुतेर्मन्त्राः संब्रुवते परोक्षमपरोक्षकम् ।
उपादाननिमित्ताभ्यां ब्रह्मैव सृष्टिकारणम् ।।१३।।

---

१. तस्माद् वा एतस्मादात्मन आकाशः सम्भूतः । – तैत्तिरीयोपनिषद् २।१।१
२. एकस्मिन् विदिते सर्वं विदितम् । – छान्दोग्योपनिषद् ६।१।३
३. क. आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम् ।
– बृहदारण्यकोपनिषद् ४।५।६
ख. येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम् । – छान्दोग्योपनिषद् ६।१।१
४. सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । – छान्दोग्योपनिषद् ६।२।१

पृथक् सन्ति विकारास्ते परस्परविभाजिताः ।
यथा घटाः पटा दृष्टास्तथाऽऽकाशो विभाजितः ॥१४॥

अत एवेदमाकाशं ब्रह्मणः समुपागतम् ।
उत्पादितानि वस्तूनि विनष्टानि भवन्त्यपि ॥१५॥

आरम्भवादे तानि स्युः कारणं समपेक्षितम् ।
विवर्तवादे नैव स्युः कारणं समुपेक्षितम् ॥१६॥

श्रुत्या पूर्वोक्तया साकं युक्त्या चैव प्रमाणतः ।
नित्यं नास्ति महाकाशं सृष्टं सर्वमनित्यकम् ॥१७॥

अस्मिन् प्रकरणे सूत्रसप्तकं समुपागतम्[५] ।
नित्यं नास्ति महाकाशं तानि सूत्राणि चक्षते ॥१८॥

### २. मातरिश्वाधिकरणम् (ब्रह्मसूत्रम् २।३।२।८ )

शिष्यः –
वायुर्नित्योऽस्ति वाऽनित्यो पुनःसन्देग्धि मे मनः ।
पूर्वपक्षा वदन्त्यत्र वायुर्नित्यः सदागतिः ॥१९॥

सैषाऽनस्तमिता वायुर्देवता श्रुतिवाक्यतः[६] ।
वायुर्देवोऽविनाशी च नित्यस्ते प्रवदन्त्यपि ॥२०॥

आज्ञापयतु मामद्य वायुर्नित्यो न वाऽस्ति किम् ।
जिज्ञासा समुदेत्यत्र वायुः कः का किमस्ति तत् ? ॥२१॥

---

५. न वियदश्रुतेः – ब्रह्मसूत्रम् २।३।१।१–७
६. सैषाऽनस्तमिता देवता यद्वायुः । – बृहदारण्यकोपनिषद् १।५।२२

गुरुः –

न छान्दोग्यश्रुतौ वायोरुत्पत्तिः परिदृश्यते ।
तैत्तिरीयो श्रुतौ गत्वा छान्दोग्यश्रुतिसंहृतिः ।।२२।।

वायुर्नित्ये या मनुते सा मुख्या न श्रुतिर्भभवेत् ।
उपासनार्थो मन्त्रोऽयं किं वा स्तुत्यर्थमागतः ।।२३।।

[७]सदात्मनो महाकाश आकाशाद् वायुरुद्भवः ।
सैषा परम्परा वायोरुत्पत्तौ परिदृश्यते ।।२४।।

अत एवाऽऽकाशमिव वायोरपि समुद्भव ।
यो जायते स म्रियते वर्द्धते क्षीयते स्वतः ।।२५।।

[८]अस्मिन् प्रकरणे सूत्रं वक्ति वायुरनित्यकः ।
आत्माऽतिरिक्तं सम्पूर्णं वस्तुजातं विनश्वरम् ।।२६।।

## ३. असम्भवाधिकरण (ब्रह्मसूत्रम् २।३।३।९ )

शिष्यः –

सद्रूपब्रह्मणो जन्म सत्यं भवति वा न वा ?
श्रुता विप्रतिपत्तिश्च पूर्वपक्षेरुदीरिता ।।२७।।

[९]सदेव सौम्येदमिति श्रुतिमन्त्रैर्वितर्किताः ।
सद्रूपं जायते ब्रह्म वियद् हेतुर्यथैव तत् ।।२८।।

---

७. **तस्माद् वा एतस्मादात्मन आकाशः सम्भूतः, आकाशाद् वायुः ।**
**– तैत्तिरीयोपनिषद् २।१।१**

८. **एतेन मातरिश्वा व्याख्यातः । – ब्रह्मसूत्रम् २।३।२।८**

९. **सदेव सौम्येदमग्र आसीत् । – छान्दोग्योपनिषद् ६।२।१**

तदित्थं पूर्वपक्षाणां गुरो ! मतमुपागतम् ।
वस्तुतो जायते ब्रह्म तत्त्वतो वा न जायते ? ॥२९॥

गुरुः –
सद्रूपब्रह्मणो जन्म लोके न हि भवेद् यतः ।
ब्रह्मणो हि प्रजायन्ते ब्रह्माण्डानीह सर्वदा ॥३०॥

अस्ति हेतुरुपादानं ब्रह्म सिद्धं सनातनम् ।
आकाशतुल्यमुत्पन्नं कथं भवति तत् पुनः ? ॥३१॥

तर्कोऽयं पूर्वपक्षाणां ब्रह्मणि न प्रयुज्यते ।
नैकेषु वेदवाक्येषु सुस्पष्टा दृश्यते कुरा ॥३२॥

[१०]अजो महान् पिता ब्रह्म सर्वकारणकारणम् ।
कुतर्कः पूर्वपक्षाणां वारणं कुरुते श्रुतिः ॥३३॥

सद्ब्रह्मणः कारणं तु [१२]माऽसद् भवति कर्हिचित् ।
सद्ब्रह्मणः समुत्पत्तिर्नाऽतः सिद्ध्यति वस्तुतः ॥३४॥

अत्र सूत्रं चैकमस्ति नित्यं सद्ब्रह्म वक्त्यपि ।
कुतर्काः पूर्वपक्षाणां खण्ड्यन्ते तत्र वै भृशम् ॥३५॥

---

१०. स कारणं कारणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः ।
– श्वेताश्वतरोपनिषद् ६।९

११. कथमसतः सज्जायेत । – छान्दोग्योपनिषद् ८।७।१

१२. असम्भवस्तु सतोऽनुपपत्तेः । – ब्रह्मसूत्रम् २।३।३।९

## ४. तेजोऽधिकरणम् (ब्रह्मसूत्रम् २।३।४।१० )

शिष्यः –

उत्पद्यते ब्रह्मणः किं तेजो नोत्पद्यतेऽथवा ? ।
सन्देग्धि मानसं ब्रह्मन् ! वायोस्तेजोऽभिजायते ? ॥३६॥

'तत्तेजः' श्रुतिराधारे पूर्वपक्षा वदन्त्यपि ।
सतो हि ब्रह्मणस्तेजः सत्यमेवाऽभिजायते ॥३७॥

तत्तेजो जायते ब्रह्मन् ? वायोर्वा ब्रह्मणः कुतः ?
आज्ञापयतु मामद्य कुतो वायोः समुद्भवः ? ॥३८॥

गुरुः –

[१३]'वायोरग्निः' श्रुतावुक्तो मन्त्रोऽयं दृश्यते स्फुटम् ।
ब्रह्मणस्तेजसो जन्म वाऽग्नेरपि न सम्भवः ॥३९॥

'वायोरग्नि'रिदं वाक्यं 'तत्तेजो' वाक्यमिश्रितम् ।
एकवाक्येऽन्तगतौ तौ तस्माद्वायुर्न कारणम् ॥४०॥

वायुस्वरूपं ब्रह्माऽस्ति ततस्तेजः समुद्भवः ।
एष वैदिकसिद्धान्तो दृश्यते क्रमतः स्फुटम् ॥४१॥

श्रुतौ विरोधो नैवाऽस्ति सिद्धान्तः सैष निश्चयः ।
इत्थं समन्वयो दृष्टः श्रुतेः पूर्वापरक्रमात् ॥४२॥

---

**१३. तस्माद् वा एतस्मादात्मन आकाशः सम्भूतः, आकाशाद् वायुः, वायोरग्निः ।**
**– तैत्तिरीयोपनिषद् २।१।१**

अत्र दृष्टं सूत्रमेकं [14]श्रुतिक्रमसमन्वयात् ।
वायुरूपेणाऽऽत्मना हि वक्ति तेजः समुद्भवः ॥४३॥

## ५. अबधिकरणम् (ब्रह्मसूत्रम् २।३।५।११ )

शिष्यः –

[15]'अग्नेरापः' श्रुतेः सार्धं 'तदपोऽसृजत' श्रुतिम्[16] ।
गृहीत्वा ते वदन्त्यत्र तेजसो जलमुद्भवम् ॥४४॥

तदित्थं सति सन्देहे कुतर्कयन्ति वादिनः ।
नाश्यनाशकयोर्नास्ति कार्यकारणसम्भवम् ॥४५॥

शाम्योऽग्निरस्ति हे विद्वन् ! शामकं जलमस्त्यपि ।
कथं तच्छामकोत्पत्तिः शाम्यादग्नेर्जलं भवेत् ॥४६॥

गुरुः –

पञ्चीकृताग्निसलिले विद्येते शाम्यशामकौ ।
भावौ न दृष्टः शुद्धेऽग्नौ भावोऽयं शाम्यशामकः ॥४७॥

अपञ्चीकृतेऽग्निजले न भावौ शाम्यशामकौ ।
अतीन्द्रिया हि साऽवस्था श्रुतिपाठेन बुध्यते ॥४८॥

अग्निरूपं ब्रह्म भवेज्जलस्याऽपीह कारणम् ।
शाम्यशामकबाधस्तु स्वतो भवति वारणम् ॥४९॥

---

१४. तेजोऽतस्तथा ह्याह । – ब्रह्मसूत्रम् २।३।४।१०
१५. तदपोऽसृजत । – छान्दोग्योपनिषद् ६।२।३
१६. अग्नेरापः । – तैत्तिरीयोपनिषद् २।१।२

अन्ततः स जलोत्पत्तिसिद्धान्तो दृश्यते स्फुटम् ।
जलादिकारणं ब्रह्म वायोरग्नेः परम्परा ॥५०॥

अत्र दृष्टं सूत्रमेकं [17]मतं प्रवदति श्रुतेः[18] ।
अग्निरूपेण संयुक्तं ब्रह्मैवाऽस्तीह कारणम् ॥५१॥

## ६. पृथिव्यधिकाराधिकरणम् (ब्रह्मसूत्रम् २।३।६।१२ )

शिष्यः –
[19]'ता आपः' श्रुतिमन्त्रे हि योऽन्नशब्दः समागतः ।
तस्याऽन्नस्य भवेत् कोऽर्थो ब्रीह्यादिर्वा स्थिरा भवेत् ? ॥५२॥

सन्देग्धि हृदयं मेऽत्र पूर्वपक्षास्तु सत्वरम् ।
ब्रीह्यादयस्तदन्नार्थाः पृथिवीं नैव कुर्वते ॥५३॥

सन्देहेऽत्र वदत्वार्य ! तदन्नार्थोऽस्ति किं कथम् ?
ब्रीह्याादयोऽन्नानि यद्वा तदन्नार्थः स्थिराऽस्ति किम् ? ॥५४॥

गुरुः –
पृथ्वीवाचकमन्नं तद्रसाऽधिकरणाऽऽगतम् ।
महाभूताऽभिधा सृष्टिरद्भ्यः पृथ्वी समुद्भवा ॥५५॥

---

१७. आपः । – ब्रह्मसूत्रम् २।३।५।११
१८. एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥ – मुण्डकोपनिषद् २।१।३
१९. ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त ।
– छान्दोग्योपनिषद् ६।२।४

जलादेवाऽभवत् सृष्टिः पृथिव्याः समुदीरयत् ।
श्रुतिर्वक्ति-पृथिव्यैषा नार्थो ब्रीह्यादयोद्भिदाः[२०] ।।५६।।

अद्भ्योऽर्थो पृथिवी वक्ति श्रुतिरन्याऽपि दृश्यते ।
सुस्पष्टमेतज्जानीहि त्वमन्नार्थो धराऽभवत् ।।५७।

सृष्टिप्रकरणे शब्द आगतोऽद्भ्यः श्रुतेरिह ।
जलात् पृथ्वी समभवादयमर्थः प्रबुध्यते ।।५८।।

अन्नहेतुरियं पृथ्वी साक्षादन्नं न यद्यपि ।
एतस्मात् कारणादन्नं पृथिव्यस्ति ब्रीहिर्न हि ।।५९।।

अस्मिन् प्रकरणे सूत्रमेकमन्नं धरार्थकम्[२१] ।
उद्घोषति श्रुतेरर्थमद्भ्यःपृथ्वीति दर्शनात् ।।६०।।

### ७. तदभिध्यानाधिकरणम् (ब्रह्मसूत्रम् २।३।७।१३ )

शिष्यः –
आकाशमादिकाः सर्वे समुत्पन्नाः स्वतः किमु ?
आकाशरूपमापन्नमासीत ब्रह्मणः किमु ? ।।६१।।

तदित्थं सति सन्देह पूर्वपक्षा भणन्त्यतः ।
आकाशादिभ्य उत्पन्ना भवन्ति क्रमशो हि ते ।।६२।।

अस्मिन् सर्वविधौ नास्ति ब्रह्मण उपयोगिता ।
भणन्ति ते नास्ति किमु वाऽस्ति तस्योपयोगिता ? ६३।।

---

२०. अद्भ्यः पृथिवी 'तद्यदपां शर आसीत्तत्समहन्यत' सा पृथिव्यभवत् ।
– बृहदारण्यकोपनिषद् १।२।२

२१. पृथिव्यधिकाररूपशब्दान्तरेभ्यः । – ब्रह्मसूत्रम् २।३।६।१२

गुरुः –

अन्तर्यामी[२२] ब्रह्म भूत्वाऽऽकाशमन्तःस्थितं कियत् ।
करोति कार्यं व्योमादीन् यन्त्रणं ते वदन्तु यत् ॥६४॥

उपलक्षणमेतत्तु सर्वसृष्टिषु संविशन् ।
नियन्त्रकं भवेद् ब्रह्म यथेच्छं ते वदन्त्वपि ॥६५॥

ब्रह्मणः शक्तिमापन्ना आकाशाद्याः स्वयोग्यताम् ।
दर्शयन्तः सृष्टिकर्तासमा भान्ति जडाचितः ॥६६॥

(श्रुतिर्वक्ति सृष्टिरेषा भवतीक्षणपूर्वकम्[२३] ।
जडो द्रष्टुं न शक्नोति ब्रह्मणोत्पादितं जगत् ॥६७॥

प्राणिनामपि यच्चक्षुः कर्णनासारसादिकाः ।
इन्द्रियाणि जडान्येव कथं कर्माणि कुर्वते ? ॥६८॥

इति चेद ब्रह्मणः शक्त्या पश्यति संशृणोत्यपि ।
जिघ्रति वक्ति चेत्यादि तच्छक्त्या कर्म कुर्वते ॥६९॥

ब्रह्मप्रतिनिधित्वेन कर्माणि कुरुते मनः ।
तत्साधनानीन्द्रियाणि मनस्तानि चकास्त्यपि[२४] ॥७०)

अतः सर्वा सृष्टिरेषा रचना ब्रह्मणः खलु ।
यतो वेमानि भूतानि श्रुतिर्वदति कण्ठतः[२५] ॥७१॥

---

२२. यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष आत्मान्तर्याम्यमृतः । – बृहदारण्यकोपनिषद् ३।७।३
२३. तदैक्षत बहु स्यां प्रजायेय । – छान्दोग्योपनिषद् ६।२।३
२४. यतो वा इमानि भूतानि जायन्ते । – तैत्तिरीयोपनिषद् ३।१।१
२५. तदभिध्यानादेव तु तल्लिङ्गात् । – ब्रह्मसूत्रम् २।३।७।१३

अस्मिन् प्रकरणे सूत्रमेकं वक्तीह कारणम्[२६] ।
सृष्टेः सचतेनं ब्रह्म वादिनां मतवारणम् ॥७२॥

## ८. विपर्ययाधिकरणम् (ब्रह्मसूत्रम् २।३।८।८ )

शिष्यः –
सृष्टेः क्रमात् किमथवा विपरीतक्रमादिदम् ।
सन्देग्धि हृदयं मेऽत्र जगत् प्रलयमेष्यति ? ॥७३॥

पूर्वपक्षा वदन्त्येवं यथा सृष्टिक्रमादिदम् ।
अनुलोमक्रमेणैव जगत् प्रलयमेष्यति ॥७४॥

आज्ञापयत्वत्र गुरो ! भवेत् को वैदिकक्रमः ?
शास्त्रतः श्रृणवान्यत्र भ्रमं नश्यतु मानसम् ॥७५॥

गुरुः –
प्रकृतिं विरचय्याऽत्र पृथ्वीं यावत् समागतम् ।
रचनं कुरुते ब्रह्म जगदेतच्चराऽचरम् ॥७६॥

सृष्टिक्रमेण नैवाऽस्य विपरीतक्रमादितः ।
जगद् ब्रह्म संकुचति प्रयातु मनसो भ्रमः ॥७७॥

श्रुतितः कार्यनाशःस्यात् कारणे लयमेष्यति ।
यतो वेमानि भूतानि जायन्ते यत्प्रयन्त्यपि[२७] ॥७८॥

---

२६. यज्जाग्रतो दूरमुदैति दैवं तदुसुप्तस्यतथैवैति ।
दूरङ्गमं ज्योतिषां ज्योतिस्तन्मे मनः शिवसङ्कल्पमस्तु ॥

२७. यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविसन्ति ।
– तैत्तिरीयोपनिषद् ३।१।१

स्मृतितो दृश्यते सर्वं सोपानक्रमतो जगत्[२८] ।
धराजले जलं त्वग्नौ ज्योतिर्वायौ प्रलीयते ॥७९॥

वायुः प्रलीयते व्योम्नि व्योमाऽव्यक्तो विलीयते ।
विपरीतक्रमश्चैष ब्रह्मैवाऽऽकुञ्चति जगत् ॥८०॥

क्रमादस्माल्लयं याति पृथिव्यादिक्रमादितः ।
जले तेजसि वायौ च व्योम्नि ब्रह्मणि लीयते ॥८१॥

सृष्टिक्रमादस्य नाशो जगतो न भवेद् यतः ।
कार्यकारणसिद्धान्तो विनश्यति तथा कृते ॥८२॥

सृष्टिक्रमाद् भवति चेत् सृष्टिस्थितिलयक्रमः ।
व्यतिक्रमो भवेत् तस्माद् विद्धि क्रमविपर्ययम् ॥८३॥

घटे भग्ने सति यथा मृत्तिकासु विलीयते ।
तथा विलयसिद्धान्तः कार्यं तत् कारणे लयम् ॥८४॥

तादित्थं श्रौतसिद्धान्तं वर्णयित्वा यथाक्रमात् ।
अन्ततः पूर्वपक्षाणां मतमाखण्डितं भृशम् ॥८५॥

अस्मिन् प्रकरणे सूत्रमेकमायाति शास्त्रतः[२९] ।
श्रुत्याऽनुसारं कुरुते सृष्टिप्रलयवर्णनम् ॥८६॥

---

२८. जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते ।
ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते ।
वायुः प्रलीयते व्योम्नि तच्चाव्यक्ते प्रलीयते ॥ – विष्णुपुराणम्

२९. विपर्ययेण तु क्रमोऽत उपपद्यते च । – ब्रह्मसूत्रम् २।३।८।१४

## ९. अन्तराविज्ञानाधिकरणम् (ब्रह्मसूत्रम् २।३।९।१५ )

शिष्यः –

श्रौतसिद्धान्तसम्मान्यः सृष्टिस्थितिलयक्रमः ।
[३०]एतस्माज्जायते वाक्याद् भङ्गो भवति वा न वा ? ।।८७।।

सन्दिग्धं मे मनोऽत्राऽपि परं ते पूर्वपक्षिणः ।
वदन्ति भङ्गो भवति समाधानं किमस्ति भो ! ।।८८।।

आज्ञापयतु मामद्य किं सृष्टेः क्रमभङ्गता ?
एतस्माज्जायते वाक्याद् भवेत् ? स्पष्टं यथार्थतः ।।८९।।

गुरुः –

[३१]वाक्यान्यन्नमयादीनि तेज आपोमयानि च ।
मनोवाक् प्राणरचनात् क्रमभङ्गो भवेन्न हि ।।९०।।

एतस्माज्जायते वाक्यान्मनः प्राणेन्द्रियादयः ।
विरच्यन्ते न भवति क्रमभङ्गः कदाचन ।।९१।।

मनः प्राणादयः सृष्टा भौतिका अपि ते ततः ।
अन्तर्भूता भवन्त्येव क्रमभङ्गं न कुर्वते ।।९२।।

ते मन्त्राः क्रमराहित्यमुत्पत्तेर्वर्णयन्त्यपि ।
मन्त्रेभ्यो न भवेत् तेभ्यः सृष्टेः क्रमविभञ्जनम् ।।९३।।

---

३०. एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ।। – मुण्डकोपनिषद् २।१।३

३१. 'अन्नमयं हि सोम्य मनः, आपोमयः प्राणः, तेजोमयी वाक्' ।

एतस्मात् कारणात् सौम्य ! सृष्टेरस्ति यथाक्रमः ।
चलति श्रौतसिद्धान्तान् न भवेत् तद्व्यतिक्रमः ॥९४॥

अस्मिन् प्रकरणे सूत्रमेकं वक्ति यथाक्रमात्[३२] ।
वेदानुसारं चलति सृष्टिर्नास्ति व्यतिक्रमः ॥९५॥

## १०. चराचरव्यपाश्रयाधिकरणम् (ब्रह्मसूत्रम् २।३।१०।१६ )

शिष्यः –
यौ जन्ममृत्यू भवतो जीवानां किमु वाऽऽत्मनाम् ?
जीवानां किमु देहानां सन्दिग्धं मानसं मम ॥९६॥

जातकर्मादिसंस्कारैर्दृश्यते वादिनां मतम् ।
जीवानामेव भवतो जन्ममृत्यू यथाक्रमम् ॥९७॥

पुत्रो मे जात इत्याद्या लौकिकव्यवहारतः ।
द्वौ जन्ममृत्यू भवतो जीवानां स्पष्टरूपतः ॥९८॥

आज्ञापयतु सुस्पष्टं दृश्यन्ते जन्म मृत्यवः ।
प्रजायते म्रियते त आत्मानः प्राणिनोऽथवा ? ॥९९॥

गुरुः –
जन्ममृत्यू उभौ स्तो हि देहानामेव केवलम् ।
जीवानां मृत्यवो नैव दर्शकाणां भ्रमोऽस्त्यपि ॥१००॥

यदि म्रियेत जीवो हि नाशः स्यात् कृतकर्मणाम् ।
कर्माऽकृतं समागच्छेद् दोषं वदति हि श्रुतिः ॥१०१॥

---

३२. अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् । – ब्रह्मसूत्रम् २।३।९।१५

दृष्टः केवलमध्यास औपचारिकमस्ति सः ।
मृतो देहो न जीवस्तु म्रियते वदति श्रुतिः ॥१०२॥

जीवस्य जन्ममृत्यू च मनुषे चेत् सदोषकौ ।
[३३]कर्माऽकृतं समागच्छेत् नाशः स्यात् कृतकर्मणाम् ॥१०३॥

श्रुतिः प्रबोधते जीवो जायते म्रियते[३४] ।
जायते म्रियते देहो जीवोऽजन्माऽस्ति शाश्वतः ॥१०४॥

संयोगाज्जायते देहो वियोगान् म्रियतेऽपि च ।
जीवो न जातो न मृतो देहो योगवियोगतः ॥१०५॥

[३५]आत्मभावः कृतो जीवः शरीरमभिपद्यते ।
अस्माच्छरीरादुत्क्रामन् जीवोऽन्यत्र प्रधावति ॥१०६॥

दृष्टं जन्माऽनु मरणं यथाऽध्यास इव भ्रमः ।
जीवोऽजन्माऽस्ति नित्योऽस्ति जायते म्रियते न हि ॥१०७॥

[३६]देहोऽयं म्रियतेऽत्रैव जीवे देहात् समुद्गते ।
वृथा भणन्ति ते पूर्वपक्षाः सत्यं तथा न हि ॥१०८॥

अस्मिन् प्रकरणे सूत्रमेकं वक्तीह शास्त्रतः[३७] ।
जीवानां जन्ममृत्यू द्वौ निषेधति हि वस्तुतः ॥१०९॥

---

३३. अकृताभ्यागमः कृतप्रणाशः । – न्यायः

३४. न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् ।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे । – कठोपनिषद् १।२।१८

३५. स वा अयं पुरुषो जायमानः शरीरमभिसम्पद्यमानः स उत्क्रामन् म्रियमाणः ।
– बृहदारण्यकोपनिषद् ४।३।८

३६. जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते । – छान्दोग्योपनिषद् ६।११।३

३७. चराचर व्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ।
– ब्रह्मसूत्रम् ३।३।१०।१६

## ११. आत्माधिकरणम् (ब्रह्मसूत्रम् २।३।११।१७ )

शिष्यः –

पुराकल्पे समारम्भे जीव आयाति व्योमवत् ?
कथमुत्पद्यते जीवः ? सन्दिग्धं हृदयं मम ॥११०॥

पूर्वपक्षा वदन्त्यत्र जीवः किं विस्फुलिङ्गवत्[३८] ?
ब्रह्मणो जीव उत्पन्नः ? कथमायाति भूतले ?

आज्ञापयत्वत्र गुरो ! जीवोत्पत्तिः कथं कुतः ?
ब्रह्मणो जीव उत्पत्तिरभूद् वा नाऽन्यतः कुतः ? ॥११२॥

गुरुः –

न जीवः प्रथमोत्पत्तिर्बुद्धेरुत्पत्त्यनन्तरम् ?
ब्रह्मैव जीवरूपेण बुद्धौ विशति सन्ततम्[३९] ॥११३॥

विस्फुलिङ्गसमो जीवो न जातस्तदुपाधयः ।
अग्नेर्जीवः शाश्वतोऽयं नित्यो जातोऽस्ति मर्त्यभाक्[४०] ॥११४॥

[४१]नित्येषु नित्य आत्माऽस्ति चेतने जीवनं चितिः ।
जीवोत्पत्तिर्न कल्पादौ नित्य आत्मा सनातनः ॥११५॥

---

३८. यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे वेदाः, सर्वाणि भूतानि सर्व एत आत्मानो व्युच्चरन्ति । – बृहदारण्यकोपनिषद् २।१।२०

३९. तत्सृष्ट्वा तदेवानुप्राविशत् । – तैत्तिरीयोपनिषद् २।६।१

४०. अजो नित्यः शाश्वतोऽयं पुराणः । – कठोपनिषद् २।१८

४१. नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् ।
– कठोपनिषद् २।२।१३

तदित्थं पूर्वपक्षाणां मतं भवति खण्डितम् ।
[४२]श्रुतयः कुर्वते नैकाः स्वसिद्धान्तस्य मण्डनम् ॥११६॥

अस्मिन् प्रकरणे सूत्रमेकं वक्तीह तत्त्वतः[४३] ।
जीवस्योत्पत्तिसिद्धान्तं श्रुतिवाक्यान्निषेधति ॥११७॥

## १२. ज्ञाधिकरणम् (ब्रह्मसूत्रम् २।३।१२।१८ )

शिष्यः –
जीवश्चैतन्यरूपो वा यद्वा सोऽयमचेतनः ?
समुत्पन्नः संशयोऽत्र मनो मे संशयाऽऽस्पदम् ॥११८॥

वादिनः प्रवदन्त्यत्र सुषुप्त्यादिस्थितौ गतः ।
दृश्यते चेतनाऽभावो देहः स्वपिति मूढवत् ॥११९॥

स्वप्ने जागरणे जीवश्चेतनावान् भवत्यतः ।
जीवः सचेतनो भाति संयोगान्मनसाऽऽत्मनः ॥१२०॥

तदित्थं पूर्वपक्षाणां मतमायाति दार्ढ्यतः ।
सुषुप्तौ प्रगते नष्टो भवेज् जीवस्य चेतनः ॥१२१॥

भवानाज्ञापयत्वत्र दूरयन् मनसो भ्रमम् ।
जीवोऽयं चेतनः कि वाऽचेतनो मूढतुल्यकः ॥१२२॥

---

४२. क. न जीवो म्रियते । – छान्दोग्योपनिषद् ६।११।३
ख. न जायते म्रियते वा विपश्चित् । – कठोपनिषद् २।१८
ग. स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म ।
– बृहदारण्यकोपनिषद् ४।४।२५
घ. अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि । – छान्दोग्योपनिषद् ६।३।२
४३. नात्मा ऽश्रुतेर्नित्यत्वाच्च ताभ्यः । ब्रह्मसूत्रम् २।३।११।१७

गुरुः –

जीवश्चैतन्यरूपोऽयं तन्मिथ्यावादिनां मतम् ।
[44]ब्रह्मैव जीवरूपेण बुद्धौ विशति चेतनः ॥१२३॥

श्रुतिर्गदति जीवोऽयं सद्ब्रह्म प्रतिबिम्बकः ।
साक्षाद् ब्रह्मैव बिम्बोऽयमभेदो ब्रह्मजीवयोः ॥१२४॥

सुषुप्तौ गाढनिद्रायां देहो विश्रमति परम् ।
साक्षीरूपेण जीवस्तु नित्यं निश्वसति भृशम् ॥१२५॥

लोपो द्वैतप्रपञ्चस्य सुषुप्तौ भवति यदा ।
तदा तस्येन्द्रियादीनि लुप्यन्ति दहरे श्रमात् ॥१२६॥

जीवस्य लोपस्तु तदा सुप्तौ चापि भवेन्न हि ।
श्रुतिरेवं निगदति दृष्ट्वाऽप्येष न पश्यति ॥१२७॥

यथा जागरिते द्रष्टा दृश्यं दर्शनमस्त्यपि ।
सुषुप्तौ तानि लुप्यन्ति न पश्यतीव तद् भ्रमः ॥१२८॥

आत्मनः स्वस्वरूपस्य दृष्टिनाशं भवेन्न हि ।
[45]अविनाशी स आत्माऽस्ति दृष्टिलोपः कदापि न ॥१२९॥

द्रष्टुर्दृष्टेर्नलोपोऽस्ति कदाचिन्न भविष्यति ।
द्रष्टा साक्षी स्वरूपोऽस्ति स तु पश्यति सर्वदा ॥१३०॥

---

४४. तत्सृष्ट्वा तदेवानुप्राविशत् । – तैत्तिरीयोपनिषद् २।६।१

४५. यद्वैतन्न पश्यति पश्यन् वै तन्न पश्यति नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्नतु तद् द्वितीयमस्ति ततोऽन्यद् विभक्तं यत् पश्येत ।
– बृहदारण्यकोपनिषद् ४।३।२३

[46]ज्योतिःस्वरूपो जीवोऽयमस्योत्पत्तिः क्वचिन्न हि ।
आत्मस्वरूपो नित्योऽस्ति स नोत्पाद्यः सदा सनत् ॥१३१॥

विकारहीनं सद्ब्रह्म सर्वत्रोपाधिना सह ।
सम्मेल्य दृश्यते जीवभावेनाऽऽत्मा सनातनः ॥१३२॥

[47]ब्रह्माऽऽनन्दं तदद्वैत स्वयं ज्योतिः परात्परम् ।
सुप्तभावोऽपि सम्पूर्णस्तेनाऽसुप्तेन दृश्यते ॥१३३॥

अभेदं वर्णयित्वैव जीवाऽऽत्मपरमात्मनोः ।
[48]शंसनं तदभेदस्य नैकाभिः श्रुतिभिः कृतम् ॥१३४॥

चिद्ब्रह्माऽस्ति सदाऽऽनन्दं जीवस्तद्रूपमस्त्यहो !
एतस्मात् कारणाज्जीवश्चैतन्यो नित्यरूपकः ॥१३५॥

देहोऽनित्यस्तदन्तःस्थो नित्यो जीवो सनातनः ।
चैतन्यरूपो जीवोऽयं खण्डितं वादिनां मतम् ॥१३६॥

अस्मिन् प्रकरणे सूत्रेणैकेन प्रतिपाद्यते[49] ।
चैतन्यरूपो जीवोऽयं स्वयञ्ज्योतिः स्वरूपकः ॥१३७॥

## १३. उत्क्रान्ति गत्यधिकरणम् (ब्रह्मसूत्रम् २।३।१३।१९–३२ )

शिष्यः –
जीवोऽणुर्वा विभुः ? सर्वव्यापकः सूक्ष्मरूपकः ?
सन्देग्धि हृदयं मेऽत्र जीवोऽणुर्वा विभुर्बृहत् ? ॥१३८॥

---

४६. अत्रायं पुरुषः स्वयंज्योतिर्भवति । – बृहदारण्यकोपनिषद् ४।३।९
४७. असुप्तः सुप्तानभिचाकशीति । – बृहदारण्यकोपनिषद् ४।३।११
४८. क. सत्यं ज्ञानमनन्तं ब्रह्म । – तैत्तिरीयोपनिषद् २।१।१
ख. अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव । – बृहदारण्यकोपनिषद् ४।५।१३
४९. ज्ञोऽत एव । – ब्रह्मसूत्रम् ३।३।१२।१८

अत्रैव पूर्वपक्षास्तु सूत्राण्याऽऽकृष्य कानिचित् ?
[50]जीवाऽऽत्माऽणुर्वदन्त्येव किमणुर्वा बृहद् गुरो ? ॥१३९॥

लोकं विहाय जीवाऽऽत्मा देहादुत्क्रमते यदा[51] ।
तदा सर्वाणीन्द्रियाणि तेन यान्ति सहैव किम् ? ॥१४०॥

शरीरादुद्गतो जीवश्चन्द्र लोकं प्रयात्यहो[52] ।
निवर्त्य चन्द्रलोकात्स जीवात्माऽऽवतरत्यपि[53] ॥१४१॥

अणुरस्ति सजीवात्मा पञ्चैते प्राणवायवः ।
अनुस्यूता भवन्त्यत्र बोधते मुण्डकश्रुतिः[54] ॥१४२॥

कुशाग्रशतभागस्य शतधाकल्पितस्य च ।
जीवभागोऽणुवज् ज्ञेयः श्वेताश्वो भाषते श्रुतिः[55] ॥१४३॥

अमीभिः श्रुतिभिः सार्थं प्रमाणैस्तर्कणैरपि ।
गमाऽऽगमाभ्यामपि च जीवाऽऽत्माऽणुर्विबुध्यते ॥१४४॥

तदित्थं पूर्वपक्षास्ते सप्रमाणं भणन्त्यहो !
जीवोऽणुरणुतुल्योस्ति न विभुर्व्यापको न च ॥१४५॥

---

५०. एषोऽणुरात्मा चेतसा वेदितव्यः । – मुण्डकोपनिषद् ३।१।९
५१. यो वै के चास्माल्लोकान् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति ।
– कौषीतकिब्राह्मणोपनिषद् १।२
५२. स यदास्मच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामति । – कौषीतकिब्राह्मण ३।३
५३. तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणे । – बृहदारण्यकोपनिषद् ४।४।६
५४. एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन्प्राणः पञ्चधा संविवेश ।
– मुण्डकोपनिषद् ३।१९
५५. बालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः ।
– श्वेताश्वतरोपनिषद् ५।८

श्रुतिर्गदति जीवात्मा विभुर्वाऽणुः किमस्त्यहो ?
विषयेऽस्मिन् प्रवदतु जीवोऽणुर्वा विभुः किमु ? ॥१४६॥

गुरुः –

जीवाऽऽत्माऽस्ति विभुर्नित्यः सोऽजन्मा व्यापको महान् ।
सर्वेषामन्तराऽऽत्माऽस्ति सर्वव्यापी परात्परः ॥१४७॥

वादिभिः सप्रमाणं तैर्जीवोऽणुः कथ्यते मुहुः ।
दृश्यते बुद्धिसंयोगाद् जीवोऽप्यणुसमो महान् ॥१४८॥

चैतन्यप्रतिबिम्बोऽयं यदा बुद्धौ प्रभासते ।
बुध्युपाधिः सजीवोऽपि ह्यणुवद् भात्यहो ! मुहुः ॥१४९॥

तेनैवोपाधिना जीवः कुरुते च गमागमौ ।
उपाधिज्ञानदग्धे तु जीवाऽऽत्मा कथ्यते विभुः ॥१५०॥

[५७]विज्ञानमय आत्माऽस्ति बुद्धिमन्तःस्थितः सदा ।
बुद्धितुल्यः स आत्माऽपि लोकद्वयं प्रगच्छति ॥१५१॥

हृद्यन्तर्ध्यायतीवाऽऽत्मा बुध्या सहचरत्यपि ।
आत्मोपाधिवशादेव सोऽणुवद् भाति सर्वदा ॥१५२॥

[५८]सषुप्तौ प्रगतो जीवः सद्वाच्यैरपि दैवतैः ।
एकाकारो मिलत्येव साक्षिणाऽपीश्वरेण सः ॥१५३॥

---

५६. स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु ।
५७. योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव । – बृहदारण्यकोपनिषद् ४।३।७
५८. सता सौम्य तदा सम्पन्नो भवति स्वमपीतो भवति । – छान्दोग्योपनिषद् ६।८।१

पूर्वपक्षसमाः काश्चिच्छ्रुतयः प्रवदन्त्यपि ।
भविष्यद्वृत्तियुक्तास्ता आगताः किमु मन्महे ॥१५४॥

स्थूणानिखननन्यायद्वारा ते पूर्वपक्षिणः ।
सिद्धान्तं द्रढयन्त्येवं तदेतन्मन्महे वयम् ॥१५५॥

जीवोपाधिवशं गत्वाऽणुसमोऽपि विभात्यहो ।
[५९]जीवो ब्रह्माऽस्ति ब्रह्मैव विद्यते भाति सर्वतः ॥१५६॥

ब्रह्मैवाऽऽसीत् सजीवोऽपि पुरा ब्रह्मैव विद्यते ।
तेषां जीवाणुवादोऽपि वादिनामिह खण्डितः ॥१५७॥

[६०]चतुर्दशैव सूत्राणि सन्ति प्रकरणेऽत्र तु ।
विभुर्ब्रह्माऽस्ति सर्वात्मा जीवः सर्वेश्वरो महान् ॥१५८॥

## १४. कर्त्रधिकरणम् (ब्रह्मसूत्रम् २।३।१४।३३–३९ )

शिष्यः –
जीवः कर्ताऽस्ति ? यद्वा नो बुद्धिः कर्ता किमस्ति ? भो !।
सन्देहोऽत्र समापन्नो मनो जिज्ञासते पुनः ॥१५९॥

साङ्ख्या वदन्त्यत्र कर्ता बुद्धिरेव सुनिश्चिता ।
असङ्ग आत्मा जीवोऽस्ति कर्ता नास्तीति निश्चयः ॥१६०॥

बुद्धिः परिणमत्यत्र कर्ताबुद्धिर्भवत्यहो !
जीवोऽकर्ताऽस्ति कर्ता न कथं कर्ता भवत्यहो ? ॥१६१॥

---

५९. न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति । – बृहदारण्यकोपनिषद् ४।४।६
६०. उत्क्रान्तिगत्यागतीनाम् । – ब्रह्मसूत्रम् २।३।१३।१९–३२
६१. एष हि द्रष्टा श्रोता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः । – प्रश्नोपनिषद् ५।९
६२. स ईयतेऽमृतो यत्र कामम् । – बृहदारण्यकोपनिषद् ४।३।१२

अनिश्चितं मतं तेषामागतं साङ्ख्यवादिनाम् ।
किं स्याद् वदत्वत्र भवान् कर्ता कोऽस्ति सुनिश्चितः ॥१६२॥

गुरुः –
कर्ता बुद्धिर्न भवति जीवः कर्ताऽस्ति निश्चितः ।
कर्ता सचेतनो जीवो जडा बुद्धिः कथं भवेत् ? ॥१६३॥

केवलं कारणं बुद्धिः कर्तुर्जीवस्य साधनम् ।
साधनात्मिकया बुद्ध्या जीवः कार्यं समापयेत् ॥१६४॥

यजेत जुहुयाद् दद्याद् विधिवाक्यानि यान्यपि ।
विधानं विधिशास्त्राणि जीवार्थं विहितान्यहो ! ॥१६५॥

द्रष्टा श्रोता च मन्ता स बोद्धा जीवे हि कर्तरि[६१] ।
वेदस्य वेदं पठति शास्त्रं सार्थकमाप्नुयात् ॥१६६॥

यदि कर्ता भवेज्जीवः सैष स्वप्नं च पश्यति ।
यदि कर्ता न चलति बुद्धिश्चरति सा कथम् ? ॥१६७॥

कर्ता भवति जीवोऽय स्वेष्टं कामं प्रपूर्यते[६२] ।
उपदेशं विहारं च बुद्ध्या सह करोत्यपि ॥१६८॥

कर्ता बुद्धिं मन्यसे चेत् भवेत् तत्तु विपर्ययः ।
कर्तन्यां भस्त्रिकायां वा कर्तृत्वं सम्भवेत् कथम् ? ॥१६९॥

वेदो द्रष्टव्य इत्युक्तिः[६३] स्वतो जीवात्मने भवेत् ।
[६४]ओमित्येवं ध्यायथाऽपि जीवान् प्रेरयति श्रुतिः ॥१७०॥

---

**६३. आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ।**
**– बृहदारण्यकोपनिषद् ३।४।४**

**६४. ओमित्येवं ध्यायथ आत्मानम् । – मुण्डकोपनिषद् २।२।६**

विज्ञानशब्दवाच्योऽस्ति जीवात्मा यजतीत्यपि ।
कर्माणि कुरुते सैष श्रुतिर्घोषति तैत्तिरी[६५] ॥१७१॥

प्रवृत्तिश्च निवृत्तिश्च जीवार्थं हि निदर्शिते ।
इत्याद्याः श्रुतिनिर्देशा बुद्धेरर्थमसम्भवाः ॥१७२॥

लोके कृष्यादिकर्माऽपि कर्तुरेवाऽस्ति सम्भवम् ।
जडबुद्ध्याऽसम्भवोऽस्ति कर्ता भवति चेतनः ॥१७३॥

बुद्धिं कर्ता मन्यसे चेत् त्वं हास्याऽऽस्पदमाप्नुयाः ।
साङ्ख्यानां जडसिद्धान्तं खण्डनं कुरुते श्रुतिः ॥१७४॥

अस्मिन् प्रकरणे सूत्रसप्तकं समुपागतम्[६६] ।
सर्वैरेकमुखैः प्रोच्य बुद्धिः कर्त्रीति खण्डिता ॥१७५॥

## १५. तक्षाधिकरणम् (ब्रह्मसूत्रम् २।३।१५।४० )

शिष्यः –
पूर्वाधिकरणं वक्ति कर्तृत्वगुण आत्मनि ।
अस्ति वा नास्ति मनसि सन्देहः पुनरागतः ॥१७६॥

कर्तृत्वमस्ति किं सत्यं यद्वा तत् कल्पितं भवेत् ? ।
पूर्वपक्षा वदन्त्यत्र कर्तृत्वं सत्यमस्त्यहो ! ॥१७७॥

कर्तृत्वं वाऽप्यकर्तृत्वं किमात्मनि वितिष्ठति ?
किं ते द्वे कल्पिते यद्वा सत्यं जिज्ञासते मनः ॥१७८॥

---

६५. विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च । – तैत्तिरीयोपनिषद् २।५।१
६६. कर्ता शास्त्रार्थवत्वात् । – ब्रह्मसूत्रम् २।३।१४।३३–३९

गुरुः –

यथा स्वकरणं शिल्पी हस्त आदाय तक्षति ।
तत्कार्यकरणे कर्ताऽकर्ता स्यात् करणं विना ॥१७९॥

[६७]तथा भोक्ता भवत्याऽऽत्मा गृहीतेन्द्रिय बुद्धिमान् ।
तथाऽध्यासवशात् कर्ता भुनक्त्याऽऽत्माऽखिलं जगत् ॥१८०॥

[६८]अकर्ताऽस्ति स्वभावेन चिद्घनोऽयं सनातनः ।
असङ्गोऽस्तीह जीवात्मा कर्तृत्वाऽऽरोपितं किमु ? ॥१८१॥

विवेकिभ्यो जनेभ्यस्तु कर्ता भोक्ता न दृश्यते ।
ते तु पश्यन्ति सर्वत्राऽद्वैतमात्मानमेव हि[६९] ॥१८२॥

[७०]द्वितीयमपरं यत्र दृश्यते द्वैतदृष्टिभिः ।
[७१]आत्मैवाऽस्ति यत्र तत्र कुत्र किं कः प्रपश्यति ॥१८३॥

कर्तृत्वं चाऽपि भोक्तृत्वमात्मनि नैव तिष्ठतः ।
एतान्यविद्याजन्यानि कर्माणि कल्पितानि हि ॥१८४॥

करणादीन्यपेक्षत्वे ह्यात्मा कर्ता भवत्यपि ।
तेषामपेक्षामकृते ह्यकर्ताऽऽत्मा परात्परः ॥१८५॥

जपाकुसुमसम्पर्कात् स्फटिको रज्यते यथा ।
कार्येषु ममता बुद्ध्या कर्तृत्वं कर्तरि स्थितम् ॥१८६॥

---

६७. आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः । – कठोपनिषद् ३।४
६८. असङ्गो ह्ययं पुरुषः । – श्रुतिः
६९. नान्योऽतोऽस्ति द्रष्टा । – बृहदारण्यकोपनिषद् ४।२।२३
७०. यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति । – बृहदारण्यकोपनिषद् २।४।१४
७१. यत्र त्वस्य सर्वमात्मैवाभूत्तत् केन कं पश्येत् । – बृहदारण्यकोपनिषद् ४।३।२१

अतोऽन्तःकरणैर्युक्तो जीवः कर्तेव दृशयते ।
करणैरिन्द्रियैर्मुक्तो जीव आत्मा निरञ्जनः ॥१८७॥

अस्मिन् प्रकरणे सूत्रमेकं ब्रूते यथार्थकम्[७२] ।
अकर्ता भाति जीवोऽयं यथा शिल्पी स्वकर्मकृत् ॥१८८॥

## १६. परायत्ताधिकरणम् (ब्रह्मसूत्रम् २।३।१६।४१–४२ )

शिष्यः –
जीवः प्रवृत्तः संसारे रागेण किमु वाऽन्यथा ।
ईशप्रेरणया जीवः संसारे संसरत्यहो ! ॥१८९॥

ईशः प्रवर्तकश्चेत् तं वैषम्यो दोष आप्यते ।
किमीशः पक्षपातीति तं शङ्कन्ते जना इह ॥१९०॥

आज्ञापयत्वत्र गुरो ! को जीवस्य प्रवर्तकः ?
रागद्वेषादयो यद्वा किमीशः स्यात् प्रवर्तकः ॥१९१॥

गुरुः –
लोके विषमतां दृष्ट्वा दोषो न लगतीश्वरम् ।
धान्यादिसस्यसम्पत्सु यथा वृष्टिर्निमित्तकम् ॥१९२॥

जीवानां पूर्वपुण्यानां पापानां वा फलादिह ।
भोगान् भुञ्जन्ति जीवास्ते निमित्तो भवतीश्वरः ॥१९३॥

[७३]शुभं पुण्यान्मिलत्यत्र पापाद् दुःखं मिलत्यहो !
श्रुतिरेवं वदत्यत्र निमित्तं भवतीश्वरः ॥१९४॥

---

७२. यथा च तक्षोभयथा । – ब्रह्मसूत्रम् २।३।१५।४०
७३. पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन । –बृहदारण्यकोपनिषद् ३।२।१३

[७४]वैषम्यदोषो नाऽऽयाति निमित्तं भवतीश्वरः ।
ददातीशः फलं तेभ्यो यथा कर्मानुसारतः ॥१९५॥

[७५]रम्यं फलं लभ्यतेऽत्र साधु कर्म कृते सति ।
शुभं कर्म कारयति यदीश उन्निनीषते ॥१९६॥

[७६]अशुभं तं कारयति यमधश्चेन्निनीषते ।
[७७]अन्तर्भूत्वा निर्दिशति जीवं भ्रामयतीश्वरः ॥१९७॥

[७८]कर्मभ्यो विहितेभ्यस्तु जनः स्वर्गमवाप्नुयात् ।
[७९]कृते निषिद्धकर्माणि जनो नरकमाप्नुयात् ॥१९८॥

श्रुतयः स्मृतयोऽप्यत्र ब्रुवते वीक्षकेश्वरः ।
तटस्थोऽपीश्वरस्तेभ्यः फलं राति शुभाऽशुभम् ॥१९९॥

[८०]विहिते कर्मणि शुभ सद्योन्यां हि प्रजायते ।
जीवः शुभो ब्राह्मणो वा क्षत्रो वैश्योऽभिजायते ॥२००॥

---

७४. वैषम्यनैर्घृण्ये न सापेक्षत्वात् । – ब्रह्मसूत्रम् १।४।१७
७५. एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते ।
– कौषीतकिब्राह्मणोपनिषद् ३।८
७६. एष ह्येवासाधु कर्म कारयति तं यमधो निनीषते । – कौषीतकिब्राह्मणोपनिषद् ३।८
७७. क. य आत्मनितिष्ठन्नानन्तरो यमयति । – बृहदारण्यकोपनिषद् ३।२।१३
ख. ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥ – गीता १८।६१
७८. स्वर्गकामो यजेत । – श्रुतिः
७९. ब्राह्मणो नहन्तव्य । – श्रुतिः
८०. तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा । – छान्दोग्योपनिषद् ५।१०।७

निषिद्धे कर्मणि कृते योनिमापद्यतेऽशुभाम्[८१] ।
जीवः श्वा सूकरो यद्वा चाण्डालो गर्दभो भवेत् ॥२०१॥

जीवोऽच्छं कुरुते यद्वा नैर्घृण्यं कर्म तत्फलम् ।
सुखं प्राप्नोति वा दुःखं दोषो न लगतीश्वरे ॥२०२॥

प्रवर्तको नेश्वरोऽस्ति रागो द्वेषोऽपि वा भवेत् ।
प्रवर्तकत्वे नो हानिर्वाऽऽपदो नेश्वरस्य वै ॥२०३॥

अन्तर्भूत्वा नियन्ता स्याद्रागद्वेषादिनामपि ।
प्रवर्तको नियन्ता च सर्वकार्यकृदीश्वरः ॥२०४॥

ईश्वरः सर्वमान्योऽस्ति जीवानां च प्रवर्तकः ।
नान्येष्वस्तीह सामर्थ्यं सर्वकारः सदेश्वरः ॥२०५॥

अतो हि पूर्वपक्षाणां रागद्वेषौ प्रवर्तकौ ।
भवेतामिति सिद्धान्तः खण्डितो न प्रवर्तकौ ॥२०६॥

अस्मिन् प्रकरणे सूत्रद्वयं प्राप्तं प्रवक्ति च[८२] ।
एकस्वरेण जीवानामीशः कर्मफलप्रदः ॥२०७॥

## १७. अंशाधिकरणम् (ब्रह्मसूत्रम् २।३।१७।४३–५३ )

शिष्यः –
साङ्कर्यमस्ति किं जीवेश्वरमध्ये परस्परम् ।
श्रुतिद्वारा किमथवा व्यवस्थाऽस्त्येतयोर्द्वयोः ॥२०८॥

---

८१. अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरञ्श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा । – छान्दोग्योपनिषद् ५।१०।७

८२. परात्तु तच्छ्रुतेः । – ब्रह्मसूत्रम् २।३।१७

तदित्थं सति सन्देहे श्रुतिस्मृतिप्रमाणतः[८३] ।
ते जीवेश्वरसाङ्कर्यं कुर्वते प्रतिपादनम् ॥२०९॥

भवानाज्ञापयत्वत्र ब्रह्मन् ! साङ्कर्यमस्ति किम् ?
जीवेशयोः श्रुतिद्वारा व्यवस्था किमु वा भवेत् ? ॥२१०॥

गुरुः –
जीवेशयोर्द्वयोर्मध्ये साङ्कर्यं नास्ति तत्त्वतः ।
वेदप्रमाणैरेतत् तु खण्डितं भवति स्वतः ॥२११॥

व्यवहारे तु जीवस्याऽभासो भवति चांशतः ।
परमार्थे तयोर्नस्यादंशांशित्वं कदाचन ॥२१२॥

जीवोऽनंशोऽपि नित्योऽस्ति ह्यनंशप्रतिपादकम् ।
श्रुतयो ब्रुवते यान्ति ब्रह्माऽद्वैतप्रभेदकम् ॥२१३॥

अंशाशी सम्भवेतां चेदंशी दुःखं निभालयेत् ।
अंशस्याऽतो विभेदो न विद्यते चोभयोरिह ॥२१४॥

---

८३. क. अभयं वै जनक प्राप्तोऽसि । – बृहदारण्यकोपनिषद् ४।२।४
ख. आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यः । – बृहदारण्यकोपनिषद् २।४।५
ग. सोऽन्वेष्टव्यः स विजिज्ञासितव्यः । – छान्दोग्योपनिषद् ८।७।१
घ. त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी ।
त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः ॥
– श्वेताश्वतरोपनिषद् ४।३
ङ. एतावानस्य महिमा ततो ज्यायांश्च पुरुषः ।
पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि ॥ – छान्दोग्योपनिषद् ३।१२।६
च. ममैवांशो जीव लोके जीव भूतः सनातनः । – गीता १५।७
छ. ब्रह्म दाशा ब्रह्म दासा ब्रह्मैवेमे कितवाः । – श्रुतिः

बुद्ध्युपाधिं गृहीत्वैव सुखं दुःखं भुनक्त्यपि ।
जीवस्तत् साक्षिरूपेणेश्वरः पश्यति दूरतः ॥२१५॥

आभासः प्रतिबिम्बोऽस्ति बिम्बो जीवेश्वरस्य च ।
अत एव न साङ्कर्यमस्ति जीवेशयोरिह ॥२१६॥

स्वकर्मणां फलं भुक्त्वा जीवो व्यामोहयत्यपि ।
[८४]साक्षीरूपेण तद् दृष्ट्वा सैष पश्यत्यदूरतः ॥२१७॥

'अंशी ब्रह्माऽस्ति जीवोंऽश' इति भावेन ब्रह्मणि[८५] ।
सदाऽज्ञानी द्वैतवादी पश्यत्येव न बोधते ॥२१८॥

ईशस्त्वविद्याधीशोऽस्ति जीवोऽविद्यापराजितः ।
ईश्वरो बिम्बरूपोऽस्ति जीवस्तत् प्रतिबिम्बकः ॥२१९॥

ईश्वरादतिरिक्तो न द्रष्टा कुत्रापि विद्यते[८६] ।
द्रष्टुर्दृष्टेर्न लोपोऽस्ति जगत्यस्मिन् चराचरे ॥२२०॥

सूर्योऽस्ति बिम्बस्थानीयः स जले प्रतिबिम्बति ।
प्रतिबिम्बश्चलत्यत्र तथेशः सूर्यबिम्बवत् ॥२२१॥

यथा जले सूर्यबिम्बो नैकत्र प्रतिबिम्बति ।
साक्षीरूपेण बुद्धौ स जीवोऽयं प्रतिबिम्बति ॥२२२॥

---

८४. द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति । – श्वेताश्वतरोपनिषद् ४।६
८५. मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति । – बृहदारण्यकोपनिषद् ४।४।१९
८६. नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता । – बृहदारण्यकोपनिषद् ३।७।२३

(रामो रामं च रामेण तथा रामाय तत्परम् ।
रामाद् रामस्य रामे हे राम ! चाष्टविघोऽस्ति किम् ? ॥२२३॥

विभक्तिषु विभक्तेऽस्मिन् रामे सगुणता भवेत् ।
सोऽहं ब्रह्म तत्त्वमसि वाऽयमात्माऽस्ति निर्गुणे ॥२२४॥

विभक्त्युपाधौ पुरुषे यथैकस्मिन्ननेकता ।
व्यवहारे स नैकोऽस्ति स एकः पारमार्थिके ॥२२५॥

तत् तेन तस्मै तत् तस्मात् तस्य तस्मिन् विभाजिते ।
एकोऽपि बहुधा भाति पितृजामातृमातुलः ॥२२६॥

पिता पितृव्यो नप्ता च श्वशुरः स पितामहः ।
सैष पुत्रो भागिनेयो भ्राता जामातृ मातुलः ॥२२७॥

एको विष्णुर्व्यापकोऽस्ति नैके जीवात्मनि स्थिते ।
सूर्यबिम्बो यथा भाति नैकस्थालीजले बहु ॥२२८॥

चर्माऽऽवृतपदस्याऽत्र यथा चर्माऽऽवृताऽस्ति भूः ।
ब्रह्माऽऽवृतं मनो यस्य तस्य ब्रह्माऽऽवृतं जगत् ॥२२९॥

धर्माऽऽवृतं मनो यस्य तस्य धर्माऽऽवृतं जगत् ।
ब्रह्माऽऽवृतं मनो यस्य सर्वं ब्रह्माऽऽवृतं यथा ॥२३०॥

[८७]ब्रह्म देहं रचयति तदन्तःस्थां विराजते[८८] ।
ब्रह्मैव जीवरूपेण जगत्यस्मिन् विवर्तते[८९] ॥२३१॥

---

८७. तत्सृष्ट्वा तदेवानुप्राविशत् । – तैत्तिरीयोपनिषद् २।६।१
८८. स एष इह प्रविष्टः । – बृहदारण्यकोपनिषद् १।४।७
८९. उपादानविषमसत्ताकत्वं विवर्तत्वम् ।
अतत्त्वोऽन्यथाप्रथा विवर्त इत्युदीरितः ॥ – पञ्चदशी

रूपं रूपमिवाऽऽगत्य प्रतिरूपेण भासते[९०] ।
[९१]मायया सह संगत्याऽसंख्यरूपं विभाति यत् ॥२३२॥

आभासः प्रतिबिम्बोऽस्ति जीवस्तस्येश्वरस्य हि ।
न जीवेश्वरसाङ्कर्यं बिम्बरूपोविभाति सः ॥२३३॥

अत्रैकादशसूत्राणि समायातानि खण्डने[९२] ।
अशांशिभार्व साङ्कयं पूर्णतः खण्डयन्त्यपि ॥२३४॥

ब्रह्मसूत्रे कारिकायां द्वितीयाध्यायवर्णितः ।
पादस्तृतीयोऽप्यत्रैव समनूद्य समापितः ॥२३५॥

॥ इति ब्रह्मसूत्रकारिकायां द्वितीयाध्याये तृतीयः पादः ॥

---

९०. रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय । – बृहदारण्यकोपनिषद् २।५।१९
९१. इन्द्रो मायाभिः पुरुरूप ईयते । – बृहदारण्यकोपनिषद् २।५।१९
९२. अंशो नानाव्यपदेशादन्यथा चापि दाशकितववादित्वमभिधीयत एके ।
– ब्रह्मसूत्रम् २।३।१७।४३–५३

**ॐ तत्सद् ब्रह्मणे नमः ।**

**अथ ब्रह्मसूत्रकारिकायां**

# द्वितीयाध्याये चतुर्थः पादः

(अस्मिन् पादे प्राणोत्पत्तितः संज्ञामूर्तिक्लृप्तिसहितानि नवाऽधिकरणानि सन्ति । अत्र लिङ्गशरीरसम्बन्धे श्रुतौ दृष्टस्य विरोधस्य परिहारो विहितः ।)

## १. प्राणोत्पत्त्यधिकरणम् (ब्रह्मसूत्रम् २।४।१।१–४)

शिष्यः –

गुरो ! यानीन्द्रियाणि स्युस्तान्यनादीनि वा न वा ?
तानि सादीनि चेदात्मसिर्जितानि न वाऽन्यथा ॥१॥

पूर्वपक्षा वदन्त्यत्र प्रमाणैः श्रुतिदर्शितैः[1] ।
इन्द्रियाणि तु सर्वाणि स्युरनादीनि सर्वतः ॥२॥

परात्मना हि सृष्टानि ब्रुवते श्रुतयो हि याः ।
गौणयः श्रुतयस्ता तु ह्यनादीनीन्द्रियाणि वै ॥३॥

तदित्थं पूर्वपक्षाणां श्रुतिप्रमाणसंयुतम् ।
आगतं यन्मतं ब्रह्मन् ! आनीतस्तेन संशयः ॥४॥

तन्मतं नोपयुक्तं चेत् प्रत्याख्यातु भवानिह ।
आज्ञापयतु सिद्धान्तं श्रोतुमिच्छति मे मनः ॥५॥

---

**१. असद् वा इदमग्र आसीत् । तदाहुः किं तदसदासीदित्यृषयो वाव ते ऽग्रेऽसदासीत्, तदाहुः के ते ऋषय इति, प्राणा वाव ऋषयः । – तैत्तिरीयोपनिषद् २।७।१**

गुरुः –

प्रमाणं पूर्वपक्षाणां श्रूयते यदि तानि तु ।
पूर्वं हि जगदुत्पत्तेरासन् किमिव भात्यहो ! ॥६॥

पूर्वोत्पत्तिमिन्द्रियाणां तत्त्वतो यदि मन्यते ।
सर्वविज्ञातृभाषा या[२]श्रुतेः सा खण्डिता भवेत् ॥७॥

अस्योपक्रमसन्दर्भे समायाताऽस्ति या श्रुतिः[३] ।
अन्याश्च श्रुतयोऽप्यस्य भावमेकं ब्रुवन्त्यहो[४] ! ॥८॥

तदित्थं श्रुतिवाक्यानां प्रमाणं यदि चिन्तयेः ।
त्वं शक्नोषीन्द्रियाणां च परमात्माऽऽदिकारणम् ॥९॥

सृष्टिपूर्वं चेन्द्रियाणि ह्यासन्नित्यर्थका श्रुतिः ।
तदवान्तरसृष्टेः स्याद् वार्ता गौणेति बुध्यते ॥१०॥

वक्तुं न शक्यतेऽनाद्या इन्द्रियार्थाः समेऽप्यहो !
श्रुतिप्रमाणैर्दृष्टं हि तेषामात्माऽस्ति कारणम् ॥११॥

---

२. कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति । – मुण्डकोपनिषद् १।१।३

३. क. एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च, इति, सप्त प्राणाः प्रभवन्ति तस्मात् । – मुण्डकोपनिषद् २।१।३,८
ख. यथाग्नेर्ज्वलतः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येव मे वैतस्मादात्मनः सर्वे प्राणाः ।
ग. स प्राणमसृजत प्राणाच्छ्रद्धां एवं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नम् ।
– प्रश्नोपनिषद् ६।४

४. क. एतस्मात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवास्सर्वाणि भूतानि व्युच्चरन्ति ।
– बृहदारण्यकोपनिषद् २।१।२०
ख. एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खंवायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥ – मुण्डकोपनिषद् २।१।३

अस्मिन् प्रकरणे दृष्टं सूत्राणां हि चतुष्टयम्[५] ।
ज्ञानकर्मेन्द्रियादीनां हेतुरात्मेति बुद्ध्यते ॥१२॥

## २. सप्तगत्यधिकरणम् (ब्रह्मसूत्रम् २।४।२।५–६)

शिष्यः –
संख्या कतीन्द्रियाणां स्यात् ?[६] सप्ताऽष्टौ[७] नव[८] वा दश[९] ।
एकादश[१०] द्वादश वा किं वा संख्या त्रयोदश ?[११] ॥१३॥

तदित्थं श्रुतिमन्त्रैस्तु विरुद्धाऽस्ति परस्परम् ।
संख्या प्रोक्ता पूर्वपक्षा ब्रुवते सप्तसंख्यका[१२] ॥१४॥

मानसं मेऽतिसन्दिग्धं बोद्धुं कठिनमस्त्यहो !
आज्ञापयत्वेतदत्रेन्द्रियसङ्ख्या गुरो ! कति ? ॥१५॥

गुरुः –
इन्द्रियाणां हि संख्या तु नैका दृष्टा विकल्पतः ।
एतेषु मुख्यसंख्या तु ह्येकादश प्रकीर्तिताः[१३] ॥१६॥

ज्ञानेन्द्रियाणि पञ्चैव पञ्च कर्मेन्द्रियाण्यपि ।
मनोऽन्तःकरणं मुख्यं तेन चैकादश स्मृताः ॥१७॥

---

५. तथा प्राणाः । – ब्रह्मसूत्रम् २।४।१।१–४
६. सप्त प्राणाः भवन्ति तस्मात् । – मुण्डकोपनिषद् २।१।८
७. अष्टौ ग्रहा अष्टावतिग्रहाः । – बृहदारण्यकोपनिषद् ३।२।१
८. नव वै पुरुषे प्राणा नाभिर्दशमी । – तैत्तिरीयसंहिता ५।१।१
९. क. दशमे पुरुषे प्राणाः । – बृहदारण्यकोपनिषद् ३।९।४
ख. सर्वेषां स्पर्शानां त्वगेकायनम् । – बृहदारण्यकोपनिषद् २।४।११
१०. आत्मैकादशः । – बृहदारण्यकोपनिषद् २।९।४
११. त्रयोदश चक्षुश्च द्रष्टव्यञ्च । – प्रश्नोपनिषद् ४।८
१२. सप्त वै शीर्षण्याः प्राणाः । – बृहदारण्यकोपनिषद् ३।९।४
१३. दशमे पुरुषे प्राणा आत्मैकादशः । – बृहदारण्यकोपनिषद् ३।९।४

सप्तेन्द्रियाणि मन्यन्ते ये तेषां श्रोत्रचक्षुषी ।
नासिके द्वे तथा वाक् च सप्तसंख्या भवत्यपि ॥१८॥

भिन्नवृत्त्या चलन्त्यस्मात् सप्त संख्या वदन्ति ते ।
वादिनां कथनं चैतदुपयुक्तं न दृश्यते ॥१९॥

यदि स्मृत्यनुसारेण गणने चेन्द्रियाणि तु ।
[१४]पुर्यष्टकं वदत्येका स्मृतिः कुत्रापि दृश्यते ॥२०॥

कथ्यते यदि संक्षेपात् संख्या चैकादशैव हि[१५] ।
इन्द्रियाणां प्रगणने सिद्धान्तोऽत्र विनिश्चितः ॥२१॥

अस्मिन् प्रकरणे सूत्रद्वयं सर्वं विचार्य च ।
[१६]एकादशेन्द्रियाण्येव सुन्तीति वदति भृशम् ॥२२॥

## ३. प्राणाणुत्वाधिकरण (ब्रह्मसूत्रम् २।४।३।७)

शिष्यः –
तानीन्द्रियाणि कानि स्युर्विभुर्वाऽणुः सशङ्कितम् ।
मनो मे पूर्वपक्षास्तु विभुः स्यात् साङ्ख्यवादिनः ॥२३॥

---

१४. पुर्यष्टकेन लिङ्गेन प्राणाद्येन स युज्यते ।
तेन बद्धस्य वै बन्धो मोक्षो मुक्तस्य तेन च ॥ – स्मृतिः

१५. क. हस्तौ चादातव्यं चौपस्थश्चानन्दयितव्यञ्च पायुश्च विसर्जयितव्यञ्च पादौ च गन्तव्यञ्च । – प्रश्नोपनिषद् ४।८
ख. तथा दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदास्माच्छरीरान्मर्त्यादुत्क्रामन्त्यथ रोदयन्ति । – बृहदारण्यकोपनिषद् ३।९।४

१६. सप्त गतेर्विशेषितत्वाच्च । – ब्रह्मसूत्रम् २।४।२।५–६

तत् तच्छरीराऽवच्छिन्नभाग इन्द्रियवासकृत् ।
तत् तत्कर्मफलं वृत्तिं तत् तद्भागे हि रान्त्यऽपि ॥२४॥

अतः सर्वगतानि स्युर्यच्छन्ति च सहायताम् ।
विभुस्तद्वृत्तिलाभस्तु जीवः प्राप्नोति पुष्कलम् ॥२५॥

गुरुः –
अयुक्ताः पूर्वपक्षास्तेऽणव इन्द्रियवृत्तयः ।
अतीव सूक्ष्मास्ता सन्ति परिच्छिन्नाः परस्परम् ॥२६॥

श्रुतिर्वक्ति तदर्थं ता याताऽऽयाता भवन्त्यपि ।
अतो न सन्ति विभवो याताऽऽयातेन हेतुना ॥२७॥

जीवस्य सहयोगार्थं भोगार्थमपि साधनम् ।
मुख्यत्वलक्ष्यसिद्ध्यर्थं जीवबाधां न कुर्वते ॥२८॥

जीववदिन्द्रियाणि स्युश्चेदवृत्तिर्व्यापिनी भवेत् ।
उत्क्रान्त्यादौ भवेद् वृत्तिरसम्भवाऽप्यनिश्चया ॥२९॥

अत एव सूत्रकारो वक्तीन्द्रियमणुरिति ।
श्रुतिरेवंविधं वक्ति सकलानीन्द्रियाण्यणुः ॥३०॥

अस्मिन् प्रकरणे सूत्रं सर्वेन्द्रियगणा अणुः[१७] ।
श्रुतेः समर्थनं कृत्वा वक्तीन्द्रियगणा अणुः ॥३१॥

---

१७. अणवश्च । – ब्रह्मसूत्रम् २।४।३।७

## ४. प्राणश्रैठ्याधिकरणम् (ब्रह्मसूत्रम् २।४।४।८)

शिष्यः –

श्वासोच्छ्वासं प्रकुर्वन् यः प्राणो मुख्यः स एव किम् ।
अनादिर्वायुरूपः किमनित्यः किमनूद्भवः ॥३२॥

अत्रापि दृष्ट्वा सन्देहं प्राणोऽनादिर्ब्रुवन्ति ते ।
सृष्टेरादौ स्थितः प्राणोऽनादिः स वदति श्रुतिः ॥३३॥

ऋग्वेदान्तर्गतो मन्त्र 'आनीत्' शब्देन व्याहृतः[१८] ।
'प्राण आसीत् सृष्टिपूर्व'मित्येतत् सूचयत्यपि ॥३४॥

अतः प्राणः स नित्योऽस्ति सोऽनादिः ससनातनः ।
अनादिर्वा सादिरस्ति शुश्रूषा हृदये मम ॥३५॥

गुरुः –

ऋग्वेदे यत् समायात'मानीत्' मन्त्रगतं पदम् ।
न स प्राणस्य व्यापारोऽवातं पदान्निषेधितम् ॥३६॥

ऋग्वेदमन्त्रे यद् व्यक्तं तेनाऽवातं पदेन हि ।
सत्तामात्रं ब्रह्मणो हि संसूचयति वास्तवम् ॥३७॥

[१९]'सदेव सौम्य' मन्त्रो यः सृष्टिपूर्वस्य वर्णनम् ।
कुरुते यत् तदेवास्य मन्त्रस्याऽस्ति समर्थनम् ॥३८॥

---

१८. न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्नः आसीत् प्रकेतः ।
आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनास ॥ – ऋग्वेदसंहिता ८।७।१७

१९. तदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम् । – छान्दोग्योपनिषद् ६।२।१

[20]श्रुतिर्घोषति चैतस्माद् ब्रह्मणः सृज्यते जगत् ।
प्राणेन्द्रियाद्या मनसा ह्युत्पन्नाः सन्ति सर्वथा ॥३९॥

गर्भसंस्थे शिशौ पूर्वं प्राणान् सञ्चरतेऽव्ययः ।
[21]'प्राणो वाव' श्रुतिस्तं हि 'ज्येष्ठः श्रेष्ठोऽपि' घोषति ॥४०॥

सर्वेन्द्रियेषु ज्येष्ठोऽयं प्राण आत्मेति गद्यते ।
विनाऽनेन कथं जीवेद् देहस्तस्येन्द्रियाण्यपि ॥४१॥

मनोमुखानि सर्वाणीन्द्रियाणि संस्तुवन्त्यपि ।
प्राणस्त्वं प्रमुखोऽसीति जीवामस्त्वदृते न हि[22] ॥४२॥

श्रुतयो ब्रुवतेऽत्राऽपि ज्येष्ठः प्राणोऽस्ति नः प्रभुः ।
अस्माकं चेन्द्रियाणां स श्रेष्ठः सादिः समुद्भवः ॥४३॥

अस्मिन् प्रकरणे सूत्रमेकं तदपि वस्तुतः[23] ।
ज्येष्ठः श्रेष्ठः प्राण एव सादिर्वदति वेदतः ॥४४॥

## ५. वायुक्रियाधिकरणम् (ब्रह्मसूत्रम् २।४।५।९–१२)

शिष्यः –
गुरो ! प्राणो वायुरस्ति ? वाऽन्यत्  सामान्यमिन्द्रियम् ।
सन्देहोऽत्र समायातो निर्णीतं नैव चोत्तरम् ॥४५॥

---

२०. क. एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । – मुण्डकोपनिषद् २।१।३
ख. स प्राणमसृजत । – प्रश्नोपनिषद् ६।४
२१. प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च । – छान्दोग्योपनिषद् ४।१।१
२२. न वै शक्ष्यामस्त्वदृते जीवितुम् । – बृहदारण्यकोपनिषद् ६।१।१३
२३. श्रेष्ठश्च । – ब्रह्मसूत्रम् २।४।४।८

[24]श्रुतिप्रमाणैरिह ते वदन्ति साङ्ख्यवादिनः ।
देहस्य [25]करणानि च ये प्राणाःपञ्चवायवः पञ्च ॥४६॥

प्राणोऽपानः समानश्च व्यानोदानश्च पञ्चमः[26] ।
देहान्तरीयाः करणाः प्राणा इन्द्रियवृत्तयः ॥४७॥

एते प्राणा वायवः किं यद्वा सामान्यमिन्द्रियम् ।
आज्ञापयत्वत्र भवान् भिन्तां मे संशयं गुरो ! ॥४८॥

गुरुः –
नास्ति वायुः प्राण एष न वा करणमिन्द्रियम् ।
'प्राण एवे'ति मन्त्रेण श्रुतयो वृणते पृथक्[27] ॥४९॥

ब्रह्मणस्तुर्यपादोऽयं प्राणोपास्त्यर्थमागतः ।
भेदा आध्यात्मिकाः सन्ति प्राणो ज्योतिः स्वरूपकः ॥५०॥

'यः प्राणः सैष वायुश्चा'भेदस्यप्रतिपादकः ।
मन्त्रोऽयं फलदोऽस्त्येव दृश्यते हेतुहेतुमत् ॥५१॥

सामान्यकरणवृत्तिंवदन्ति साङ्ख्यवादिनः ।
इन्द्रियाणां न सा वृत्तिर्दृश्यते हि यथार्थतः ॥५२॥

पृथक् पृथक् सन्ति सर्वेन्द्रियाणां वृत्तयः सदा ।
[28]पञ्जरचालनन्यायो नास्मिन् लगति सर्वथा ॥५३॥

---

२४. यः प्राणः स एष वायुः । – बृहदारण्यकोपनिषद् १।५।३
२५. सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्चः । – श्रुतिः
२६. वायुः पञ्चविधः प्राणोऽपानो व्यान उदानः समानः । – बृहदारण्यकोपनिषद् १।५।३
२७. प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा भाति च तपति च ।
– छान्दोग्योपनिषद् ३।१८।४
२८. ननु पञ्जरचालनन्यायेनैतद् भविष्यति । – शाङ्करभाष्यम्

जीवात्मतुल्यः प्राणस्तु स्वतन्त्रो नास्ति वस्तुतः ।
इन्द्रियाणि यथाऽधीनाः पराधीनोऽस्ति तत्त्वतः ।।५४।।

प्राणेन्द्रियाणां संवादक्रमे प्राणो जडोऽलगत् ।
अत एवेन्द्रियैस्तुल्यः प्राणोऽयं दृश्यते जडः ।।५५।।

प्राणो जडोऽपीन्द्रियाणि सर्वाणि धरते सदा[२९] ।
प्राण एवेन्द्रियेभ्योऽपि सर्वेभ्यः श्रेष्ठ उच्यते[३०] ।।५६।।

दर्शनश्रवणादीनि कर्माणीन्द्रियवृत्तयः ।
पृथक् प्राणस्तदन्योऽस्ति वायुव्यापारवृत्तियुक् ।।५७।।

अस्मिन् प्रकरणे सूत्रचतुष्टयमथाऽगतम्[३१] ।
सर्वेभ्यश्चेन्द्रियेभ्यस्तैः श्रेष्ठः प्राणो निगद्यते ।।५८।।

## ६. श्रेष्ठाणुत्वाधिकरणम् (ब्रह्मसूत्रम् २।४।६।१३)

शिष्यः –
गुरो ! प्राणो विभुर्वाऽल्पः ? परिच्छिन्नोऽपि दृश्यते ।
प्राणसम्बन्धविषये सन्देग्धि हृदयं मम ।।५९।।

प्लुषितोऽयं समारभ्य यावद् हिरण्यगर्भकम्[३२] ।
प्राणिनां देहमाश्रित्य प्राणस्तिष्ठति जीवनः ।।६०।।

---

२९. अथ ह प्राण अहं श्रेयसि व्यूदिरे, यस्मिन् व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्यते स वः श्रेष्ठः । – छान्दोग्योपनिषद् ५।१।६–७
३०. तान् वरिष्ठः प्राण उवाच मा मोहमापद्यथाहमेवैतत्पञ्चधात्मानं प्रविभज्यैतद् बाणमवष्टभ्य विधारयामि, इति च एतमेवार्थं श्रुतिराह प्राणेन रक्षन्नवरं कुलायम् । – बृहदारण्यकोपनिषद् ४।३।१२
३१. न वायुक्रिये पृथगुपदेशात् । – ब्रह्मसूत्रम् २।४।५।९–१२
३२. समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण । – बृहदारण्यकोपनिषद् १।३।२२

अतः प्राणोऽस्ति सर्वांशे विभुः सर्वत्र विस्तृतः ।
श्रुतिरेवंविधं वक्ति वादिनोऽपि भणन्त्यतः ॥६१॥

अभूदत्रैव मां शङ्का विभुः प्राणोऽस्ति वाऽल्पकः ।
आज्ञापयतु मामद्य सत्यं प्राणोऽस्ति को गुरो ! ॥६२॥

गुरुः –
अन्येषामिन्द्रियाणां हि तुल्यः प्राणोऽणुरल्पकः ।
अणुत्वमपि सूक्ष्मत्वं गुणः प्राणेषु दृश्यते ॥६३॥

पञ्चैव गतयः सन्ति देहे प्राणेषु पञ्चसु ।
भवन्त्युत्क्रान्तिगतषः सूक्ष्मत्वमपि दृश्यते ॥६४॥

अधिदैविकरूपोऽयं समष्टिर्व्यष्टिरेव च ।
हिरण्यगर्भदेवे तु प्राणोऽयं विभुरुच्यते ॥६५॥

प्राणोऽयं सर्वदेहेषु प्लुषीरूपेण वर्तते ।
श्रुतिरध्यात्मरूपेण मन्त्रस्यार्थं गदत्यपि ॥६६॥

अध्यात्मदृष्ट्या प्राणस्तु परिच्छिन्नोऽस्ति सूक्ष्मगः ।
एतस्मादणुरेवाऽस्ति प्राणः सिद्धान्ततोऽभवत् ॥६७॥

अस्मिन् प्रकरणे सूत्रमेकं वक्ति च निश्चितम्[३३] ।
श्रुतिसम्मतरूपेण ह्यणुः प्राणोऽस्ति निर्णयः ॥६८॥

---

**३३. अणुश्च । – ब्रह्मसूत्रम् २।४।७।१३**

## ७. ज्योतिराद्यधिकरणम् (ब्रह्मसूत्रम् २।४।७।१४–१६)

शिष्यः –

वागादीनीन्द्रियाणि स्युर्दैवाऽधीनानि वा किमु ?
स्वतन्त्राण्यत्र सन्देहो भिनत्ति हृदयं मम ।।६९।।

पूर्वपक्षा वदन्त्यत्र स्वतन्त्राणीन्द्रियाणि तु ।
वागादीन्यपि तैर्भुक्तं सर्वं देवेषु गच्छति ।।७०।।

एतस्मात् कारणात् तानि सर्वाणि करणान्यपि ।
तत् तद् विषयभोक्तृणि निश्चितं प्रभवन्त्यत ।। ७१।।

एतस्मिन् विषये ब्रह्मन् ! सर्वाणि करणानि च ।
ब्रवीतु दैवाधीनानि ? स्वतन्त्राणीन्द्रियाणि किम् ? ।।७२।।

गुरुः –

अग्न्यादिदेवाऽधीनानि वागादीनीन्द्रियाणि तु[३४] ।
तत् तद्वशानि भोक्तृणि जीवस्येच्छानुसारतः ।।७३।।

जीवानुग्राहका देवास्तत्साहाय्यं प्रकुर्वते ।
ते भोगान् परिवीक्ष्यन्ति वागादिकरणैरिह ।।७४।।

देवा भोगं न कुर्वन्ति ते सर्वेऽप्याधिदैविकाः ।
अध्यात्म भावे तिष्ठन्ति वागादीनीन्द्रियाण्यपि ।।७५।।

---

३४. अग्निर्वाग्भूत्वा मुखं प्राविशत् वायुः प्राणो भूत्वा नासिके प्राविशत् ।
– ऐतरोपनिषद् २।४

वक्तृत्वमपि भोक्तृत्वविषया स्त्वाधिभौतिकाः[३५] ।
भोक्ता जीवोऽस्ति सर्वांशे करणं भोगसाधनम् ॥७६॥

भोगान् लोकस्थजीवानां नैव भुञ्जन्ति देवताः ।
देवतास्तु प्रभुञ्जन्ति स्वकीयं दिव्यवैभवम्[३६] ॥७७॥

ये सन्ति प्राणिनस्तेषां जीवानामिन्द्रियैः सह ।
स्वस्वामिभावसम्बन्धस्तिष्ठति निश्चितं सदा ॥७८॥

स्वधर्मोपार्जितान् भोगान् वसन् जीवः शरीरके ।
भुनक्त्येव हि प्रारब्धान् देवता नैव भुञ्जते ॥८०॥

वस्तुतो नित्यसम्बन्धो भवति प्राणजीवयोः ।
उत्क्रान्ते सति जीवे तु प्राणस्तेनैव गच्छति[३७] ॥८१॥

सर्वेषामिन्द्रियादीनां देवाः सन्ति नियामकाः ।
केवलं रक्षकास्ते तु जीवभोगान् न भुञ्जते ॥८२॥

कर्तृत्वमपि भोक्तृत्वं जीवेन सह तिष्ठतः ।
भोक्तृत्वपक्षे नैवाऽऽसन् तत्कर्मोपेक्षकाः सुराः ? ॥८३॥

एतस्मात् कारणाद् जीवो दैवाधीनो न दृश्यते ।
प्रारब्धकर्मणां भोक्तुं स्वतन्त्र इव लक्ष्यते ॥८४॥

---

३५. वागध्यात्ममिति प्राहुर्ब्राह्मणास्तत्त्वदर्शिनः ।
वक्तव्यमधिभूतं तु वह्निस्तत्राधिदैवतम् ॥ – स्मृतिः

३६. पुण्यमेवामुं गच्छति न ह वै देवान् पापं गच्छति । – बृहदारण्यकोपनिषद् १।५।२

३७. तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनुत्क्रामन्ति ।
– बृहदारण्यकोपनिषद् ४।४।२

अत्र सिद्धान्तपक्षस्तु शास्त्रेणैव हि मण्डितः ।
सुस्पष्टं पूर्वपक्षाणां मतमेतेन खण्डितम् ॥८५॥

अस्मिन् प्रकरणे सूत्रत्रयं नित्यं भणत्यपि[३८] ।
जीवाः स्वतन्त्राः प्रारब्धार्जितान् भोगान् हि भुञ्जते ॥८६॥

## ८. इन्द्रियाधिकरणम् (ब्रह्मसूत्रम् २।४।८।१७–१९)

शिष्यः –
इन्द्रियाण्यपि सर्वाणि किमु प्राणस्य वृत्तयः ?
सन्दिग्धं मानसं मेऽत्र वृत्तयो वाऽन्यथा पृथक् ? ॥८७॥

वादिनः प्रवदन्त्यत्र प्राणस्येन्दिदूयवृत्तयः ।
नेन्द्रियाणां पृथक् प्रणादस्तित्वं दृश्यते क्वचित्[३९] ? ॥८८॥

गुरुः –
सुस्पष्टं दृश्यते भेद इन्द्रियप्राणयोरिह ।
कथं भवन्तीन्द्रियाणि प्राणानां वृत्तयोऽत्र तु ॥८९॥

इन्द्रियाणि दशैकं च मनः प्राणातिरिक्तकम् ।
श्रुतिः सुस्पष्टमाख्याति न तानि प्राणवृत्तयः[४०] ॥९०॥

---

३८. ज्योतिराद्यधिष्ठानं तु तदामननात् । – ब्रह्मसूत्रम् २।४।७।१४–१६

३९. हन्त्यास्यैव सर्वे रूपसामेति त एतस्यैव सर्वे रूपमभवन् ।
– बृहदारण्यकोपनिषद् १।५।२१

४०. तानि मृत्युः श्रमो भूत्वोपयेमे तस्माच्छ्राम्यत्येव वाक् ... अथेममेव नाप्नोद्योऽयं मध्यमः प्राणः । – बृहदारण्यकोपनिषद् १।५।२१

अन्यप्रकरणान्तःस्थाः प्राणाः सन्तीन्द्रियेभ्य उ ।
इन्द्रियाणां तु करणं भिन्नं वदति च श्रुतिः[४१] ॥९१॥

इन्द्रियाणि न हि प्राणवृत्तयोऽत्र भवन्त्यपि ?
प्राणानामिन्द्रियाणां च भेदं प्रकुरुते श्रुतिः ॥९२॥

सुस्पष्टं दृश्यते भेद इन्द्रियप्राणयोरिह ।
सुषुप्तौ चलति प्राण इन्द्रियाणि चलन्ति नो ॥९३॥

इन्द्रियप्राणयोरत्र वैलक्षण्यं प्रदृश्यते ।
इन्द्रियाणि न हि प्राणवृत्तयः प्रभवन्त्यपि ॥९४॥

अस्मिन् प्रकरणे सूत्रत्रयमाख्याति स्पष्टतः[४२] ।
इन्द्रियाणि तु भिन्नानि न तानि प्राणवृत्तयः ॥९५॥

## ९. संज्ञामूर्तिक्लृप्त्यधिकरणम् (ब्रह्मसूत्रम् २।४।९।२०–२२)

शिष्यः –
नामरूपादि संस्कर्ता व्याकर्ता वा परेश्वरः ?
जीवः किमत्र सन्देहो मानसं व्याकुलायितम् ॥९६॥

पूर्वपक्षा वदन्त्यत्र जीवो न परमेश्वरः ।
नामरूपादिव्याकर्ता लोकानां सत्यमीश्वरः ॥९७॥

वादिनिर्देशितं यत् तत् प्रमाणं श्रुतिदर्शितम् ।
उपयुक्तं न वाऽयुक्तमाज्ञापयतु मां गुरो ! ॥९८॥

---

४१. एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । – मुण्डकोपनिषद् २।१।३
४२. न इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् । – ब्रह्मसूत्रम् २।४।८।१७–१९

गुरुः –

'त्रिवृतं त्रिवृतं' चेति यद् दृष्टं वाक्यवैभवम्[४३] ।
नामरूपद्वयोरेव व्याकर्ता परमेश्वरः ॥९९॥

'सेयमादौ समुच्चार्य करवाणीति'चान्तिमात्[४४] ।
श्रुतिवाक्याद् बुध्यतेऽपि सृष्टिकर्ता परमेश्वरः ॥१००॥

तेजोभिःसलिलैरन्नैः सृष्टिरेषाऽस्ति जीविता ।
आदित्यं चन्द्रमन्नादीनसृजत् परमेश्वरः ॥१०१॥

यत् 'त्रिवृत्करणं' पूर्वं पञ्चीकरणतोऽभवत् ।
तत्र पृथ्वी जलाऽग्नीनां रचयिता परेश्वरः ॥१०२॥

आकाशादिश्रुतौ व्यक्तो नामरूपात्मकेश्वरः[४५] ।
संस्कर्ता सृष्टिकर्ता च व्याकर्ता जगदीश्वरः ॥१०३॥

प्रत्येकं नामरूपाद्याः या सृष्टिः परिदृश्यते ।
तेजःसलिलमन्नानां कारणादेव रच्यते ॥१०४॥

अग्नेरूपं रक्तमस्ति तेजोरूपं तदेव हि[४६] ।
यच्छुक्लं रूपमस्त्येव जलरूपं तदेव हि ॥१०५॥

अन्नरूपं कृष्णमस्ति पृथिव्या उपलक्षितम् ।
सृष्टिक्रमः सैष एव त्रिवृत्करणमस्ति तत् ॥१०६॥

---

४३. तासां त्रिवृतं त्रिवृतमेकैकामकरोत् ।
४४. सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति, तासां त्रिवृतमेकैकां करवाणीति । – छान्दोग्योपनिषद् ६।३।२
४५. आकाशो ह वै नाम नामरूपयोर्निर्वहिता । – छान्दोग्योपनिषद् ८।१४।१
४६. यदग्ने रोहितं रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य । – छान्दोग्योपनिषद् ६।४।१

मांसविष्टे विवर्तेते तदन्नाख्यं रसात्मकम् ।
रक्तमूत्रे विवर्तेते शुक्लाख्यं तज्जलात्मकम् ॥१०७॥

सैषा त्रिवृत्कृता पृथ्वी ब्रीहिरन्नादिकाः समे ।
भुक्तान्नानां त्रयो भागा रसरक्तादिनिर्गताः[४७] ॥१०८॥

स्थूलभागादस्ति विष्टा मध्यान्मांसं प्रवर्तते ।
सूक्ष्मातिसूक्ष्मभागात्तु मनोऽन्तःस्थं प्रजायते ॥१०९॥

जीवः सृष्टिं न सृजति न शक्नोतीति निश्चितम् ।
'अनेनादि' श्रुतौ दृष्टाः श्रेष्ठः पुरुष उच्यते ॥११०॥

अस्मिन् प्रकरणे सूत्रत्रयं वक्तीशकर्तृताम् ।
जगतो नामरूपादीन् प्रमाणैः श्रुतिदर्शितैः ॥११२॥

ब्रह्मसूत्रे कारिकायां द्वितीयाऽध्यायवर्णिताः ।
अविरोधे चतुष्पादाः समनूद्य समापिताः ॥११३॥

देवीप्रसादतनयो बुधभीमकान्त–
स्तस्याऽत्मजेन कवितारुचिमानसे ।
नित्यं बुधैरभिहितेन जनेन लक्ष्मी–
कान्तेन मुग्धहृदयेन कृतोऽनुवादः ॥११४॥

॥ इति ब्रह्मसूत्रकारिकायां द्वितीयोऽध्यायः ॥

---

४७. अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मासं योऽणिष्ठस्तन्मनः । – छान्दोग्योपनिषद् ६।५।१

### ॐ तत्सद्ब्रह्मणे नमः ।
### अथ ब्रह्मसूत्रकारिकायां
## तृतीये साधनाऽयाये प्रथमः पादः

तृतीये विरतिस्तत्त्वं पदार्थपरिशोधनम् ।
गुणोपसंहृतिर्ज्ञानबहिरङ्गादिसाधनम् ॥

(अस्मिन् पादे तदनन्तरप्रतिपत्तितोऽन्याधिष्ठितसहितानि षडधिकरणानि सन्ति । एतेष्वधिकरणेषु गत्याऽऽगतौ तथा वैराग्यसम्बन्धेऽपि विचारः कृतोऽस्ति ।)

### १. तदनन्तरप्रतिपत्त्यधिकरणम् (ब्रह्मसूत्रम् ३।१।१।१–७)

शिष्यः –
जीवाऽऽत्माऽयं मृत्युपश्चाद् भूत्वा किं भूतवेष्टितः ।
न याति ? वाऽथवाऽभूत्वा स याति भूतवेष्टितः ? ॥१॥

समायातोऽत्र सन्देहो मानसे वादिनोऽपि च ।
सर्वत्र सूक्ष्मा भूतास्ते भवन्ति कथयन्ति च ॥२॥

इत्थमत्र सजीवोऽपि किं भूतैर्वेष्टितो न वा ?
स यद्वाऽवेष्टितो याति मामाऽऽज्ञापयतु प्रभो ! ॥३॥

गुरुः –
यत्र कुत्राऽपि सर्वत्र भूतानि तु भवन्ति हि ।
नैव देहधराः सूक्ष्मा दृश्यन्ते न हि ते क्वचित् ॥४॥

देहाऽरम्भकभूतानि जीवेन सह यान्त्यपि ।
देहं विना गतिस्तेषां न स्याद् जीवः प्रयात्यपि ॥५॥

पञ्चाऽग्नौ प्रहुते सत्यां जलं जीवोपलक्षितम्[1] ।
स्वर्गं फलमवाप्नोति भोगाँश्चापि भुनक्ति सः ॥६॥

पञ्चाग्नौ प्रहुतो जीवो यदा प्रतिनिवर्तते ।
योषाऽग्नौ पञ्चमे हुत्वा समये जायते पुनः ॥७॥

पुरि शेते ततो जातः सजीवः पुरुषाऽभिधः ।
शरीरभावसम्प्राप्तो जीवो जीवत्यनन्तरम् ॥८॥

भुक्त्वा प्रारब्धकर्माणि जीवो देहं जहात्यपि ।
पश्चात् स सूक्ष्मभूतेन वेहामुत्र भ्रमत्यपि ॥९॥

तदन्यथा गतिर्नास्ति स जीवो भूतवेष्टितः ।
प्रयातीति मतं नाऽत्र मिलति वादिनां ध्रुवम् ॥१०॥

सूत्रसप्तकमायातं सम्परिष्वक्तरंहतिः[2] ।
तेनैव वेष्टितो याति जीवस्य गतिरीदृशी ॥११॥

## २. कृतात्ययाधिकरणम् (ब्रह्मसूत्रम् ३।१।२।८–११)

शिष्यः –

यः स्वर्गात् पुनरागत्य जीवोत्पत्त्यर्थमागतः ।
स किं सानुशयो यद्वा विनाऽनुशयमागतः ? ॥१२॥

पूर्वपक्षा वदन्त्यत्र विनाऽनुशयमागतः ।
पुनरुद्भवितुं भूमौ स्वर्गतः पुनरेति सः ॥१३॥

---

१. वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति । – छान्दोग्योपनिषद् ५।३।३
२. तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् । – ब्रह्मसूत्रम् ३।१।१।१–७

'यावत्सम्पाते'ति वाक्यं समुद्धृत्य श्रुतेरिह[३] ।
विनाऽनुशयमायाति दृढमूला वदन्ति ते ॥१४॥

स्वर्गं भुक्त्वा पुनर्लोके ते समायान्ति कर्मणः ।
शेषं भोक्तुं कर्मफलं जायन्ते ते शुभाऽशुभम् ॥१५॥

सन्देहः पुनरायातः किमर्थं पुनरेति सः ।
स सानुशयमायति ? विनाऽनुशयमेति वा ? ॥१६॥

गुरुः –
यदा स्वर्गात् समावर्त्य पृथिव्यां पुनरेति सः[४] ।
अभुक्तकर्मणा सार्धं प्रारब्धं भोक्तुमागतः ॥१७॥

स सानुशयमभ्येति जीवश्चेत् पुनरागतः ।
पञ्चाग्नौ हुतपूर्वोऽस्ति योषाऽग्नौ समुदेति सः ॥१८॥

यद् धर्माऽधर्मतः प्राप्तमुद्भूतं कर्मणां फलम्[५] ।
भुक्त्वा शेषं कर्म भोक्तुं स भूमौ जायते पुनः ॥१९॥

यावद् भुनक्ति सम्पातं स्वर्गे कर्मफलानि च ।
प्रत्यायाति पुनर्भूमौ पुनस्तन्मार्गमार्गणात् ॥२०॥

यस्य पूर्वं शुभाऽऽचारः स शुभानं योनिमृच्छति[६] ।
भवेद् विप्रोऽथवा क्षत्रो वैश्यो वा जायते ततः ॥२१॥

---

३. तस्मिन्यावत्सम्पातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतम् ।
– छान्दोग्योपनिषद् ५।१०।५

४. प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम् ।
तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे ॥ – बृहदारण्यकोपनिषद् ४।४।६

५. ते तं भुक्त्वा स्वर्गलोकं विशालम्, क्षीणे पुण्ये मर्त्यलोकं विशन्ति । – गीता ९।२१

६. तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा । – छान्दोग्योपनिषद् ५।१०।७

पूर्वं यस्याऽशुभाऽऽचारः सोऽशुभां योनिमृच्छति[७] ।
कुक्कुरः सूकरो यद्वा स चाण्डालोऽभिजायते ॥२२॥

स सानुशय आयातो भूमौ प्रत्येति स्वर्गतः ।
स्नेहसिक्तं भाण्डमिव भवेत् सानुशयोऽपि सः[८] ॥२३॥

चरणाऽनुशयी जीवः पुनरायाति याति च ।
समानार्थावुभौ शब्दौ पार्थक्यं नार्थयोस्तयोः ॥२४॥

आचारशीलो मनुजो भवेन्मुक्तः स्वकर्मभिः[९] ।
आचारहीनं मनुजं वेदः शास्त्रं च निन्दति[१०] ॥२५॥

सर्वशास्त्रे सदाचारः प्रथमं धर्मकारणम् ।
आचारहीनं मनुजं वेदा नैव पुनन्त्यपि ॥२६॥

पुण्यपापानि कर्माणि शब्दोऽयं चरणैरिति ।
गृह्णाति बादरिर्वक्ति धर्मं चरति पूरुषः[११] ॥२७॥

सदाऽऽचारोऽपि धर्मोयमद्रोहो धर्मकारणम् ।
आचारयुक्तो मनुजः शुभां योनिं समाप्नुयात् ॥२८॥

स्वर्गं भोक्ष्यति धर्मात्मा पापी नरकमृच्छति ।
परत्र भोगं भुक्त्वाऽपि स सानुशय आयाति ॥२९॥

---

७. अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा । – छान्दोग्योपनिषद् ५।१०।७
८. शाङ्करभाष्य । – ब्रह्मसूत्रम् ३।१।२।८
९. अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च ज्ञानञ्च शीलमेतद् विदुर्बुधाः । – स्मृतिः
१०. आचारहीनं न पुनन्ति वेदाः । – स्मृतिः
११. सत्यं वद, धर्मं चर । यान्यनवद्यानि कर्माणि तानि सेवितव्यानि, नो इतराणि, यान्यस्माकं सुचरितानि, तानि त्वयोपास्यानि । – तैत्तिरियोपनिषद् १।११।१–२

वादिनां मतमस्त्येतदायात्यनुशयं विना ।
परं तेन विना जीवो भुवि जन्माऽऽप्नुयात् कथम् ? ॥३०॥

जीवः सानुशयी भूत्वा कुर्यात् स्वर्गं गमाऽऽगमौ ।
अतो व्यर्थो दृश्यतेऽत्र सिद्धान्तो वादिनामपि ॥३१॥

अस्मिन् प्रकरणे दृष्टं सूत्रमस्ति चतुष्टयम्[१२] ।
जीवः सानुशयो भूत्वा भूमिमायाति स्वर्गतः ॥३२॥

## ३. अनिष्टादिकार्यधिकरणम् (ब्रह्मसूत्रम् ३।१।३।१२–१९)

शिष्यः –
पापिनश्चन्द्रलोकं तं किं गच्छन्ति न वा किमु ?
सन्देहे वादिनोऽत्राऽपि गच्छन्तीति भणन्त्यपि ॥३३॥

'ये वै के च' श्रुतिंचाग्रे सारयन्ति प्रमाणतः[१३] ।
पापिनः पञ्चमाहुत्यै गच्छन्तीति भणन्ति ते ॥३४॥

तदित्थं पूर्वपक्षाणां मतमेतत् समागते ।
पापिनश्चन्द्रलोकं किं गच्छन्तीति ब्रवीतु भो ! ॥३५॥

गुरुः –
पापिनः पञ्चमाहुत्यै चन्द्रलोकं व्रजन्ति नो ।
धार्मिकास्तत्र भोगार्थं गच्छन्त्येव सुनिश्चितम् ॥३६॥

'ये वै के' श्रुतिमन्त्रस्तु धर्मात्मार्थं समागतः ।
पापिनो निरयं यान्ति भोक्तुं दुःखं हि दुस्तरम् ॥३७॥

---

१२. कृत्यात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां यथेतमनेवञ्च । – ब्रह्मसूत्रम् ३।१।२।१२–२१
१३. ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे प्रयन्ति ।
– कौषीतकिब्राह्मणोपनिषद् १।२

तादृशाः पापिनो यान्ति सर्वदैव यमक्षयम्[१४] ।
ममैव वशमायान्ति यमो वक्ति च तान् प्रति ।।३८।।

शिष्यः –
देवयानादयो मार्गाः प्रस्थानार्थं समुद्धृताः ।
किं समुत्क्रान्तजीवानां मार्गास्ते वा न वा किमु ।।३९।।

गुरुः –
दृष्टाः पञ्चाग्निविद्यायां ये प्रश्नोत्तरमार्गणे[१५] ।
त्रयो मार्गाः सन्ति तत्र मननेन श्रुतिं पठ ।।४०।।

कर्मार्थमपि विद्यार्थं द्वौ मार्गौ दक्षिणोत्तरौ ।
कर्मी तद्दक्षिणे मार्गे ज्ञानी याति सदोत्तरे ।।४१।।

ये द्वौ मार्गौ न सेवेते तेऽन्यस्थाननिषेवकाः[१६] ।
ते जायन्ते म्रियन्तेऽपि प्राणिनः क्षुद्रजीवकाः ।।४२।।

न तेषां प्राणिनां मुक्तिर्लोकेऽस्मिन् विभ्रमन्ति ते ।
एतस्मात् कारणात् स्वर्गो भरते न श्रुतेर्मतम्[१७] ।।४३।।

पञ्चमाहुतिरेषा हि मनुष्यार्थं निदर्शिता[१८] ।
पञ्चमाहुतितो जातं यज्जलं पुरुषाऽभिधम् ।।४४।।

---

१४. क. न साम्परायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् ।
अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे ।। – कठोपनिषद् २।६
ख. वैवस्वतं सङ्गमनं जनानाम् । – कठोपनिषद् २।६
१५. वेत्थ यथासौ लोको न सम्पूर्यते । – छान्दोग्योपनिषद् ५।३।३
१६. यथैतयोः पथोर्न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति ।
– छान्दोग्योपनिषद् ५।१०।८
१७. जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न सम्पूर्यते ।
– छान्दोग्योपनिषद् ५।१०।८
१८. पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति । – छान्दोग्योपनिषद् ५।३।३

ततः पुंनाम जीवात्मा यः करोति गमाऽगमौ[१९] ।
अन्ये जीवा विनाऽऽहुत्या समुत्पन्ना भवन्त्यपि ॥४५॥

तृतीयस्थानिका जीवा उद्भिज्जाः स्वेदजा[२०] अपि ।
इदं हि सूत्रं गदति जायते म्रियतेऽपि च[२१] ॥४६॥

नरकादागतः पापी चन्द्रबिम्बं प्रपद्यते ।
पञ्चाग्नौ हूयमानोऽपि नीचयोनौ प्रजायते ॥४७॥

अस्मिन् प्रकरणे सूत्रदशकं समुपागतम्[२२] ।
पञ्चाग्नौ प्रहुतो जीवश्चन्द्रलोकात् प्रजायते ॥४८॥

## ४. साभाव्यापत्त्यधिकरणम् (ब्रह्मसूत्रम् ३।१।४।२२)

शिष्यः –
स्वर्गे कर्मफलं भुक्त्वा भोगक्षयादनन्तरम् ।
निवर्त्य कर्ताऽनुशयी भूमिमायात्यनन्तरम् ॥४९॥

इत्थं समागतो जीवो वियद्वायुजलादिकान् ।
मार्गान् परिभ्रम्य भूमौ जन्मगृह्णाति मातृतः ॥५०॥

इत्थं निवर्तितो जीवः स्वरूपान् वियदादिकान् ।
धरते वा न वा मार्गे साम्येनाऽऽयाति किं गुरो ! ॥५१॥

---

१९. तत्र येषामारोहावरोहौ सम्भवस्तेषां पञ्चम्यामाहुतौ देह उद्भविष्यति । अन्येषान्तु विनैवाहुतिसङ्ख्याया भूतान्तरोपसृष्टाभिरद्भिर्देह आरप्स्यन्ते ।
– शाङ्करभाष्यम्, ब्रह्मसूत्रम् ३।१।३।१८

२०. आण्डजं जीवजमुद्भिज्जम् । – छान्दोग्योपनिषद् ६।३।१

२१. तृतीयशब्दविरोधः संशोकजस्य । – ब्रह्मसूत्रम् ३।१।३।२१

२२. अनिष्टादिकारिणामपि च श्रुतम् । – ब्रह्मसूत्रम् ३।१।३।१२–२१

सन्देहो मानसे मेऽस्ति पूर्वपक्षा वदन्त्यपि ।
वियदादीन् स्वरूपान् स गृहीत्वा भूमिमागतः[२३] ॥५२॥

इत्थमत्र भवान् वक्तु स्वरूपं वाऽपि साम्यताम् ।
कर्ता सानुशयी जीवः किं गृहीत्वा समागमत् ॥५३॥

गुरुः –
धूमयानात् तत्र याति स कर्ता चन्द्रमण्डले ।
भोगार्थं जलरूपेण भूमौ पतति पुष्करात् ॥५४॥

यदा भोगक्षयो जात आकाशे प्रविलीयते ।
आकाशतुल्यो भवति स सूक्ष्मोऽनुशयक्षयात्[२४] ॥५५॥

वियदादिर्न भवति तत्तुल्यः सूक्ष्मरूपधृक् ।
वायुवत् सञ्चरन् सूक्ष्मो मेघरूपेण वर्षति ॥५६॥

भूमौ पतति यः पश्चात् खाद्यान्ने संविशत्यपि ।
पुरुषे वीर्यरूपः स योषाऽग्नौ संहुतोऽभवत् ॥५७॥

पूर्वं यथाऽऽरोहति स तथात्वमवरोहति ।
एवं सानुशयी जीवो जन्मृत्युं परिभ्रमेत् ॥५८॥

आकाशं मन्यते चेत् तं वाय्वादिषु न याति सः ।
तथा जीवो नावरोहेत् वायौ तेजसि याति नो ॥५९॥

---

२३. अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद् वायुं वायुर्भूत्वा धूमो भवति, धूमो भूत्वा अभ्रम्भवति, अभ्रम्भूत्वा मेघो भवति, मेघो भूत्वा प्रवर्षीति ।
– छान्दोग्योपनिषद् ५।१०।५

२४. अथेतमाकाशमाकाशाद् वायुम् । – छान्दोग्योपनिषद् ५।१०।५

श्रुतिलक्षणयोर्मध्ये श्रुतिन्यायोचितो भवेत् ।
[25]श्रुत्यसम्भवकाले तु लक्षणाऽप्युचिता भवेत् ॥६०॥

कर्मभोगक्षये जीवोऽनुशयेनाऽवरोहति ।
आकाशतुल्यो भवति न त्वाकाशस्वरूपधृक् ॥६१॥

अस्मिन् प्रकरणे सूत्रमेकमायाति वक्ति च[26] ।
जीवः कर्मफलं भुक्त्वा पुनरायाति भूतले ॥६२॥

## ५. नातिचिराधिकरणम् (ब्रह्मसूत्रम् ३।१।५।२३)

शिष्यः –
ब्रीह्यादिभावग्रहणे जीवः सोऽनुशयी भुवि ।
शीघ्रं समायाति यद्वा विलम्बेन समापतेत् ॥६३॥

तदित्थं सति सन्देहे वादिनः प्रवदन्त्यपि ।
त्वरया वा विलम्बेन नियमो न समागमे ॥६४॥

आज्ञापयतु हे ब्रह्मन् ! द्रुतं यद्वा विलम्बतः ।
अवरोहति जीवः स पञ्चाग्निषु भ्रमन् किमु ? ॥६५॥

गुरुः –
स जीवोऽनुशयी भूत्वा व्योम्नि तेजसि वा जले ?
यदा वर्षति पर्जन्यस्तदा पतति भूतले ॥६६॥

शीघ्रमेव समायाति स ब्रीह्यादिषु जायते[27] ।
जीवस्तद्रूपमायाति ब्रीह्यादिषु यवादिषु ॥६७॥

---

२५. श्रुत्यसम्भवे च लक्षणाश्रयणं न्याय्यमेव। – शाङ्करभाष्यम्, सूत्रम् २२
२६. साभाव्यापत्तिरुपपत्तेः। – ब्रह्मसूत्रम् ३।१।४।२२
२७. अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह ब्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्तेऽतो वै खलु दुर्निष्प्रपतरम्। – छान्दोग्योपनिषद् ५।१०।६

ब्रीह्यादिमार्गाद् जीवः स धूममार्गे न गच्छति ।
श्रुतिरेवं प्रवदति रोहणं दुष्करं भवेत् ॥६८॥

ब्रीह्यादिभावात् पूर्वं हि शीघ्रमायाति भूतले ।
ब्रीह्यादिभावं हित्वा तु समुत्थानं सुदुष्करम् ॥६९॥

अस्मिन् प्रकरणे सूत्रं वक्ति तत् कर्मणां फलम्[२८] ।
ब्रीह्यादिभावमारुह्य जीवो जायेत नान्यथा ॥७०॥

## ६. अन्याधिष्ठिताधिकरणम् (ब्रह्मसूत्रम् ३।१।६।२४–२७)

शिष्यः –
भवेद् योऽनुशयी जीवस्तस्य ब्रीहियवादिषु ।
संश्लेषमात्रं भवति ? वा जन्म लभते स किम् ? ॥७१॥

तदित्थं सति सन्देहे श्रुत्याऽऽधारेण तेऽब्रुवन्[२९] ।
मुख्यं जन्मैव लभते, मनो न मनुते मम ॥७२॥

एतस्मात् कारणाद् ब्रह्मन् ! प्रमाणैः श्रुति संमितैः ।
भवान् वदतु संश्लेषं लभन्ते किमु जन्म ते ॥७३॥

गुरुः –
तज्जीवाऽधिष्ठिताऽन्नेषु ब्रीह्यादिषु यवादिषु ।
अधिष्ठिताऽनुशयिनो जीवाः संश्लेषिता भुवि ॥७४॥

---

२८. नातिचिरेण विशेषात् । – ब्रह्मसूत्रम् ३।१।५।२३
२९. त इह ब्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते ।
– छान्दोग्योपनिषद् ५।१०।६
३०. अहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः । – छान्दोग्योपनिषद् ८।१५।१
३१. अग्निषोमीयं पशुमालभेत । – तैत्तरीयसंहिता ६।१।११।६

सुखं दुःखं न ब्रीह्यादौ जीवा भुञ्जन्ति पुंसि ते ।
गत्वा जुह्वति योषाग्नौ जायन्ते समये ततः ॥७५॥

पूर्वकर्मानुसारेण दुःखानि च सुखान्यपि ।
प्राप्यन्ते रमणीयाद्या दृश्यन्ते श्रुतयोऽपि च ॥७६॥

अग्निष्टोमादिकार्येषु पशुहिंसा कृते सति ।
यत्पापं कृतवन्तस्ते जायन्ते चान्नरूपिणः ॥७७॥

अतो हिंसा न कर्तव्या निषेधति श्रुतिः स्वयम्[३०] ।
स्वर्गकामो यजेताऽऽदौ हिंसा काया विधानतः[३१] ॥७८॥

वैदिके कर्मणि हिंसा दुःखहेतुर्न दृश्यते[३२] ।
धर्माऽधर्मा भवन्त्येव विधिशास्त्राऽनुसारत ॥७९॥

ब्रीह्यादिषु तु यज्जन्म तन्मुख्यं जन्म तेऽब्रुवन् ।
तेषां हि पूर्वपक्षाणां धारणाऽत्रैव खण्डिता ॥८०॥

ये चन्द्रमस आयान्ति जीवाऽनुशयशीलिनः ।
न तेषां स्थावरं जन्म शास्त्राणि ब्रुवतेऽत्र ह ॥८१॥

तानि ब्रीह्यादयोऽन्नानि हयन्ते पुरुषाऽग्निषु ।
रेतः प्रजायते तद्धि योषाऽग्नौ हूयते पुनः ॥८२॥

योषाऽग्नौ हूयते यत् तद् रेतो जीवः प्रजायते[३३] ।
तदेव मुख्यं जन्माऽस्ति कर्मणो हि शुभाऽशुभात् ॥८३॥

---

३२. शास्त्रहेतुत्वाद् धर्माधर्मविज्ञानस्य, अयं धर्मोऽयमधर्म इति शास्त्रमेव विज्ञाने कारणम्, अतीन्द्रियत्वात्तयोः । – शाङ्करभाष्यम्, ब्रह्मसूत्रम् ३।१।६।२५

३३. यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति ।
– छान्दोग्योपनिषद् ५।१०।६५

शुभाऽऽचारेण जीवोऽपि शुभयोनौ प्रजायते[३४] ।
ब्राह्मणः क्षत्रियो वाऽपि वैश्यो भूत्वेह जायते ॥८४॥

अशुभाऽऽचरणाज्जीवोऽशुभयोनौ प्रजायते[३५] ।
कुक्कुरः सूकरो यद्वा स चाण्डालोऽभिजायते ॥८५॥

ये स्वर्गतोऽनुशा यिनो भूमिमायान्ति जीवकाः ।
संशिलष्यँतेऽत्र ब्रीह्यादौ यवादौ नास्ति जन्म तत् ॥८६॥

अस्मिन् प्रकरणे सूत्रचतुष्टयमिहाऽऽगतम्[३६] ।
ब्रीह्यादौ तु न ते जीवा जायन्ते संशिलषन्त्यपि ॥८७॥

ब्रह्मसूत्रे कारिकाया तृतयाध्यायवर्णितः ।
मायाऽत्र प्रथमः पादः समनूद्य समापितः ॥८८॥

॥ इति ब्रह्मसूत्रकारिकायां तृतीयाध्याये प्रथमः पादः ॥

३४. तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा । – छान्दोग्योपनिषद् ५।१०।७

३५. तद्य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन्श्वयोनिं सूकरयोनिं वा चण्डालयोनिं वा । – छान्दोग्योपनिषद् ५।१०।७

३६. अन्याधिष्ठितेषु पूर्ववदभिलापात् । – ब्रह्मसूत्रम् ३।१।६।२४–२७

ॐ तत्सद्ब्रह्मणे नमः

अथ ब्रह्मसूत्रकारिकायां

# तृतीयाऽध्याये द्वितीयः पादः

(अस्मिन् पादे सन्ध्यातः फलाधिकरणं यावत् अष्टावधिकरणानि सन्ति । एतेषु अधिकरणेषु तत्वं पदार्थयोः परिशोधनसम्बन्धे विचारः कृतः ।)

## १. सन्ध्याधिकरणम् (ब्रह्मसूत्रम् ३।२।१।१–६)

शिष्यः –

हे ब्रह्मन् ! स्वप्नदृष्टिः सा सत्या ? मिथ्याऽस्ति वा किमु ?
सन्दिग्धं हृदयं मेऽत्र सत् सा वाऽसत् किमित्यपि ।।१।।

वादिनः प्रवदन्त्यत्र स्वप्नो जाग्रत्समोऽस्ति हि ।
जाग्रत्सुषुप्त्योर्मध्ये हिस्वप्नस्थानं तृतीयकम्[१] ।।२।।

तदत्र पूर्वपक्षास्तु नैकाः श्रुतिप्रदर्शिताः ।
स्वप्ने दृष्टं सत्यमस्ति वदन्त्याऽऽग्रहपूर्वकम् ।।३।।

वदन्ति कठशाखीया स्वप्ने कार्यं विरच्यते[२] ।
प्राज्ञेन चेत्थं क्रियते स्वप्नः सत्यं हि दृश्यते ।।४।।

---

१. सन्ध्यं तृतीयं स्वप्नस्थानम् । – बृहदारण्यकोपनिषद् ४।३।९

२. क. य एव सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः । – कठोपनिषद् ४।८
ख. शतायुषः पुत्रपौत्रान्वृणीष्व । – कठोपनिषद् १।२३
ग. कामानां त्वा कामभाजं करोमि । कठोपनिषद् १।२४
घ. अथ खल्वाहुर्जागरित देश एवास्यैष इति यानि ह्येष जाग्रत्पश्यति तानि सुप्तः । – बृहदारण्यकोपनिषद् ४।३।१४
ङ. अन्यत्र धर्मादन्यत्राधर्मात् । – कठोपनिषद् २।१४
च. तमेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।
तस्मिंल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन ।। – कठोपनिषद् २।४

अश्वा रथाश्च पन्थानः स्वप्ने यत् सृष्टिवैभवम्[३] ।
जाग्रत्तुल्यं दृश्यते तत् सर्वं हि व्यावहारिकम् ॥५॥

गुरुः –
स्वप्नस्य सृष्टिर्मिथ्याऽस्ति शुक्तिरुप्यसमाऽस्ति सा ।
संस्कारजन्यः स्वप्नस्तु केवलं प्रातिभासिकम् ॥६॥

सा सान्ध्यसृष्टिर्मायाऽस्ति नास्ति सा पारमार्थिकी ।
देशः कालो निमित्तानि स्वप्ने नैव भवन्त्य हो ! ॥७॥

तदेकान्ते स्वप्नदेशे रथाद्या न भवन्त्यपि ।
तथा कालो निमित्तानि च स्वप्ने निश्चीयते न हि ॥८॥

संस्कारवासनाऽऽरुढा जीवाऽऽत्मानः प्रचक्षते[४] ।
रथा वृक्षा मनुष्याद्या विश्वं ते रचयन्त्यपि ॥९॥

सर्वास्ताः स्वप्नरचना मिथ्याऽऽसन् प्रातिभासिकाः ।
रथा यानानि मार्गाद्याः सर्वे क्षणिकभूमयः[५] ॥१०॥

शिष्यः –
असतो यदि स्वप्नाः स्युस्तफलं च शुभाऽशुभम् ।
मानवा  जाग्रति कथं प्राप्नुवन्तीह तत्फलम् ॥११॥

---

३. स यत्र प्रस्वपिति, न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते । – बृहदारण्यकोपनिषद् ४।३।९,१०

४. स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति ।
–बृहदारण्यकोपनिषद् ४।३।९

५. न तत्र रथा न रथयोगा न पन्थानो भवन्ति । – बृहदारण्यकोपनिषद् ४।३।१०

यदि स्वप्ने स्त्रियं पश्येत् तत्फलं सिद्धिसूचकम्[६] ।
पश्येत् कृष्णान् कृष्णदन्तान् तर्हि तन्मृत्युसूचकम्[७] ॥१२॥

श्रुतिरित्थं निगदति सत्यं स्वप्नफलं मिलेत् ।
कथं स्वप्नो भवेन्मिथ्याऽसत्यं तं कथ्यते कथम् ॥१३॥

कार्यकारण सम्बन्धोऽभेद्यो भवति सर्वतः ।
कार्यं सत्यं दृश्यतेऽत्र कारणं तदसत् कथम् ? ॥१४॥

अत्राऽऽज्ञापयतु ब्रह्मन् ! वादिनां मतमाश्रयन् ।
सत्यं स्वप्नफलं दृष्टं स्वप्नोऽसत्योऽभवत् कथम् ? ॥१५॥

गुरुः –
स्वप्ने यद् यद् दृश्यतेऽत्र किञ्चित्तु सफलायते ।
परं स्वप्नस्त्वसत्यो हि स सदाऽव्यावहारिकः ॥१६॥

स्वप्नोऽस्ति जीवव्यापारो मन्त्रोऽयं घोषति श्रुतेः[८] ।
त्वमित्यस्याऽस्ति सङ्केतादज्ञानाऽवृतमस्त्यपि ॥१७॥

तत्र मन्त्रस्तदेवादिस्तदन्ते निर्दिशत्यपि[९] ।
जीवत्वभावं व्यावृत्तिर्निर्दिशत्येव दृश्यते ॥१८॥

अयं 'तत्त्वं' पदार्थस्याऽध्यायोऽस्ति शोधनात्मकः ।
विचारः क्रियतेऽत्रापि पुनस्तस्यैव तत्वतः ॥१९॥

---

६. यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति ।
समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने ॥– स्मृतिः

७. पुरुषं कृष्णं पश्यति स एनं हन्ति ॥ – छान्दोग्योपनिषद् ५।२।९

८. य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः । – कठोपनिषद् ५।८

९. तदेवं शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिँल्लोकाः श्रिताः सर्वे तदु नान्येति कश्चन । – कठोपनिषद् ५।८।

स्वप्नद्रष्टाऽपि प्राज्ञोऽस्ति स विश्वं रचयत्यपि ।
स्वप्नो निषिध्यते किन्तु हीश्वरो न निषिध्यते ॥२०॥

अंशी स ईश्वरोऽस्त्येव जीवोंऽशस्तस्य नश्वरः ।
जीवः स्रष्टा न भवति सङ्कल्पादीश्वरः समः ॥२१॥

ब्रह्मजीवाऽऽत्मनोर्मध्ये 'तत्वोपाधिं' यदस्ति तत्[10] ।
ज्ञानाऽग्निदग्धे 'तत्त्वे' तु जीवो ब्रह्मैव लक्ष्यते ॥२२॥

ऐश्वर्यभावं जीवस्य ततो देहाऽभिमानतः ।
तिरोभवत्येव तदा तस्याऽज्ञानवशादिह ॥२३॥

जाग्रतो वासनादेव स्वप्नस्य रचनं भवेत् ।
जाग्रततुल्यो दृश्यते तद् भासते क्षणिकोऽपि च ॥२४॥

जीवोऽज्ञानप्रहीणस्तु स्वयं ब्रह्मैव भासते ।
तथैव जाग्रत्काले तु स्वप्नोऽसत्त्वात् पलायते ॥२५॥

तस्मात् स्वप्नस्य सृष्टिस्तु मिथ्याऽस्ति प्रातिभासिकी ।
अतात्त्विकं तादृशं हि मिथ्याऽस्ति वादिनां मतम् ॥२६॥

अस्मिन् प्रकरणे सूत्रषड्कमेकमतं हि तत्[11] ।
स्वप्नस्य दृष्टिर्मिथ्याऽस्ति शंसनं कुरुते श्रुतिः ॥२७॥

---

१०. ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः ।
तस्याभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्यं केवल आत्मकामः ॥
– श्वेताश्वतरोपनिषद् १।११

११. सन्ध्ये सृष्टिराह हि । – ब्रह्मसूत्रम् ३।१।१।१–६

## २. तदभावाधिकरणम् (ब्रह्मसूत्रम् ३।२।२।७–८)

शिष्यः –

गुरो ! नाड्या पुरीतत्या सह ब्रह्म त्रयोऽपि किम् ?
सुषुप्त्यर्थं किमेते हि हेतवः स्युः समुच्चिताः ? ॥२८॥

सुषुप्तौ सर्वकरणं भवत्येव हि संहृतम्[१२] ।
सुषुप्तिकाले जीवोऽपि स्वप्नं चापि न पश्यति ॥२९॥

जीवो नाडीषु संविष्टः पुरीत्यां स्वपित्यपि[१३] ।
ब्रह्मापन्नः सुषुप्तौ तु हृदयान्तर्विशत्यपि ॥३०॥

हृदयान्तः संप्रविष्टो नाड्या नाडीमनुक्रमात्[१४] ।
प्राणैक्यभावमापन्नो जीवः स्वप्नं न पश्यति ॥३१॥

अन्तर्हृदय आकाशे गुहायां प्रविशत्यपि[१५] ।
तदा प्राणैक्यभावः स जीवः शान्तः स्वपित्यपि ॥३२॥

इत्थं समय आपन्नः सति जीवः प्रलीयते[१६] ।
ऐक्यभावः सता जीव आस्ते सद्ब्रह्मरूपकः ॥३३॥

---

१२. तद्यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सुप्तो भवति । – छान्दोग्योपनिषद् ८।६।३

१३. ताभिः प्रत्यवसृप्य पुरीतति शेते । – बृहदारण्यकोपनिषद् २।१।१९

१४. तासु तदा भवति यदा सुप्तः स्वप्नं न कञ्चन पश्यत्यथास्मिन् प्राण एवैकधा भवति । – कौषीतकिब्राह्मणोपनिषद् ४।१९

१५. य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते । – कौषीतकिब्राह्मणोपनिषद् ४।१९

१६. सता सौम्य तदा सम्पन्नो भवति स्वमपीतो भवति । – छान्दोग्योपनिषद् ६।८।१

१७. प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम् ।
– बृहदारण्यकोपनिषद् ४।३।२१

इत्थं प्राज्ञाऽऽत्मना जीव एकी भूतो वसत्यपि[१७] ।
तदा बहिश्चान्तरपि न किञ्चिदपि वेत्तिसः ॥३४॥

तदित्थं बहुनाडीषु निरपेक्षः परस्परम् ।
विभिन्नस्थानमापन्नो जीवो वसति सन्ततम् ॥३५॥

पूर्वपक्षा वदन्त्यत्र प्रमाणैः श्रुतिदर्शितैः[१८] ।
अत्र स्थानेषु भिन्नेषु निरपेक्षो वसत्यपि ॥३६॥

विशेषरूपं विज्ञानं सुषुप्तिः शून्यरूपिणी ।
सा सर्वज्ञसमानाऽस्ति नाडी चैकार्थशंसिता ॥३७॥

एतस्मात् कारणाज्जीवो विकल्पेन यतस्ततः ।
जीवः स्वपिति साऽऽनन्दो भिन्नस्थानोऽपि संसरन् ॥३८॥

अतः सुषुप्तौ जीवोऽयं भिन्ननाडीषु संसरन् ।
विकल्पेन स्वपित्यत्र सानन्दे मग्नवन्निशि ॥३९॥

ब्रह्मन् ! सन्दिग्धपूर्णं तद् वादिनां मतमागतम् ।
जीवः समुच्चितं यद्वा विकल्पेन प्रसुप्यति ॥४०॥

गुरुः –
सुषुप्तिकाले जीवस्तु नैकनाड्यां सरत्यपि[१९] ।
समुच्चिते स्वपिति स तदा स्वप्नं न पश्यति ॥४१॥

---

१८. क. सता सौम्य तदा सम्पन्नो भवति । – छान्दोग्योपनिषद् ६।८।१
ख. सति सम्पद्य न विदुः सति सम्पद्यामहे । – छान्दोग्योपनिषद् ६।९।२

१९. तासु तदा भवति यदा सुप्तः स्वप्नं न कञ्च पश्यतियथास्मिन् प्राण एवैकधा भवति । – कौषीतकिब्राह्मणोपनिषद् ४।१९

रामः स्वपिति पर्यङ्के प्रासादे चाऽपि भण्यते[२०] ।
तदा द्वाभ्यां विभक्तिभ्यां बुध्यते हि समुच्चयः ॥४२॥

तथा जीवोऽपि नाडीषु पुरीतति च ब्रह्मणि[२१] ।
समुच्चयेन स्वपिति वाचं गिरति च श्रुतिः ॥४३॥

सुषुप्तौ प्रगतो जीवो नाडीष्वन्तर्विशत्यपि[२२] ।
तदा पाप्मा न स्पृशति तेजसा मिलति स्वयम् ॥४४॥

तेजः स्वरूपं ब्रह्माऽपि तेनैकीभूतरूपकः[२३] ।
अपाप्मना ब्रह्मणा स जीवो मिलति तत्समः ॥४५॥

स्वच्छमस्ति हृदाकाशं दहरे सुप्यति स्वयम्[२४] ।
पुरीतत्या व्रजति स जीवः स्वपिति निर्भयम् ॥४६॥

जीवः सवेष्ट्य हृदयं तदन्तःस्थः स्वपित्यपि ।
पुरीतद् भाष्यं भणति ब्रह्म सम्पद्यते तदा[२५] ॥४७॥

---

२०. नानार्थत्वसमुच्चयोरप्येकविभक्तिनिर्देशदर्शनात् प्रासादे शेते पर्यङ्के शेते इत्येवमादिषु, तथेहापि नाडीषु पुरीतति ब्रह्मणि च स्वपितीत्येतदुपपद्यते समुच्चयः ।
– ब्रह्मसूत्रशाङ्करभाष्यम्

२१. आसु तदा नाडीषु सृप्तो भवति । – छान्दोग्योपनिषद् ८।६।३

२२. नाडीषु सृप्तो भवति, तं न कश्चन पाप्मा स्पृशति, तेजसा हि तदा सम्पन्नो भवति ।
– छान्दोग्योपनिषद् ८।६।३

२३. क. ब्रह्मैव तेज एव । – बृहदारण्यकोपनिषद् ४।४।७
ख. सर्वे पाप्मानोऽतो निवर्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकः ।
– छान्दोग्योपनिषद् ८।४।२

२४. क. य एषोऽन्तर्हृदय आकाशस्तस्मिञ्शेते । – बृहदारण्यकोपनिषद् २।१।१७
ख. हृदयाकाशस्य च ब्रह्मत्वं समधिगतम् 'दहर उत्तरेभ्यः' (ब्रह्मसूत्रम् १।३।१४) तथा नाडीपुरीतति तत्समुच्चयोऽपि 'ताभिः प्रत्यवसृप्य पुरीतति शेते' (बृहदारण्यकोपनिष्द् २।१।१९) इत्येकवाक्योपादानादवगम्यते सत्प्राज्ञयोश्च प्रसिद्धमेव ब्रह्मत्वम् । – शाङ्करभाष्यम्

स्थानत्रयं सुषुप्तेश्च प्राज्ञो ब्रह्मच सत् तथा ।
भाष्यमुद्घोषति तेन भवत्येव समुच्चयः ॥४८॥

नाडी पुरीतति ब्रह्म त्रितयं हि समुच्चयः ।
नाडी पुरीततिद्वारं सुप्तिस्थानं तु ब्रह्म हि ॥४९॥

जीवस्यैकोऽस्ति चाऽऽधारः सुप्तिस्थानं तु ब्रह्म हि ।
आधाराऽऽधेयो नैवाऽयं तादात्म्योऽस्ति यथार्थतः ॥५०॥

एकीभूतो भवत्येष जीवस्तेन सता सह[२६] ।
सषुप्तौ तु प्रलीनोऽस्ति श्रुतिरुद्गिरति स्वयम् ॥५१॥

जीवः सताऽनेन सह स्वरूपमभिपद्यते[२७] ।
तदाऽद्वैतं भवत्येव ब्रह्म सम्पद्यतेऽद्वयम् ॥५२॥

आत्मा सुषुप्तेराधारः स्वापप्रकरणोदितः ।
एष पश्नोत्तरेणैव श्रुतिवाक्यं विनिश्चितम् ॥५३॥

सतः समागतो जीवोऽज्ञात्वा स्वं भ्रमतीह सः[२८] ।
श्रुतिर्जीवाऽऽत्मनो र्नित्यसम्बन्धोऽस्तीति घोषति ॥५४॥

यथा वन्हेर्विस्फुलिङ्गा उदयन्ते कणा इव[२९] ।
आत्मनो निर्गताः सन्ति प्राणा जीवाश्च नित्यशः ॥५५॥

---

२५. क. पुरीतति शेते । – बृहदारण्यकोपनिषद् २।१।१९
ख. पुरीतदिति हृदयपरिवेष्टनमुच्यते । – बृहदारण्यकोपनिषद्, शाङ्करभाष्य २।१।१९
ग. ताभिः प्रत्यवसृप्य पुरीतति शेते । – बृहदारण्यकोपनिषद् २।१।१९
२६. सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति । – छान्दोग्योपनिषद् ६।८।१
२७. तत्केन कं विजानीयात्, यत्र वाऽन्यदिव स्यात्तत्रान्योऽन्योऽन्यत् पश्येत् ।
– बृहदारण्यकोपनिषद् २।४।१४, ४।३।३१
२८. क. कुत एतदागात् । – बृहदारण्यकोपनिषद् २।१।१६
ख. सत आगम्य न विदुः सत आगच्छामहे । – छान्दोग्योपनिषद् ६।१०।२

सुषुप्ते राश्रयस्यापि विकल्पो न हि दृश्यते ।
आत्माकदाचिन्नाडीषु कदाचित्तु पुरीतति ॥५६॥

नाडी, आत्मा, पुरीतत् च सुषुप्त्यर्थं प्रकल्पितम् ।
समुच्चितं हि त्रिस्थानं त्रयं नैतद् विकल्पितम् ॥५७॥

नाडीद्वारा पुरीतत्सु ततो हृद्ब्रह्मणि स्थितः ।
सुषुप्तिसमये जीवो वसति ब्रह्मणा सह ॥५८॥

विज्ञानस्याऽस्य द्रष्टव्यं निश्चितं हि प्रयोजनम् ।
जीवो ब्रह्मैव मुक्तोऽस्ति जाग्रत् स्वप्नादपि पर ॥५९॥

मन्यते चेद् विकल्पं तन्मतं दोषैः प्रसज्यते ।
अष्टौ दोषाः प्रसक्ताः स्युर्भवेद् ग्राह्यः समुच्चयः ॥६०॥

अत्राऽधिकृतसूत्राभ्यां[३०] विकल्पस्तु निषेधितः ।
समुच्चितो हि श्रुत्युक्तस्तैः सर्वैरनुमन्यते ॥६१॥

## ३. कर्मानुस्मृतिशब्दविध्यधिकरणम् (ब्रह्मसूत्रम् ३।२।३।९)

शिष्यः –
सुषुप्तेरनु यो जीवो जागर्ति किमु पूर्ववत् ?
न वा किमन्यो जागर्ति सन्दिग्धं हृदयं मम ॥६२॥

पूर्वपक्षावदन्त्यत्र जीवोऽन्यः समुदेत्यतः ।
ब्रह्मापन्नः स जीवस्तु कथमुत्थाय जागृतः ? ॥६३॥

अनन्ते जलराशौ योऽमिलज्जलकणः पुनः ।
आयाति किमु नाऽऽयाति ? प्रत्यागन्तुमसम्भवः ॥६४॥

---

२९. यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः ।
– बृहदारण्यकोपनिषद् २।१।२०

तथा सुषुप्तौ यो जीवो ब्रह्मीभूतोऽभवत् पुनः ।
ब्रह्मीभूतः स हि कथं प्रत्याऽऽयातुं क्षमो भवेत् ? ॥६५॥

अतः सुषुप्तेः पश्चात् तु ह्यन्यो जीवः समुत्थितः ।
कृत्वा पुनर्नवं कर्म स नवं जीवनायते ॥६६॥

तदित्थं पूर्वपक्षाणां मतमायाद् यदाऽत्र तु ।
सुषुप्त्यनन्तरं बुद्धो जीवः पूर्वोऽस्ति वा नवः ? ॥६७॥

गुरुः –
सुषुप्तिपश्चाद् यो जीव उत्थितः स पुरातनः ।
कर्मानुस्मरणादेव स एव पुनरुत्थितः[31] ॥६८॥

ब्रुवते श्रुतयो नैकाः प्रसुप्तो यः स उत्थितः[32] ।
अन्यथा कर्मविद्याया विधिर्नैरर्थ्यमाप्यते[33] ॥६९॥

सुषुप्तौ दहराकाशे ब्रह्मीभूयाऽपि श्वस्तने ।
उपाधि दोषाज्जागर्ति लभते स स्मृतिं पुनः ॥७०॥

---

३०. तदभावो नाडीषु तच्छ्रुतेरात्मनि च । – ब्रह्मसूत्रम् ३।२।२।७–८
३१. कर्मानुस्मृतिशब्दादिभ्यः पञ्चभ्यो हेतुभ्यः । सुप्तो भूय उत्थाय शिष्टं तत्करोति, अत्र अनु प्रत्यभिज्ञां सूचयति । – ब्रह्मसूत्रम्, शाङ्करभाष्यम्
३२. क. पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव ।
– बृहदारण्यकोपनिषद् ४।३।१६
ख. इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति ।
– छान्दोग्योपनिषद् ८।३।२
ग. त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तदा भवन्ति । – छान्दोग्योपनिषद् ६।९।३
३३. अकृताभ्यागमकृतविप्रणाशौ च दुर्निवारावनयोत्थानपक्षे स्याताम्, तस्मात् स एवोत्तिष्ठति नान्य इति । – ब्रह्मसूत्रम्, शाङ्करभाष्यम्

अतः प्रसुप्तो यो जीवः स प्रत्यावर्तते पुनः ।
इह सर्वांशरूपेण खण्डितं वादिनां मतम् ॥७१॥

अत्राऽधिकरणे सूत्रं कर्मानुस्मृतितः स हि[३४] ।
जीव उत्तिष्ठति स्मृत्वा स्वकर्म वदति श्रुतिः ॥७२॥

### ४. मुग्धेऽर्धसम्पत्यधिकरणम् (ब्रह्मसूत्रम् ३।२।४।१०)

शिष्यः –

जाग्रत्स्वप्नादिकाः का ता मूर्च्छाऽवस्था ? न वा किमु ?
सन्देग्धि हृदयं मेऽत्र सुस्पष्टे ज्ञायते न हि ॥७३॥

प्रोच्यते वादिभिर्जाग्रत् सुषुप्तिस्वप्नतः परा ।
अवस्था दृश्यते नान्या मूर्च्छा क्वाऽन्तर्भवा गुरो ! ? ॥७४॥

आज्ञापयत्वत्र भवान् कुत्र मुग्धः प्रवर्तते ? ।
जाग्रति वा सुषुप्तौ वा स्वप्नायां वक्तु हे गुरो ! ॥७५॥

गुरुः –

सुषुप्तौ नाऽपि स्वप्ने न जाग्रति चापि नैव सा ।
मूर्च्छाऽवस्था समायति वादिनः प्रलपन्तु किम् ? ॥७६॥

मुग्धो न निश्चितं किञ्चित् जाग्रत् स्वप्नं न वेत्ति सः ।
न पश्यति न जानाति तमसि प्रविलीयते ॥७७॥

सुषुप्तौ तु स जीवात्मा ब्रह्म सम्पदमश्नुते[३५] ।
स्वस्थो निश्वसति मिथ्या द्वैतभावान्निवर्तते ॥७८॥

---

३४. स एव तु कर्मानुस्मृतिशब्दविधिभ्यः । – ब्रह्मसूत्रम् ३।२।३।९
३५. क. सता सोम्य तदा सम्पन्नो भवति । – छान्दोग्योपनिषद् ६।८।१
ख. नैतं सेतुमहोरात्रे तरत न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतम् ।
– छान्दोग्योपनिषद् ८।४।१
ग. अत्र स्तेनोऽस्तेनो भवति । – बृहदारण्यकोपनिषद् ४।३।२२

मुग्धस्य त्विह सर्वाङ्गं वक्त्रं चापि प्रकम्पते ।
नेत्रे विस्फाटितो दृष्टो भीतः कष्टकरस्थितौ ॥७९॥

एतस्मात् कारणान् मूर्च्छा सुषुप्तिस्तु न सा क्वचित् ।
जाग्रत् स्वप्नोऽपि नास्त्येव मृत्युश्चापि न सा क्वचित् ॥८०॥

भणन्ति ब्रह्मवेत्तारो मुग्धता परिशेषतः ।
अर्धसम्पत्तिरूपा सा स्वीकार्याऽस्तीह वस्तुतः ॥८१॥

अत्राधिकरणे सूत्रमेकं तां परिशेषतः[३६] ।
मुग्धतामर्धसम्पत्तिं वक्ति शास्त्रानुसारतः ॥८२॥

## ५. उभयलिङ्गाधिकरणम् (ब्रह्मसूत्रम् ३।२।५।११–२१)

शिष्यः –

अहो ! सुषुप्त्यवस्थायां सर्वे शान्ता उपाधयः ।
जीवात्मा ब्रह्मणा सार्धमेकरूपं प्रपद्यते ॥८३॥

कुरुते श्रुतिसामर्थ्यं ब्रह्मस्वरूपनिर्णयम्[३७] ।
श्रुतयोभयलिङ्गत्वात् सविशेषा हि वस्तुतः ॥८४॥

निर्विशेषाः सन्ति कति श्रुतयः सविशेषकाः[३८] ।
सन्देहो हृदये ब्रह्म द्विलिङ्गं वैकलिङ्गकम् ॥८५॥

किमु वेदाऽन्यलिङ्गी तद् ब्रह्म किं निर्विशेषकम् ?
पूर्वपक्षाः प्रब्रुवते ब्रह्म तूभयलिङ्गकम् ॥८६॥

---

३६. **मुग्धेऽर्धसम्पत्तिः परिशेषात् । – ब्रह्मसूत्रम् ३।२।४।१०**

३७. **सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः । – छान्दोग्योपनिषद् ३।१४।२**

३८. **अस्थूलमनण्वह्रस्वमदीर्घम् । – बृहदारण्यकोपनिषद् ३।८।८**

गुरो ! वदतु किं ब्रह्म निर्विशेषं विशेषकम् ?
यद्वा ब्रह्मा भया लिङ्गी ? किमु वाऽन्यतरं हि तत् ? ॥८७॥

रूपवच्चापि किं ब्रह्म ? विरूपं किमिदं गुरो !
अत एव सदा ब्रह्म सरूपं च निरूपकम् ॥८८॥

किं सदा रूपवद् ब्रह्म किं वा तद् रूपहीनकम् ?
ब्रह्म किं वाऽनेकरूपं स्वरूपरहितं किमु ? ॥८९॥

वादिनः प्रवदन्त्यत्र अलिङ्गी ब्रह्म लिङ्गवत् ।
श्रुतिर्वदति तद् ब्रह्म चतुष्पाद् बहुरूपकम् ॥९०॥

गुरुः –
लिङ्गहीनं न तद ब्रह्म न तदस्ति च लिङ्गवत् ?
मायोपाधिगतं ब्रह्म नैकलिङ्गात्मकं भवेत्[३९] ॥९१॥

जपाकुसुमसान्निध्ये न जपाकुसुमाङ्कितः ।
दृश्यते स्फटिको रक्तः श्वेतोऽपि तदुपाधिना ॥९२॥

रूपादनु पुनारूपं नैकं रूपं प्रलाति तत्[४०] ।
निरूपं ब्रह्म तद् नित्यं स्वच्छं शान्तं सनातनम् ॥९३॥

अभेदे यान्ति ते भेदाः श्रुतयो निगदन्त्यपि[४१] ।
उपासनार्थं ते भेदा अभेदोपासका वयम् ॥९४॥

---

३९. इन्द्रो मायाभिः पुरुरूप ईयते । – बृहदारण्यकोपनिषद् २।५।१९
४०. रूपं रूपं प्रतिरूपो बभूव । – बृहदारण्यकोपनिषद् २।५।१९
४१. यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजो-मयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा । – बृहदारण्यकोपनिषद् २।५।१

शाखा प्रशाखा भेदस्य निन्दयन्ति परं मतम्[४२] ।
प्रतिपादयन्ति भृशमभेदं परमात्मनः ॥९५॥

निषेधयन्ति श्रुतयो नेतिनेतीति वाक्यतः[४३] ।
अभेदं प्रतिपाद्यन्ते नानात्वं खण्डयन्त्यपि ॥९६॥

सूर्यप्रकाशे वंशोऽपि ऋजुर्वक्रश्च दृश्यते ।
नैकाकारो दृश्यतेऽपि विविधोपाधिसंवृतः ॥९७॥

सदा भवति साकारो निराकारः कदाचन ।
उपासनार्थं नानात्वं शंसितास्तदुपाधयः ॥९८॥

सैन्धवस्य पिण्डमिव बहिरन्तः समानताम् ।
आस्वाद्यं ब्रह्म भवति प्रज्ञानघनदुस्तरम् ॥९९॥

न दृष्यते ब्रह्ममूर्तं तच्चाऽमूर्तं न लक्षते[४५] ।
नेति नेतीति वाक्याभ्यां निषेधं कुरुते श्रुतिः ॥१००॥

व्यक्तं कार्यादिकं ब्रह्म ह्यव्यक्तं ब्रह्महेतुकम्[४६] ।
मनसा सह वाणी च तत्र गत्वा निवर्तते ॥१०१॥

---

४२. क. मनसैवेदमाप्तव्यं नेह नानास्ति किञ्चन ।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥ – कठोपनिषद् ४।११
ख. भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ।
– श्वेताश्वतरोपनिषद् १।१२
४३. क. अशब्दमस्पर्शमरूपमव्ययम् । – कठोपनिषद् ३।१५
ख. दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । – मुण्डकोपनिषद् २।१।२
ग. तदेतद् ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः ।
– बृहदारण्यकोपनिषद् २।५।१९
४४. स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव ।
– बृहदारण्यकोपनिषद् ४।५।१३
४५. अथात आदेशो नेति नेति । – बृहदारण्यकोपनिषद् २।३।६

श्रुतयः कुर्वते चेत्थं निषधमुखवर्णनम्[४७] ।
अतद् विकारं निषिध्य तद् ब्रह्म शंसितं भवेत् ॥१०२॥

नैकानि सूर्यबिम्बानि दृश्यन्ते तदुपाधिभिः[४८] ।
प्रत्यहं दृश्यते ब्रह्म तन्मायोपाधिना बहु ॥१०३॥

यथा दार्ष्टान्तविषये दृष्टान्तो दीयते क्वचित् ।
कियन्मात्रं मिलत्येव पूर्णांशस्तु मिलेत् कुतः ? ॥१०४॥

निर्विशेषः स आत्मैव विशति सविशेषतः ।
विभिन्नेष्विह देहेषु विशति सूक्ष्मरूपधृक्[४९] ॥१०५॥

वेदवाक्यस्य तात्पर्यो नियोगे नैव लक्ष्यितः ।
वेदवाक्यं तु भवति ज्ञाननिष्ठं सनातनम् ॥१०६॥

नीरूपं भवति ब्रह्म रूपं तूपाधिनाऽऽगतम् ।
श्रुतयो वर्णयन्त्य नीरूपब्रह्मणः स्थितिम् ॥१०७॥

अत्राधिकृतसूत्राणि सन्ति चैकादश पुनः[५०] ।
खण्डनं कुर्वते तानि वादिनामुभयं मतम् ॥१०८॥

---

४६. अन्यदेव तद्विदितादथो अविदितादधि । – केनोपनिषद् १।३
४७. यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । – तैत्तिरीयोपनिषद् २।४।१
४८. क. यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् ।
उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा । – श्रुतिः
ख. एक एव हि भूतात्मा भूते भूते व्यवस्थितः
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ।– ब्रह्मबिन्दूपनिषद् १२
४९. क. पुरेश्चक्रे द्विपदः पुरेश्चक्रे चतुष्पदः ।
पुरेः स पक्षी भूत्वा पुरेः पुरुष आविशत् । – बृहदारण्यकोपनिषद् २।५।१८
ख. अनेन जीवेनात्मनानुप्रविश्य नामरूपे करवाणि । – छान्दोग्योपनिषद् ६।३।२

## ६. प्रकृतैतावत्वाधिकरणम् (ब्रह्मसूत्रम् ३।२।६।२२–३०)

शिष्यः –

'द्वे वा व ब्रह्मणो रूपे' श्रुतौ यत् कीर्तितं हि तत्[५१] ।
मूर्ताऽमूर्ते हि द्वे रूपे ब्रह्मणो विद्धि सर्वतः ॥१०९॥

'नेति नेती'ति वाक्याभ्यां यदाऽऽदिशति च श्रुतिः[५२] ।
सन्दिग्धं मानसं मेऽत्र किं निषेधति सा श्रुतिः ॥११०॥

वादिनः कथयन्त्यत्र नकाराभ्यामिह श्रुतिः ।
प्रपञ्चेन सहैवात्र ब्रह्मणोऽपि निषेधति ॥१११॥

गुरो ! वदत्वत्र किमु ? प्रपञ्चं ब्रह्म च द्वयम् ।
सकृन्निषेधति श्रुतिः साश्चर्यं मानसं मम ॥११२॥

गुरुः –

तया श्रुत्या सकृद्वारं तद्द्वयं न निषेधति ।
चेन्निषेधति तर्ह्यत्र शून्यवादः प्रसज्यते ॥११३॥

श्रुतिवाक्यैरपि कथं सद्ब्रह्म प्रतिषिध्यते ।
सर्वाऽत्मा व्यापकं ब्रह्म तन्न कोऽपि निषेधति ॥११४॥

ब्रवाणि त्वामहं ब्रह्मेत्युक्त्वोपक्रम्य किं पुनः[५३] ।
श्रुतिर्निषेधति ब्रह्म ? नोपयुक्तं प्रपद्यते ॥११५॥

---

५०. न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि । – ब्रह्मसूत्रम् ३।२।५।११–२१

५१. द्वे वाव ब्रह्मणो रूपं मूर्तञ्चैवामूर्तञ्च । मर्त्यञ्चामर्त्यञ्च स्थितञ्च यच्च तच्च ।
– बृहदारण्यकोपनिषद् २।३।१

५२. अथात आदेशो नेति नेति नह्येतस्मादिति नेत्यन्यत्परमस्ति ।
– बृहदारण्यकोपनिषद् २।३।६

सर्वात्मा भाति सर्वत्र कथं ब्रह्म निषिध्यते ।
यो निषेधति सद् ब्रह्म स स्वयं हि निषिध्यते ॥११६॥

त्रिकालाऽबाधितं ब्रह्म तदसन्न कदाचन[५४] ।
ब्रह्माऽसद् वक्ति योऽबुध्वा स स्वयं हि भवेदसत् ॥११७॥

'अस्तीत्येव वदेत्' कर्ता तदा ब्रह्मोपलभ्यते[५५] ।
ब्रह्म विद् भवति ब्रह्म यदेषा परमार्थता[५६] ॥११८॥

नेति वाक्ये समायाते वीप्सायां द्वे क्रमादिह ।
कार्यकारणयोरन्ते तन्मायां ते निषेधतः ॥११९॥

सत्यस्यापि हि तत्सत्यं शुद्धं ब्रह्म निरञ्जनम्[५७] ।
तद् ब्रह्म नेन्द्रियैर्ग्राह्यं पूर्णं सत् चित् सनातनम्[५८] ॥१२०॥

बहिर्मुखानीन्द्रियाणि ब्रह्माऽसृजदतो हि तत्[५९] ।
न पश्यन्ति न शृण्वन्ति न जिघ्रन्ति स्पृशन्ति नो ॥१२१॥

---

५३. ब्रह्म ते ब्रवाणि । – बृहदारण्यकोपनिषद् २।१।१
५४. असन्नेव स भवति, असद् ब्रह्मेति वेद चेत् । – तैत्तिरियोपनिषद् २।६।१
५५. अस्तीत्येवोपलब्धव्या । – कठोपनिषद् ६।१३
५६. ब्रह्मविदाप्नोति परम् । – तैत्तिरीयोपनिषद् २।१।१
५७. सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेव सत्यम् । – बृहदारण्यकोपनिषद् २।१।२०
५८. क. न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा ।
– मुण्डकोपनिषद् ३।१।८
ख. स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यते । – बृहदारण्यकोपनिषद् ३।९।२६
ग. यत्तदद्रेश्यमग्राह्यम् । – मुण्डकोपनिषद् १।१।६
घ. यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलये ।
– तैत्तिरीयोपनिषद् २।७।१
ङ. अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते । – श्रीमद्भगवद्गीता २।२५

कश्चिद्धीरः सदात्मा स्यादन्तर्दृष्टिं ददाति चेत् ।
पश्यति प्रत्यगात्मानं सत्यं ब्रह्म परात्परम् ॥१२२॥

मायाभेदं निरस्यैतद् विद्यया यः प्रपश्यति ।
जीवमासीद् ब्रह्म पूर्वमन्त्ये भवति ब्रह्म सः[६०] ॥१२३॥

भेदः काल्पनिकोऽस्त्येव ह्यभेदः पारमार्थिकः ।
नेति वाक्यं वदत्येवाऽद्वैतं तद् ब्रह्म तात्विकम् ॥१२४॥

अत्राधिकरणे सूत्रनवकं समुपैत्य हो[६१] !
ब्रह्माऽतिरिक्तं न किञ्चिदस्तीति वदतीत्यपि ॥१२५॥

## ७. पराधिकरणम् (ब्रह्मसूत्रम् ३।२।७।३१–३७)

शिष्यः –
प्रपञ्चशून्यं सद्ब्रह्म गुरो ! निर्धारितं हि यत् ।
ब्रह्मभिन्नाऽन्यतत्त्वानि सन्ति वा नोत्सुकं मनः ॥१२६॥

---

५९. क. पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ् पश्यति नान्तरात्मन् ।
कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥ – कठोपनिषद् ४।१
ख. ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः ।
– मुण्डकोपनिषद् ३।१।८
६०. क. स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवति । – मुण्डकोपनिषद् ३।२।९
ख. ब्रह्मैव सन् ब्रह्माप्येति । – बृहदारण्यकोपनिषद् ४।४।६
६१. क. प्रकृतैतावत्वं हि प्रतिषेधति ततो ब्रवीति च भूयः । – ब्रह्मसूत्रम् ३।२।६।२२–३०
ख. नान्योऽतोऽस्ति द्रष्टा । – बृहदारण्यकोपनिषद् ३।७।२३
ग. अथात आदेशो नेति नेति । – बृहदारण्यकोपनिषद् २।३।६
घ. तदेतद् ब्रह्मापूर्वमनपरमनन्तरमबाह्यम् । – बृहदारण्यकोपनिषद् २।५।९

तदत्र पूर्वपक्षैस्तु श्रुतयोऽत्र प्रदर्शिता ।
[६२]सेतुतां दर्शयन्तस्ते ब्रह्मण्युन्मानतामपि[६३] ॥ १२७॥

ब्रह्माऽतिरिक्तान्यन्यानि वस्तूनि सकलान्यपि ।
दृश्यन्ते यदि तद् ब्रह्माऽद्वैतं सच्चित् कथ भवेत् ॥१२८॥

भवानाज्ञापयत्वत्र ब्रह्मणोऽन्यं न वस्तु किम् ?
अस्ति चेद् वदतु नो चेत् पूर्वपक्षा वदन्ति किम् ? ॥१२९॥

गुरुः –
ब्रह्माऽतिरिक्तवस्तूनि प्रमाणविरहान्यतः ।
न भवन्ति ब्रह्म, तेषां सर्वेषां हेतुरस्ति सत् ॥१३०॥

उपादानं निमित्तं चाऽभिन्नं ब्रह्माऽस्ति कारणम् ।
ब्रह्माऽतिरिक्तवस्तूनि वार्यन्ते, ब्रह्म सद् भवेत् ॥१३१॥

सर्वेषां सर्ववस्तूनां सर्वात्मा ब्रह्म कारणम् ।
कार्यकारणयोर्भेदो नास्ति ब्रह्माऽस्ति कारणम्[६४] ॥१३२॥

सद् ब्रह्माऽऽसीत् सृष्टिपूर्वमुद्घोषति श्रुतिः सदा[६५] ।
ब्रह्माऽतिरिक्तं किमपि वस्तु नास्ति विदाङ्कुरु ॥१३३॥

---

६२. अथ य आत्मा स सेतुर्विधृतिः । – छान्दोग्योपनिषद् ८।४।१
६३. क. तदेतत् ब्रह्म चतुष्पादष्टाशफं षोडशकलम् । – छान्दोग्योपनिषद् ८।४।१
ख. सता सोम्य तदा सम्पन्नो भवति । – छान्दोग्योपनिषद् ६।८।१
ग. शरीर आत्मा । – तैत्तिरीयकोपनिषद् २।३।१
घ. प्राज्ञेनात्मना सम्परिष्वक्तः । – बृहदारण्यकोपनिषद् ४।३।२१
ङ. अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते । – छान्दोग्योपनिषद् १।७।५
६४. अनन्यत्वं च कारणात् कार्यस्य । – शाङ्करभाष्यम्, ब्रह्मसूत्रम् ३।२।७।३१
६५. सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । – छान्दोग्योपनिषद् ६।२।१

ब्रह्मैवाऽस्ति सर्वसेतुः सृष्टिस्थितिनिवारकम् ।
स्थावराणां जङ्गमानां जगतां च विधायकम् ॥१३४॥

आब्रह्मस्तम्बपर्यन्तं जन्मदाताऽपि चाऽन्तकः ।
ब्रह्माऽस्ति सर्वजगतां सृष्टिस्थितिविधायकम् ॥१३५॥

ब्रह्म विद्धि प्रतीकं तन्मनः कल्पं चतुष्पदम् ।
उपासनार्थमस्त्येतत् परिच्छिन्नं प्रकल्पितम् ॥१३६॥

विनोपाधिं न जानीते ज्ञातुं दुष्करमस्ति तत् ।
उन्मानं च परिच्छिनं ब्रह्मणि न वितिष्ठतः ॥१३७॥

ब्रह्मणो भेदचर्चा तु सोपाधिवशतोऽभवत् ।
परन्तु तादृशं नास्ति तत्स्वरूपं न भिद्यते ॥१३८॥

सुषुप्तिकाले भवति चैकात्म्यं ब्रह्म जीवयोः ।
न तत्र जीवो मुख्योऽस्ति मुख्यं ब्रह्म चिदात्मकम्[६६]॥१३९॥

अतद्व्यावृत्तये तत्र सेतुत्मुपचर्चितम् ।
निषेधशेषे यच्छिष्टं ब्रह्माऽद्वैतं विदाङ्कुरु ॥१४०॥

वेदे तद्व्यपदेशार्थं सेतुत्वादिप्रकल्पितम् ।
वस्त्वन्तरं निषिद्धं तद् भेदेषु नास्ति मुख्यता ॥१४१॥

श्रुतिस्मृतिभ्यां यद् व्यक्तं नीलं खमिव ब्रह्म तत्[६७] ।
यथाऽऽकाशं तथाऽऽत्माऽयमद्वैतं ब्रह्म विद्धि तत्[६८] ॥१४२॥

---

६६. स्वमपीतो भवति । – छान्दोग्योपनिषद् ६।८।१
६७. क. योऽयमन्तः पुरुष आकाशः । – छान्दोग्योपनिषद् ३।१२।८
ख. यो ऽयमन्तर्हृदय आकाशः । – छान्दोग्योपनिषद् ३।१२।९
ग. ज्यायानाकाशात् । – छान्दोग्योपनिषद् ३।१२।९
६८. आकाशवत् सर्वगतश्च नित्यः, ज्यायान् दिवः । – छान्दोग्योपनिषद् ३।१४।३

ब्रह्माऽतिरिक्तवस्तूनि सर्वाण्यपि निषेधति[६९] ।
श्रुतिर्ब्रह्मैवेदमिति भेदान् व्यावर्तयत्यपि[७०] ॥१४३॥

तदित्थं पूर्वपक्षाणामन्यवस्तुप्रकल्पनम् ।
श्रुतिस्मृतिभ्यां न्यायेन भवत्येव विखण्डितम् ॥१४४॥

अत्राऽधिकरणे सूत्रसप्तकं समुदाहृतम्[७१] ।
ब्रह्माऽतिरिक्तमुक्तं यत् प्रमाणैरिह खण्डितम् ॥१४५॥

## ८. फलाधिकरणम् (ब्रह्मसूत्रम् ३।२।८।३८–४१)

शिष्यः –
ईशितुश्चेशितव्यस्य यो भेदो ब्रह्मणि स्थितः ।
चिन्तनं कुरुतेऽत्रैव लोकोऽयं व्यावहारिकः ॥१४६॥

इष्टाऽनिष्टाऽदिकं सर्वमाधारं सविचार्य च ।
ईश्वरः फलदाताऽस्ति विना भेदेन कर्मणाम् ॥१४७॥

आयान्मनसि सन्देहः फलदाताऽस्ति कः कथम् ?
द्वौ सन्निकर्षमायातावदृष्टमथवेश्वरः ॥१४८॥

मीमांसकाः प्रब्रुवते दाताऽपूर्वः सदैव हि ।
ईश्वरः सक्षिरूपोऽस्ति दाता न भवति क्वचित् ॥१४९॥

---

६९. नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः । – श्रीमद्भगवद्गीता २।२४

७०. क. अथात आदेशो नेति नेति । – बृहदारण्यकोपनिषद् २।३।६
अथात आत्मादेश एव आत्मैवाधस्तात्, अहमेवाधस्तात् ।
– छान्दोग्योपनिषद् ७।२५।२, ७।२५।१
ख. सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद । नेह नानास्ति किञ्चन । तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम् ।
– बृहदारण्यकोपनिषद् २।४।६, ४।४।१९, २।५।१९

गुरो ! वदतु हे ब्रह्मन् ! अपूर्वो वा किमीश्वरः ?
कर्मणां फलदाताऽस्ति तददृष्टं किमीश्वरः ? ॥१५०॥

गुरु :–
यादृक् कर्माऽस्ति जीवानां तादृगेव फलं भवेत् ।
ईश्वरः प्रददात्येवमवैषम्येन तत्फलम् ॥१५१॥

अपूर्वस्तु जडो भाति प्रददाति फलं कथम् ?
विनाशिकर्मजन्यः स ह्यपूर्वः फलदः कथम् ? ॥१५२॥

शास्त्रादिषु न कुत्राऽपि चाऽस्तित्वं तस्य दृश्यते ।
अर्थापत्तिरीशसिध्यै नास्ति तस्य स नाशवान् ॥१५३॥

न युक्तीनां बलञ्चात्र फलानां हेतुरीश्वरः ।
अस्मिन्नर्थे श्रुतिर्वक्ति फलदः परमेश्वर[७२] ॥१५४॥

मीमांसको जैमिनिस्तु वक्ति धर्मः फलप्रदः ।
स्वर्गकामो यजेताऽत्र यदि कर्ता तदिच्छति[७३] ॥१५५॥

'न कर्मफलदो धर्मो' वक्तीदं बादरायणः ।
धर्मो दातुं न शक्नोति हीश्वरः फलदः सदा ॥१५६॥

धर्माऽधर्मादिकर्माणि हीश्वरः कारयत्यपि[७४] ।
धर्मे कृते स्वर्गदाता ह्यधर्मे निरयप्रदः ॥१५७॥

---

७१. परमतः सेतून्मानससम्बन्धभेदव्यपदेशेभ्यः । – ब्रह्मसूत्रम् ३।२।७।३१–३७
७२. स वा एष महानज आत्मान्नादो वसुदानः । – बृहदारण्यकोपनिषद् ४।४।२४
७३. स्वर्गकामो यजेत । – ताण्डिश्रुतिः १६।१५।५

श्रुतयः स्मृतयः सर्वा ईश्वरः फलदोऽवदन्[७५] ।
अपूर्वस्तु जडो दद्यात् कथं ताः खण्डयन्त्यपि ॥१५८॥

लोकेऽपि स्वामिनः स्वस्य सेवकेभ्यः फलप्रदाः ।
यथोचितं ददति ते यथाकर्म तथा फलम् ॥१५९॥

ईश्वरोऽपि तथा कुर्वन् तेभ्यो यागादिजं फलम् ।
रक्षन् स्वकीयसंस्कारे स तेम्यः फलदोऽभवत् ॥१६०॥

कर्मानुसारं फलदः कर्मिभ्यो भवतीश्वरः ।
वैषम्यदोषो नाऽऽयाति कर्मिषु फलदं शिवम् ॥१६१॥

कर्मणां फलदाताऽस्ति हीश्वरः सर्वचेतनः ।
अचेतनो जडोऽपूर्वः फलदो नास्ति सोऽक्षमः ॥१६२॥

लोकः सृष्टिर्जन्ममृत्युः सर्व एवेशहेतुकाः ।
लोकैः कर्मानुसारं तत्फलं जन्म च लभ्यते[७६] ॥१६३॥

प्रयत्नं प्राणिनां दृष्ट्वा कर्मणां फलदः शिवः ।
ईश्वरे फलहेतुत्वं कर्मणां विद्यतेऽनिशम् ॥१६४॥

अतो वैषम्यनैर्घृण्यौ दोषौ न लगतः शिवे ।
सुखदुःखादयो भावा विद्यन्ते जीवकर्मसु ॥१६५॥

---

७४. एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते ।
एष उ एवासाधु कर्म कारयति तं यमधो निनीषते । – श्रुतिः

७५. यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥
स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान्मयैव विहितान् हि तान् ॥ – श्रीमद्भगवद्गीता ७।२१

कर्मणां फलदाता स ईश्वरः श्रुतिसम्मतः ।
जीवस्तु फलभोक्ताऽस्ति यथा कर्म यथा श्रुतम् ॥१६६॥

अपूर्वे फलदातृत्वं नास्तीति प्रतिपादितम् ।
तदित्थं पूर्वपक्षाणां मतं भवति खण्डितम् ॥१६७॥

अत्राधिकरणे दृष्टमस्ति सूत्रचतुष्टयम्[७७] ॥
कर्मणां फलदाताऽस्ति ह्येक एवेश्वरो महान् ॥१६८॥

ब्रह्मसूत्रे कारिकायां तृतीयाध्यायवर्णितः ।
पादो द्वितीयोऽपि मया समनूद्य समापितः ॥१६९॥

॥ इति ब्रह्मसूत्रकारिकायां तृतीयेऽध्याये द्वितीयः पादः ॥

७६. योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्येऽनुसंयन्ति यथा कर्म यथा श्रुतम् ॥ – कठोपनिषद् २।७

७७. फलमत उपपत्तेः । – ब्रह्मसूत्रम् ३।२।८।३८–४१

ॐ तत्सद्ब्रह्मणे नमः

ब्रह्मसूत्रकारिकायां

# तृतीयाध्याये तृतीयः पादः

(अस्मिन् पादे सर्ववेदान्तप्रत्ययाद यथाश्रयभावसहितानि षट्त्रिंशदधिकरणानि सन्ति। एतेष्वधिकरणेषु पराऽपरब्रह्मविषये विचारो विहितः।)

## १. सर्ववेदान्तप्रत्ययाधिकरणम् (ब्रह्मसूत्रम् ३।३।१।१–४)

शिष्यः –

सर्ववेदान्तशास्त्रेषु नैकः सैकोऽथवा विधिः।
उपासनार्थं हे ब्रह्मन्! सन्देग्धि हृदयं मम ॥१॥

वादिनः कथयन्त्यत्र दृष्टमत्र विधिद्वयम्।
याज्ञवल्क्यकौथुमयोः काण्वछान्दोग्यपृष्ठयोः ॥२॥

कौषीतक्यां तैत्तिरीये दृष्टाः शाट्येऽप्युपासनाः।
उपासना नैकविधाः प्रतिवेदे गुरो! कथम्? ॥३॥

उपासनाऽस्ति पञ्चाग्नेः काण्वछान्दोग्यपुस्तयोः।
षष्ठाग्नेश्चापि दृष्टोऽस्ति ह्यथर्वेऽपि शिरोव्रतः ॥४॥

उपासनाः पृथग् दृष्टाः शाखाभेदेऽप्यनेकधाः।
अत एव विभिन्नास्ताः सन्ति वेदान्तदर्शने ॥५॥

आज्ञापयत्वत्र गुरो! तस्याः काऽस्ति विभिन्नता?
एकाऽस्त्युपासना वेदे यद्वा नैकाः पृथक् पृथक्? ॥६॥

गुरुः –

सर्ववेदान्तेषु शाखा विभिन्नाः सन्ति यद्यपि ।
एकैवोपासना ज्ञेया नैकाः शाखा भवन्त्यपि ॥७॥

प्राणविद्याऽस्ति छान्दोग्ये[1] तथा काण्वेऽपि दृश्यते[2] ।
तथा पञ्चाग्निविद्याऽपि ह्युभयोर्दृश्यते समम् ॥८॥

तथा चामिक्षयागार्थं यागवाजिनसिद्धये ।
छान्दोग्येऽपि च काण्वेऽपि दृष्टा पञ्चाग्निवेदिका ॥९॥

भिन्ना चामिक्षयागे सा भिन्ना वाजिनकर्मणि ।
पञ्चाग्नि विद्यात्वेकैव दृष्टा भिन्ना स्वरूपतः ॥१०॥

एकायामपि विद्यायां क्वचिद् दृष्टा विभिन्नता ।
नातिरात्रे चातिरात्रे दृष्टा षोडशिकर्मणि[3] ॥११॥

षष्ठाग्निर्दृश्यते क्वापि शाखाभेदे विचारिते ।
परं पञ्चाग्निविद्यायां भेदो नास्ति कथञ्चन ॥१२॥

काण्वशाखा तु षष्ठाग्निं 'तस्याऽग्नेस्तत् प्रशंसति[4] ।
उपसंहरते ता हि 'य एता'नितिवाक्यतः[5] ॥१३॥

श्रुतौ कैथुमविद्याया उल्लेखो दृश्यते न हि ।
अन्यासु विधिरेकोऽस्ति सर्व विद्याऽभ्युपासने ॥१४॥

---

१. यो ह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद । – छान्दोग्योपनिषद् ५।१।१
२. ज्येष्ठश्चश्रेष्ठश्च स्वानां भवति । – बृहदारण्यकोपनिषद् ६।१।१
३. अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाति । – श्रुतिः
४. तस्याग्निरेवाग्निर्भवति । – बृहदारण्यकोपनिषद् ६।२।१४
५. अथ ह य एतानेवं पञ्चाग्नीन्वेद । – छान्दोग्योपनिषद् ५।१०।१०

शिरोव्रतञ्चोल्लिखितं लक्षणैर्मुण्डकश्रुतौ[६] ।
स्वाध्यायाङ्गं हि भवति तत्तु नोपासनं भवेत् ॥१५॥

काण्वच्छान्दोग्य शाखायां स्वाध्यायोपासनाद्वयोः ।
उल्लेखं दृश्यतेऽन्यत्र न दृष्टा धर्मचोदना ॥१६॥

सर्ववेदान्तशास्त्रेषु ह्येकैवोपासनाविधिः ।
उपसंहारतो दृष्ट एकत्वं सर्वतो भवेत् ॥१७॥

'सर्वे वेदा' आदि मन्त्र आगतो यस्य कारणात्[७] ।
दृश्यते ब्रह्मविद्यायामेकत्वं सर्वदैव हि ॥१८॥

सद्भावो हेतुरैक्यस्य भेदाऽभावश्वदृश्यते ।
उपासना तु सैकाऽस्ति शाखाभेदे हि सत्यपि ॥१९॥

सर्ववेदान्तेषु दृष्टे विविधा नास्त्युपासना ।
श्रुतिर्वदति सर्वार्थे सैका दृष्टास्त्युपासना ॥२०॥

अत्राधिकरणे सूत्रचतुष्टयमिहागतम्[८] ।
सर्वत्रोपासना दृष्टा निर्गुणब्रह्मणो भृशम् ॥२१॥

### २. उपसंहाराधिकरणम् (ब्रह्मसूत्रम् ३।३।२।५)

शिष्यः –

उपासनायामेकस्यां निर्दिष्टाः श्रुतिभिर्गुणाः ।
अन्यत्रैवोपसंहारः कर्तुं शक्येत वा न वा ? ॥२२॥

---

६. **नैतदचीर्णव्रतोऽधीते । – मुण्डकोपनिषद् ३।२।११**
७. **सर्वे वेदा यत्पदमामनन्ति । – कठोपनिषद् २।१५**
८. **सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् । – ब्रह्मसूत्रम् ३।३।१।१–४**

वादिनः कथयन्त्यत्र नैतद् दृष्टं श्रुतौ क्वचित ।
श्रुतैरेव गुणैर्विद्या भवत्येव पुरस्कृता ॥२३॥

गुणान् सञ्चित्य चैकस्य तानन्यत्रोपसंहृतिः ।
क्रियते वा न क्रियते भवानाज्ञापयत्विह ॥२४॥

गुरुः –
अग्निहोत्रादिशास्त्राणि चैकरूपाणि सर्वतः ।
तेषां शेषा गुणा दृष्टा अन्यत्रैवोपसंहृताः ॥२५॥

तथैवोपासनायां च तस्याऽग्निहोत्रकर्मणः ।
शास्त्राणां गुणशेषाद्या अन्यत्रैवोपसंहृताः ॥२५॥

तादृगुपासनायां च तद्गुणाश्चोपसंहृताः ।
उपास्य गुणसंप्राप्यौ सर्वत्राऽभेदकावुभौ ॥२६॥

कर्माऽऽधिक्यं यत्र दृष्टं फलाऽऽधिक्यं भवेत् ततः ।
न्यायेनैतेन मिलति भवत्येवोपसंहृतिः ॥२७॥

सर्ववेदान्तगम्यं तद् विज्ञानमिह दृश्यते ।
यथैकमस्ति विज्ञानं योग्यमन्यच्च तादृशम् ॥२८॥

एतादृशे तु विज्ञाने भवत्येवोपसंहृतिः ।
अत एवार्थभेदोऽपि न तयोर्दृश्यते क्वचित् ॥२९॥

दृष्टं विद्याविशिष्टे यत् तत् तस्यैवोपकारकम् ।
स्वशाखोक्तगुणैस्तुल्यं तत् सूत्रमपि वक्ति यत् ॥३०॥

अत एवोपसंहारः कर्तुं शक्नोति सज्जनः ।
एष वेदान्तसिद्धान्तो वादिनस्तत्र खण्डिताः ॥३१॥

अत्राऽधिकरणे सूत्रमेकां निर्णेयते कुराम् ?
गुणानामुपसंहार एकस्याऽन्ये भवत्यपि ॥३२॥

### ३. अन्यथात्वाधिकरणम् (ब्रह्मसूत्रम् ३।३।३।६–८)

शिष्यः –

छान्दोग्येऽपि च काण्वेऽपि व्यक्ता विद्याऽस्ति या हि सा ।
उङ्गीथ एकला सैषा यद्वा भिन्नाऽस्ति सन्दिहे ॥३३॥

पूर्वपक्षा वदन्त्यत्र याऽस्ति सङ्ग्रामनामिका ।
उभयत्र समानाऽस्ति तस्मात् सैषाऽस्ति चैकला ॥३४॥

उद्गीथनामिका विद्या भवान् वदतु हे गुरो !
उभयत्र समाना वा भिन्ना वा ज्ञातुमुत्सुकः ॥३५॥

गुरुः –

उद्गीथविद्या भिन्नाऽस्ति भिन्नं वेद्यस्वरूपकम् ।
छान्दोग्येऽपि च काण्वेऽपि भिन्नं नियममाप्यते ॥३६॥

सामभागविशेषे सा चोद्गीथावयवादिषु ।
ओङ्कारोपासना दृष्टा छान्दोग्ये प्राणदृष्टिका ॥३७॥

काण्वे तु दृश्यते सैष चोद्गीथो भक्तिवर्णितः ।
उद्गता वाक्यमित्यादिप्राणो भवति चोदकः ॥३८॥

उद्गीथ दृष्ट्या क्रियते तत्रैवोपासना विधिः ।
सैषा विद्या तत्र भिन्ना वेद्यं भिन्न यतो हि तत् ॥३९॥

---

९. उपसंहारोऽर्थभेदाद् विधिविशेषवत्समाने च । – ब्रह्मसूत्रम् ३।३।२।५

एका विद्या तु सा नास्ति ओमित्येकाक्षरं हि तत्[10] ।
उद्गीथावयवस्तद् हि सैष ओङ्कार इष्यते ॥४०॥

सैवोपदिष्टश्छान्दोग्ये 'त्वं न' वाक्यात् तदन्यतः[11] ।
प्राणरूपाऽस्ति सा विद्या सामभक्तिस्वरूपिणी ॥४१॥

विभिन्नश्रुतिमन्त्रैर्या विद्या समुपदेशिता ।
तयैव भिन्नता दृष्टा विद्यायामिह गम्यते ॥४२॥

अत्राधिकरणे सूत्रत्रितयं भिन्नशाखया[12] ।
उद्गीथविद्या भिन्नाऽस्ति सुस्पष्टं भणतीह तत् ॥४३॥

## ४. व्याप्त्यधिकरणम् (ब्रह्मसूत्रम् ३।३।४।९)

शिष्यः –
ओमित्येकाक्षरे दृष्ट उत्गीथ श्चाऽपरोऽक्षरः[13] ।
सामान्याऽधिकरण्यं तद्द्वयोरत्र प्रतीयते ॥४४॥

तदध्यासो भवेद् यद्वा बाधो वैक्यं तयोर्भवेत् ।
विशेषणं वा किं तस्य सन्देग्धि हृदयं मम ॥४५॥

फलप्रदं न कुत्राऽपि वादिनां मतमागतम् ।
हेतुर्नियामको नास्ति तेऽनिर्वाच्यं वदन्त्यतः ॥४६॥

तदित्थं मतमायातं वादिनां किमतः परम् ।
दृष्टाः पञ्च विकल्पास्ते किं स्यात्तेषूपयुक्तकम् ॥४७॥

---

१०. ओमित्येदक्षरमुद्गीथमुपासीत । – छान्दोग्योपनिषद् १।१।१
११. अथ खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति । – छान्दोग्योपनिषद् १।१।१०
१२. अन्यथात्वं शब्दादिति चेन्नाविशेषात् । – ब्रह्मसूत्रम् ३।३।३।६–८
१३. ओमित्येतदक्षरमुद्गीथमुपासीत । – छान्दोग्योपनिषद् १।१।१

गुरुः –

सामान्याधिकरण्यं यद् विशेषणविशेष्ययोः ।
भावद्वाराविनिर्देश्यं सैषो हि नियमो मतः ॥४८॥

ऋग्वेदेषु स ओङ्कारो व्याप्तो दृष्टोऽस्ति योऽक्षरः ।
अध्यासादौ दृश्यते तत्फलं कल्पेत यादृशम् ॥४९॥

भवति सन्निकृष्टांऽशे प्रसक्तमिह लक्षणम् ।
तदित्थं युज्यते चात्र भवत्येव विनिर्णयः ॥५०॥

सामानाऽधिकरण्यं यत् 'नाम ब्रह्मेति दर्शितम्'[१४] ।
'यश्चौर' इति मन्त्रे तु चौररूपं प्रबाध्यते[१५] ॥५१॥

[१६]'यो जीव इति मन्त्रे तु चैकत्वं ब्रह्मजीवयोः ।
[१७]'यन्नील'मत्र यो भावो विशेषणविशेष्ययोः ॥५२॥

विचारस्त्वेषु वाक्येषु स्वतन्त्रैः क्रियते बुधैः ।
पक्षोऽयं गृह्यते वा न कथं स्यादत्र निर्णयः ॥५३॥

विहाय सर्वान् विकल्पानुद्गीथमथ चाऽक्षरम् ।
अन्योन्यमनयो भावो विशेषणविशेष्ययोः ॥५४॥

उपयुक्तोऽस्ति निर्दुष्टो भवत्येव नियामकः ।
दूषिताः पर्युदस्यन्तेऽन्येभावा नाऽनवद्यकाः[१८] ॥५५॥

---

१४. नाम ब्रह्मेत्युपासीत । – श्रुतिः
१५. यश्चौरः स स्थाणुः । – श्रुतिः
१६. यो जीवस्तद् ब्रह्म । – श्रुतिः
१७. यन्नीलं तदुत्पलम् । – श्रुतिः
१८. व्याप्तेश्च समञ्जसम् । च शब्दोऽयं तुशब्दस्थाननिवेशी पक्षत्रयव्यावर्तन–प्रयोजनं तदिह त्रयः पक्षा पर्युदस्यन्ते विशेषणपक्ष एवैको निरवद्य इत्युपादीयते ।
– शाङ्करभाष्यम्, ब्रह्मसूत्रम् ३।३।४।९

विशेषणविशेष्यौ द्वौ निर्दुष्टाविह तिष्ठतः ।
ओमित्येकाक्षरं दृष्टमुद्गीथस्य विशेषणम् ।।५६।।

परिशेषे गृहीते तु यो विशेषणपक्षकः ।
गृह्यते सैष ओङ्कारो वेदे सर्वत्र व्यापकः ।।५७।।

निर्णायको नियामको वादिनः प्रवदन्ति नो ।
विशेषणो नियामकः सुस्पष्टमिह दृश्यते ।।५८।।

अत्राऽधिकरणे सूत्रमेकं ज्ञात्वाऽब्रवीत् स्फुटम्[१९] ।
ओमित्येकाक्षरं गीतमुद्गीथस्य विशेषणम् ।।५९।।

## ५. सर्वाभेदाधिकरणम् (ब्रह्मसूत्रम् ३।३।५।१०)

शिष्यः –

सह वाजसनेयेन छान्दोग्यश्रुतिमागतः ।
सन्दृष्टः प्राणसंवाद उपास्यः प्राण इत्यपि ।।६०।।

बृहदारण्यके वाचो वसिष्ठत्वगुणान्विताः ।
सन्तीति पठितास्ता हि प्राणेष्वपि समन्विताः[२०] ।।६१।।

वसिष्ठत्वगुणास्ते तु कौषीतक्यां तु सन्ति नो[२१] ।
तथापि तद्गुणाः सर्वे संहियन्ते क्रमादिह ।।६२।।

अन्तः सर्वासु शाखासु प्राणसंवादसंस्थिता ।
एकता दृश्यते प्राणविद्यायाः श्रुतिसम्मता ।।६३।।

---

१९. व्याप्तेश्च समञ्जसम् । – ब्रह्मसूत्रम् ३।३।४।९
२०. यद्वा अहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसि । – बृहदारण्यकोपनिषद् ६।१।१४
२१. 'अथातो निःश्रेयसादानम्', एता ह वै देवता अहं श्रेयसे ।
– कौषीतकिब्राह्मणोपनिषद् २।१४

पूर्वपक्षा वदन्त्यत्र ग्रहणीया न ते गुणाः ।
'य एवमिति' वाक्येन गतार्थास्ते भवन्त्यतः[२२] ॥६४॥

परं सर्वासु शाखासु प्राणसंवादसंस्थिता ।
प्राणविद्या समायाता भवत्येव तदेकता ॥६५॥

अतो यत् प्रकृतं वस्तु गुणतुल्यमप्राकृतम् ।
भवत्येवेति संसिद्धं निर्णयं चैतदन्ततः ॥६६॥

सर्वे गुणा हि सर्वत्र भवन्त्येवोपसंहृताः ।
इत्येषा हि कुरा सिद्धा निर्णयोऽप्येष वस्तुतः ॥६७॥

अत्राऽधिकरणे सूत्रमेकं यद् वक्ति शास्त्रतः[२३] ।
सर्वे गुणा भवन्त्येव सर्वेष्वेवापसंहृताः ॥६८॥

### ६. आनन्दाद्यधिकरणम् (ब्रह्मसूत्रम् ३।३।६।११–१३)

शिष्यः –

परमा ब्रह्मविद्या या प्रोक्ताऽस्ति तैत्तिरीयके ।
आनन्दाद्या च या प्रोक्ता विद्या स्यादैतरेयके ॥६९॥

एतयोर्ब्रह्मविद्यायां भवेद् वा नोपसंहृतिः ।
गुरो ! मामभवच्छङ्का भवेत् किं नोपसंहृतिः ॥७०॥

भवेन्नाऽऽनन्दविद्याया ऐतरेयोपसंहृतिः ।
पूर्वपक्षावदन्त्यत्र प्रमाणैः श्रुतिदर्शितैः ॥७१॥

---

२२. अथो य एवं विद्वान् प्राणे निःश्रेयसं विदित्वा । – श्रुतिः
२३. सर्वाभेदादन्यत्रेमे । – ब्रह्मसूत्रम् ३।३।५।१०
२४. एष उ एव वामनीरेष हि सर्वाणि वामानि नयति सर्वाणि वामानि नयति य एवं वेद ।
– छान्दोग्योपनिषद् ४।१५।३

भवत्येव व्यवस्थाऽत्र वामनःसत्यकामवत् ।
परस्परं भवेयुर्न तेषामत्रोपसंहृतिः ॥७२॥

'आनन्दं ब्रह्म' वाक्येन 'सत्यं ज्ञान'मितीत्यपि ।
तैत्तिरीयस्थिता ब्रह्मविद्यायामस्ति शंसितम् ॥७३॥

यत् 'प्रज्ञानं ब्रह्म' वाक्यं विद्यते चैतरेयके ।
तत् परब्रह्मविद्यायामानन्दं नैव शंसितम् ॥७४॥

परस्परं न चैतेषां वाक्यानामुपसंहृतिः ।
भवतीति मतं दृष्टं वादिभिः स्थापितं पृथक् ॥७५॥

तदित्थं पूर्व पक्षाणां विरोधे मतमागतम् ।
गुरो ! भवान् प्रवदतु सिद्धान्तः किमु शास्त्रतः ॥७६॥

भवेद् वा नोपसंहारो भवानाज्ञापयत्वतः ।
न भवेद् वोपसंहारो ययोस्तेषु परस्परम् ॥७७॥

गुरुः –
आनन्दाद्याः सर्वधर्मा ब्रह्मणो यत्र निर्गताः ।
नास्त्येव श्रवणं नाम भवत्येवोपसंहृतिः ॥७८॥

दृष्टं सर्वासु शाखासु चैकत्वं ज्ञेयब्रह्मणः ।
अतो हेतो भवत्येव धर्मस्याऽत्रो पसंहृतिः ॥७९॥

उपास्यधर्माद् यदभिन्नं शुद्धं ज्ञानप्रयोजनम् ।
आनन्दधर्मं सर्वेषामुपसंह्रियते भृशम् ॥८०॥

वादिनामेष दृष्टान्तो हेयोऽस्ति विषमोऽपि च ।
सिद्धान्तस्य विना बोधं ते कथं खण्डयन्त्यपि ॥८१॥

पुण्यं वामनिवाक्यं तद्[24] भामनी च प्रकाशितम्[25] ।
ध्येयं रूपं तु सद् ब्रह्म ज्ञातव्यं च विधेयकम् ॥८२॥

एतेषां विधिना भूयाद् व्यवस्थामुपयोगिनीम् ।
आनन्दस्य विधानं न फलमेव प्रबुध्यते ॥८३॥

विधेरभावो यत्राऽस्ति व्यवस्थाकारकोऽपि न ।
सर्वत्र ज्ञानरूपं तत् फलं सामान्यमकलम् ॥८४॥

एतेषामुपसंहारो भवितव्यो हि सर्वतः ।
एतद्धि श्रौततात्पर्यं बोद्धव्यं वादिभिर्भृशम् ॥८५॥

ध्येयं सर्वासु शाखासु ज्ञेयं तद् ब्रह्म चैकलम् ।
एतस्मात् कारणाद् ज्ञेया ब्रह्मविद्या महत्तमा ॥८६॥

भिन्नश्चोपास्य धर्मेण ज्ञानमात्रप्रयोजनः ।
आनन्दोऽपि च धर्मस्य चोपसंहार एव च ॥८७॥

भवितव्यं हि सर्वत्र प्रतिपाद्यं तु ब्रह्म तत् ।
ब्रह्मण्येव सदैकत्वं ज्ञेयं तद् ब्रह्म केवलम् ॥८८॥

अत्राधिकरणे सूत्रत्रयेणैकमुखेन यत्[26] ।
सर्वत्रैवोपसंहारो भवतीति प्रवक्ति च ॥८९॥

---

२५. एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाति सर्वेषु लोकेषु भाति य एवं वेद ।
– छान्दोग्योपनिषद् ४।१५।४

२६. आनन्दादयः प्रधानस्य । – ब्रह्मसूत्रम् ३।३।६।११–१३

## ७. आध्यानाधिकरणम्
## (ब्रह्मसूत्रम् ३।३।७।१४–१५)

शिष्यः –

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः[२७] ।
इत्याद्युक्तं न पुरुषात् सा परा गतिरित्यपि ॥९०॥

इन्द्रियेभ्यः समारभ्य विषयादिकमुल्लिखन् ।
तदन्ते पुरुषं यावत् श्रुतिः शंसति सन्ततम् ॥९१॥

तदित्थं श्रुतिशास्त्रेषु दृष्टा दीर्घपरम्परा ।
ज्ञेयत्वं तत्र सर्वेषां ज्ञेयः किं ? पुरुषो हि सः ॥९२॥

सन्देहोऽत्र समायातः पूर्वपक्षा वदन्त्यपि ।
इन्द्रियाण्यपि सर्वाणि सन्ति ज्ञेयानि च क्रमात् ॥९३॥

गुरो ! सामाज्ञापयतु साध्यः कः साधनं कति ?
बोद्धुं कठिनमस्त्येतज् ज्ञेयः को ज्ञापकोऽपि कः ? ॥९४॥

गुरुः –

सर्वेभ्यश्चेन्द्रियादिभ्यः पुरुषोऽस्ति परात्परः ।
तस्यैवाऽत्रापि भवति सुदृढं प्रतिपादनम् ॥९५॥

न कार्योऽन्योऽपि भिन्नार्थो प्रत्येकं प्रतिपादनम् ।
नास्ति प्रयोजनं तेषामत्राऽन्यार्थस्य चिन्तनम् ॥९६॥

---

२७. इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः ॥ – कठोपनिषद् १।३।१०–११

अनर्थवस्तुहीनस्य ज्ञानात् पुंसः परस्य चेत् ।
मानुषो लभते मोक्षं ज्ञानिनः प्रतरन्त्यपि ॥९७॥

श्रुतिरेवं निगदति ब्रह्मज्ञानैकसाधनम् ।
इन्द्रियादीनि सर्वाणि ब्रह्मप्राप्तिप्रयोजनम् ॥९८॥

आध्यानमथवा साध्यं साक्षात्कारार्थचिन्तनम् ।
श्रुतेरर्थं प्रकुरुते सूत्रेण प्रतिपादनम् ॥९९॥

सप्रसङ्गः प्रवाहोऽयं ज्ञेयं ज्ञानार्थसाधनम् ।
अर्थश्चेन्द्रियवृत्तीनां परमार्थप्रयोजकम् ॥१००॥

सर्वभूतस्थितश्चाऽऽत्मा गूढरूपेण भासते[२८] ।
न चर्मचक्षुषा दृश्यः सूक्ष्मबुध्या हि दृश्यते ॥१०१॥

वाणीं नियम्य[२९] मनसा ह्यात्मज्ञानार्थहेतवे ।
क्रमश उपसंहार कुरुतां भणति श्रुतिः ॥१०२॥

योऽन्ते संसारमार्गस्य पारं प्राप्नोति सज्जनः[३०] ।
स एव साक्षात् श्रीविष्णोः प्राप्नोति परम् पदम् ॥१०३॥

तदर्थ मत्रज्ञानस्य मार्गे निश्चित्य दर्शितः ।
ब्रह्म ज्ञानं कृतो ज्ञानी ब्रह्मीभवति निर्भयः ॥१०४॥

अर्थादीनां पदार्थानां ज्ञानान्मोक्षो भवेन्न हि ।
परस्य पुंसो ज्ञानेन मोक्षो भवति निश्चितम् ॥१०५॥

---

२८. एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ।
दृश्यते त्वग्रचया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ – कठोपनिषद् ३।१२

२९. यच्छेद्वाङ्मनसी प्राज्ञः । – कठोपनिषद् ३।१३

३०. सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् । – कठोपनिषद् ३।९

य आत्मपदवाच्योऽस्ति साक्षात् परमपुरुषः ।
तस्मिन् तिष्ठति ज्ञेयत्वं स ज्ञेयो दिशति श्रुतिः ॥१०६

अर्थाद्यास्ते पदार्था नो प्रतिपाद्याः क्वचिन्न हि ।
स एकः पुरुषः साक्षात् प्रतिपाद्यः परात्परः ॥१०७॥

एवं प्रकारेण जनो ज्ञानं ब्रह्माऽऽत्मनः कृते ।
मुच्यते मायिकाद् बन्धात् परं पारं प्रयाति च ॥१०८॥

सदा भवति निर्मुक्तः सत्यं मृत्युमुखाच्च सः[३१] ।
पुराऽपि ब्रह्मैवाऽऽसीत् तद् ज्ञात्वा ब्रह्मीभवत्यपि ॥१०९॥

अत्राधिशरणे सूत्रद्वयं तत् प्रतिपादनम्[३२] ।
कुरुते पुरुषं साक्षात् श्रौतं प्रमाणपूर्वकम् ॥११०॥

## ८. आत्मगृहीत्यधिकरणम् (ब्रह्मसूत्रम् ३।३।८।१६–१७)

प्रथमं द्वितयं चाऽत्र वर्णितं वर्णकद्वयम् ।
प्रथमे वर्णके पूर्वं संवादात्मकवर्णनम् ॥१११॥

वर्णनद्वितयस्याऽपि संवादेन यथामति ।
क्रियते कारिकाभिश्च सक्षिप्तमिह वर्णनम् ॥११२॥

वर्णकम् – १

शिष्यः –

'आत्मा वा इदमेकाऽऽग्रं'[३३] स इमानित्यपि श्रुतम्[३४] ।
श्रुतिवाक्येन निर्दिष्टो विराडाऽऽत्माऽस्ति वेश्वरः ? ॥११३॥

---

३१. निचाय्य तं मृत्युमुखात्प्रमुच्यते । – कठोपनिषद् ३।१५

३२. आध्यानाय प्रयोजनाभावात् । – ब्रह्मसूत्रम् ३।३।७।१४–१५

३३. आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन मिषत् ईक्षत लोकान्नु सृजा इति ।
– ऐतरेयोपनिषद् १।१

३४. स इमांल्लोकानसृजत अम्भो मरीचीर्मरमापः । ऐतरेयोपनिषद् १।२

तदित्थं सति सन्देहे विराडस्ति न चेश्वरः ।
ताम्यो गामनयद् वाक्यात् सुस्पष्टं दिशति श्रुतिः[३५] ॥११४॥

विराट् शरीरी दृष्टोऽस्ति स गामानयति द्रुतम् ।
शरीरहीनश्चेदात्मा कथं गामानयत्यतः ॥११५॥

श्रुतिवर्णित आत्मा स विराडस्ति न चेश्वरः ।
वादिनां मतमायातं भवान् वक्तु क ईश्वरः ? ॥११६॥

गुरुः –
आत्मेति पदवाच्योऽस्ति यः समायात ईश्वरः ।
अद्वैतश्रुतिरुद्घुष्टसिद्धान्तोऽस्ति विराड् न सः ॥११७॥

एतस्मात् कारणादन्य श्रुतौ यत् सृष्टिवर्णनम् ।
आगतं चोपसंहारः कार्य आत्मनि सर्वतः ॥११८॥

'गामानये' ति वाक्यं तु ह्यर्थवादे समागतम् ।
तत् स्वतन्त्रं न हि ज्ञानं पुरुषार्थप्रयोजितम् ॥११९॥

एतस्मात्तु न भवति श्रुतिरेवाऽविवक्षिता ।
ऐक्यं जीवब्रह्मणोश्च दृश्यते सर्वविश्रुतम् ॥१२०॥

'आत्मा वा इदमेकादौ श्रुतौ भवत्युपक्रमः[३६] ।
'स एतमेव पुरुष' उपसंहार ईश्वरे ॥१२१॥

अत एवाऽऽत्म शब्देन स ईश्वरो विवक्षितः ।
श्रुतेरर्थविचारे तु विराट् शब्दो न गृह्यते ॥१२२॥

---

३५. ताभ्यो गामनयत्ता अब्रुवन्न वै नोऽयमलमिति । ताभ्योऽश्वमानयत्ता अब्रुवन्न वै नोऽयमलमिति । – ऐतरेयोपनिषद् १।२।२
३६. आत्मा वा इदमेक एवाग्रे । – ऐतरेयोपनिषद् १।१

द्वितये वर्णके सच्चिदात्मनोऽस्ति विवेचनम् ।
अत्र संवादरूपेण लिख्यते त्वमितः शृणु ॥१२३॥

वर्णकम् २

शिष्यः –

बृहदारण्यके प्रोक्त 'आत्मा कतम' इत्यपि[३७]।
[३८]तथा 'सदेव सौम्ये' ति छान्दोग्ये समुपागतः[३९] ॥१२४॥

संवाद आगत आत्मा तथा सद्वस्तुनोर्द्वयोः ।
पुस्तयोर्भिन्नरूपेण विहिताऽस्ति विवेचना ॥१२५॥

समायातोऽस्ति सन्देहो द्वाविमावेक एव किम् ।
तुल्यार्थकौ तु दृष्टौन, तौ भिन्नौ वादिनोऽब्रुबन् ॥१२६॥

उपक्रमोपसंहारद्वयोर्दृष्टौ पृथक् पृथक् ।
अत एव सदात्मानौ द्वावेतौ स्तः पृथक पृथक् ॥१२७॥

आज्ञापयत्वत्र गुरो ! एकमेतौ न वा पृथक् ।
किमेको वाऽपि द्वौ ब्रह्मन् ? सन्देहोऽत्र समागतः ॥१२८॥

गुरुः –

आत्मशब्दात् समारभ्य सच्चिदात्मविवेचनम् ।
ब्रह्मस्वरूपसम्प्राप्ते भवत्येवोपसंहृतिः[४०] ॥१२९॥

---

३७. स एतमेव पुरुषं ब्रह्म ततमपश्यत् । – ऐतरेयोपनिषद् ३।१३

३८. कतम आत्मा । – बृहदारण्यकोपनिषद् ४।३।७

३९. क. सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । – छान्दोग्योपनिषद् ६।२।१
ख. स आत्मा तत्त्वमसि । – छान्दोग्योपनिषद् ६।८।७

४०. सवा एषमहानजआत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म।–बृहदारण्यकोपनिषद्४।४।२५

छान्दोग्येऽपि समायातात् सदेवेत्यादिमन्त्रतः[४१] ।
आत्मैव गृह्यते तत्र भवत्येवोपसंहृतिः ॥१३०॥

भवत्येवाऽऽत्मनो ज्ञानादश्रुता अपि विश्रुताः[४२] ।
अतर्किता अपि जनास्तर्क्या आत्मप्रशोधतः ॥१३१॥

आत्मा सदस्ति विज्ञानं छान्दोग्ये तत्त्वतोऽमिलत् ।
उपक्रमाद् भवत्येव ह्यात्मा स उपसंहृतः ॥१३२॥

सामान्यतः समुत्थाय विशेष उपसंहृतः[४३] ।
सेदव दृश्यते सर्वमात्मन्येवोपसंहृतः ॥१३३॥

क्वचिदेकत्र वा वाक्ये श्रुतौ विषमताऽपि चेत् ।
अर्थे विषमता नास्ति 'पात्रमाहर' वत् क्वचित्[४४] ॥१३४॥

वाक्यप्रकारे मेदेऽपि तदर्थो नैव मिद्यते ।
प्रतिपाद्यांशबोधे तु भेदो नैवाऽस्ति तत्वतः ॥१३५॥

सामान्यरूपे सद् वस्तु ह्यात्मैवास्ति प्रभेदतः ।
श्रुतेश्च वाक्यशेषेऽपि यत् सत् तदात्मवाचकः ॥१३६॥

बृहत्यपि च छान्दोग्ये व्यक्तः सदात्मशब्दितः ।
एकार्थकावुभौ दृष्टौ न तौ भिन्नार्थवाचकौ ॥१३७॥

---

४१. क. सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयकम् । – छान्दोग्योपनिषद् ६।२।१
ख. स आत्मा तत्त्वमसि । – छान्दोग्योपनिषद् ६।७।८

४२. येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम् । – छान्दोग्योपनिषद् ६।१।१

४३. सामान्योपक्रमश्च न वाक्यशेषगतेन विशेषेण विरुध्यते, विशेषाकाङ्क्षित्वात् सामान्यस्य । – शाङ्करभाष्यम्, ब्रह्मसूत्रम् ३।३।८।१७

४४. आम्नानवैषम्यमपि नाऽवश्यमर्थवैषम्यमावहति 'आहर पात्रम्' 'पात्रमाहर' इत्येवमादिष्वर्थसाम्येऽपि तद्दर्शनात् । – शाङ्करभाष्यम्, ब्रह्मसूत्रम् ३।३।८।१७

अत्राऽधिकरणे सूत्रद्वितयं समुपागतम्[४५] ।
वक्ति सत् शब्दवाच्यः स आत्मैवास्ति विराण्न हि ॥१३८॥

## ९. कर्याख्यानाधिकरणम् (ब्रह्मसूत्रम् ३।३।९।१८)

शिष्यः –

भोजनात् पूर्वमाचामेत् पश्चादपि तदाऽऽचरेत्[४६] ।
कर्ता भोजनसिद्ध्यर्थं निर्दिशन्तौ श्रुतिस्मृती ॥१३९॥

कर्ता तदाचमेनैव प्राणाऽऽच्छादं करोत्यपि ।
प्राणाऽनग्ना भवन्तीति कर्ता स्वीकुरुतेऽनिशम् ॥१४०॥

तया प्राणाऽनग्नतया सहाऽऽचामस्य हेतुता ।
किं स्यादनग्नता बुद्धिः ? किं वातत् स्याद् विधेयकम् ॥१४१॥

वादिनः कथयन्त्यत्र विधेयौ तावुभौ पुनः ।
अपूर्वौ भवतस्तस्माद् विधियोग्यावुभौ स्मृतौ ॥१४२॥

किं वाऽऽचनमात्रं तद् विद्येयं प्रभवेत् किमु ?
अनग्नाऽपि हि प्राणस्य स्तुत्यर्थं भवतीत्यहो ! ॥१४३॥

तदित्थं पूर्वपक्षाणां मतमायाद् गुरो ! ऽधुना ।
विधेयमाज्ञापयतु चैकं वापि किमु द्वयम् ? ॥१४४॥

---

४५. आत्मगृहीतिरितरवदुत्तरात् । – ब्रह्मसूत्रम् ३।३।८।१६–१७

४६. क. तस्माद्वा एतदशिष्यन्तः पुरेस्ताच्चोपरिष्टाच्चाद्भिः परिदधाति ।
– छान्दोग्योपनिषद् ५।२।२

ख. तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वा चाचामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते । – बृहदारण्यकोपनिषद् ६।१।१४

ग. तस्मादेवंविदशिष्यन्नाचमेदशित्वा वाचामेदेतमेव तदननग्नं कुरुते । – श्रुतिः

गुरुः –

तत् कार्यरूपमाख्यानं तत् प्रमाणं न चेष्यते ।
विधेयत्वोपपत्तिस्तु न तेन प्रतिपद्यते ॥१४५॥

तत् प्राणानग्नतायाश्च तथैवाचमनस्य च ।
विधानं सम्भवेदेव वाक्यभेदादनन्तरम् ॥१४६॥

कर्ता भोजनपूर्वं यत् कृतमाचमनं ततः ।
एकेनाऽऽचमनेनापि भवति श्रूयते श्रुतौ ॥१४७॥

अप्राप्तविषये शास्त्रदर्शनं सार्थकं भवेत्[४८] ।
शुद्ध्यर्थमेकाऽऽचमनं पर्याप्तं भवतीत्यपि ॥१४८॥

प्राणाऽग्निहोत्राचरणाः प्राणोपासकसज्जनाः ।
नित्याऽचमं प्रकुर्वन्ति सविधिं शास्त्रदर्शितम् ॥१४९॥

जलं धृत्वाऽनग्नबुद्ध्या नित्यमाचामति द्विजः[४९] ।
भोज्यमन्नविशुद्ध्यर्थमाचारः शास्त्रदर्शितः ॥१५०॥

अत्राधिकरणे सूत्रमेकं वक्ति विचारतः[५०] ।
एकमाचमनं नित्यं प्रकुर्यादिति वक्ति तत् ॥१५१॥

---

४७. एतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते । – बृहदारण्यकोपनिषद् ६।१।१४
४८. अप्राप्ते शास्त्रमर्थवत् । – न्यायः
४९. द्विजो नित्यमुपस्पृशेत् । – स्मृतिः
५०. कार्याख्यानादपूर्वम् । – ब्रह्मसूत्रम् ३।३।९।१८

## १०. समानाधिकरणम् (ब्रह्मसूत्रम् ३।३।१०।१९)

शिष्यः –

वाजसनेयशाखायां याऽस्ति शाण्डिल्यनामिका ।
विद्याऽस्ति तस्यां विज्ञानं स आत्मेत्यादिचिहितम्[५१] ॥१५२॥

अस्मिन् सर्वगुणानां हि श्रवणं भवतीति यत् ।
बृहदारण्यके प्रोक्तो 'मनोमय'इतीरितः[५२] ॥१५३॥

शाण्डिल्यनाम्नी या विद्या द्वे वा सैका परन्तु किम् ?
गुणोपसंहृतिस्तत्र भवेद् वा न परस्परम् ॥१५४॥

वादिनः स्वमतं चात्र तदित्थं स्थापयन्त्यपि ।
पुनरुक्तिं भवेत् किं वा द्वे विद्ये मानयन्ति च ॥१५५॥

श्रुतिरेका प्रकुरुते विद्याया हि विधानकम् ।
अन्या श्रुतिः प्रकुरुते गुणाधानं हि शास्त्रतः ॥१५६॥

वादिनः कथयन्त्यत्र द्वे विद्ये न परस्परम् ।
ययोर्गुणोपसंहारो भवति न कदाचन ॥१५७॥

गुरो ! भवान् वदत्वत्र किं द्वयोरेव विद्ययोः ।
परस्परं गुणानां किं भवेद् वा नोपसंहृतिः ॥१५८॥

---

५१. स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपम् । – श्रुतिः

५२. मनोमयोऽयं पुरुषो भाः सत्यस्तस्मिन्नन्तर्हृदये यदा व्रीहिर्वा यवो वा स एष सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्च ।
– बृहदारण्यकोपनिषद् ५।६।१

गुरुः –

मनोमयत्वमित्याद्याः सन्ति वेदस्वरूपकाः ।
प्रत्यभिज्ञां कारयित्वा सैकां विद्यां ब्रुवन्ति ताः ॥१५९॥

एका तु श्रुतिविद्याया विधानार्थं भवत्य पि ।
अन्या श्रुतिर्गुणस्यैव विधानार्थं भवत्यपि ॥१६०॥

अतः समानशाखायां विद्याया एकता भवेत् ।
उपपन्नं भवत्येव गुणानामुपसंहृतिः ॥१६१॥

अतः शाण्डिल्यविद्या सा चैकाऽस्तीति च सिद्ध्यति ।
श्रुतितोऽपि सिद्ध्यति तत् खण्डितं वादिनां मतम् ॥१६२॥

अत्राधिकरणे चैकं सूत्रं श्रुत्या प्रकीर्तिता[५३] ।
शाण्डिल्यविद्या त्वेकाऽस्ति तदन्ते कीर्तयत्यपि ॥१६३॥

## ११.सम्बन्धाधिकरणम् (ब्रह्मसूत्रम् ३।३।११।२०–२२)

शिष्यः –

बृहदारण्यके दृष्टा 'सत्यं ब्रह्मे'ति या श्रुतिः[५४] ।
उपक्रमेण साऽऽयाता 'यत् तत् सत्य'मिति क्रमात्[५५] ॥१६४॥

बृहदारण्यके चोक्ता सत्यविद्याऽस्ति या पुनः ।
तस्यां दृष्टमहोंऽशंयेत् तद्ध्यानार्थं हि बोधताम् ॥१६५॥

तदाध्यात्मिकनामाऽऽख्यमक्षिनामाऽख्यमस्ति यत् ।
तत् तत् पुरुषध्यानार्थमुपदिष्टं सनातनम् ॥१६६॥

---

५३. समान एवं चाभेदात् । – ब्रह्मसूत्रम् ३।३।१०।१९

५४. सत्यं ब्रह्म । – बृहदारण्यकोपनिषद् ५।५।१

५५. सद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषः । – बृहदारण्यकोपनिषद् ५।५।२

किमेतयोर्द्वयो नाम्नोरेकस्मिन् पुरुषे हि किम् ?
भवत्येवो पसंहारो यद्वा भवति किं पृथक् ॥१६७॥

वादिनः प्रवदन्त्यत्रसन्देहे स्वमतं पुनः ।
द्वयोः पुरुषयोः सम्यग् भवत्येवोपसंहृतिः ॥१६८॥

यथा शाण्डिल्यविद्यायामेकत्र समुपागते ।
अभवदुपसंहारो नाऽस्मिन् भवति तत्पुनः ॥१६९॥

आज्ञापयत्वत्र गुरो ! चैकस्मिन् पुरुषे न वा ?
पृथगेवोपसंहारो भवत्येवाऽत्र किं न वा ? ॥१७०॥

गुरुः –
एतयोरुपसंहारः स्थलद्वयमवाप्य तु ।
भवितुं नैव शक्नोति 'तस्याहस्तस्यामहमतः ॥१७१॥

उभयोरुभये प्राप्तिः सम्भवं न हि दृश्यते ।
उपासना सम्भवति तत् तत् स्थानविशेषके ॥१७२॥

स्थानं विशेषमित्यत्र 'य एष पुरुषो'ऽस्त्यपि[५६] ।
पुमाधि दैविको दृष्टः श्रुतौ सुस्पष्टमागतः ॥१७३॥

वाक्यं तदौपनिषदं सरहस्यं सनामकम् ।
दक्षिणाक्षस्य पुंसो हि 'योऽयम्' श्रुत्यंशगोचरम्[५७] ॥५७॥

पुमस्ति दक्षिणाक्षस्य 'सोऽध्यात्म'पुरुषोऽस्ति यः ।
तस्य स्थानविशेषस्य चोपदेशार्थशंसनम् ॥१७५॥

---

५६. य एष एतस्मिन् मण्डले पुरुषः । – बृहदारण्यकोपनिषद् ५।५।३
५७. 'तस्योपनिषदहः' इति श्रावयति, योऽयं दक्षिणेऽक्षन्पुरुषः । – बृहदारण्यकोपनिषद् ५।५।४

शिष्यः –

अधिदैवं तथाऽध्यात्ममेकं ब्रह्म सनातनम्[५८] ।
इत्युक्तमुभयत्रापि कथं तत् प्रतिपद्यते ॥१७६॥

गुरुः –

युक्तं तत्तु परं सौम्य ! गुरोरेकस्य संस्थितौ[५९] ।
उत्थितेऽपि विचारे तु भिन्ना दृष्टा व्यवस्थितिः ॥१७७॥

'तस्यैतस्ये'ति संप्रोच्याऽतिदेशयति च श्रुतिः[६०] ।
तत्र विद्यास्थले नैव क्रियते चोपसंहृतिः ॥१७८॥

आदित्यस्य तथैवाऽक्ष्णोः स्थानभेदेन भिन्नता ।
धर्मभेदाच्चोभयोर्न भवत्येवोपसंहृतिः ॥१७९॥

अत्राधिकरणे सूत्रत्रितयं समुपागतम्[६१] ।
श्रुतिप्रमाणेन वक्ति द्वयोर्नैकत्र संहृतिः ॥१८०॥

---

५८. कुत उभयोरुभयत्र प्राप्तिः ? नन्वेक एवायमधिदैवतामध्यात्मञ्च पुरुषः, एकस्यैव सत्यस्य ब्रह्मण आयतनद्वयप्रतिपादनात् । – शाङ्करभाष्यम्, ब्रह्मसूत्रम्

५९. सत्यमेवमेतत्, एकस्यापि त्ववस्थाविशेषोपादानेनैवोपनिषद् विशेषोपदेशात् तदवस्थस्यैव सा भवितुमर्हतीति । अस्ति चाऽयं दृष्टान्तः सत्यप्याऽऽचार्यस्वरूपानपाये यदाचार्यस्याऽऽसीनस्याऽनुवर्तनमुक्तं न तत् तिष्ठतो भवति, यच्च तिष्ठत उक्तं न तदासीनस्येति । – शाङ्करभाष्यम्, ब्रह्मसूत्रम् ३।३।११।२१

६०. तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमनुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम ।
– छान्दोग्योपनिषद् १।७।५

६१. सम्बन्धादेवमन्यत्रापि । – ब्रह्मसूत्रम् ३।३।११।२०–२२

## १२. सम्भृत्यधिकरणम् (ब्रह्मसूत्रम् ३।३।१२।२३)

शिष्यः –

या या सम्भृतिगौण्याद्या विद्या शाण्डिल्यविद्यया ।
सहोपसंहृताः स्युर्वा न स्युर्वा तत्र किं भवेत् ?॥१८१॥

सन्देहोऽत्र समायातो विषयेऽत्र तु वादिनः ।
भवत्येवोपसंहार उभयोः कथयन्त्यपि ॥१८२॥

राणायनीय श्रुत्या ते प्रमाणं दर्शयन्ति च ।
अन्यैरपि प्रमाणैश्च भवतीति स्थिरंमनाः ॥१८३॥

'ब्रह्मज्येष्ठे' ति वाक्येन नाम देवादिकं हि यत्[६२] ।
दृष्टं तदाधार एव ब्रह्मसत्तां समाप्नुवन् ॥१८४॥

समृद्धिं ब्रह्मणस्तत्र स्वर्गव्याप्त्यादिलक्षणम् ।
सर्वा विभूतयस्तस्य पठ्यन्ते च सनातनाः ॥१८५॥

चर्चां कृत्वा गुणानामाधिदैविकस्य ब्रह्मणः ।
उपास्यरूपं मत्वा तद्व्याख्यां प्रकुरुते श्रुतिः ॥१८६॥

अतः सम्भृतिगौण्याद्या दृष्टा ये ब्रह्मणो गुणाः ।
सर्वे शाण्डिल्यविद्यायां भवन्त्येवोपसंहृताः ॥१८७॥

तदित्थं पूर्वपक्षाणां मतमागतवान् गुरो !
किं भवत्युपसंहारो न वा किं भवति प्रभो ! ॥१८८॥

---

६२. ब्रह्म ज्येष्ठा सम्भृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान ।
– राणायनीयशाखा, खिलशिष्टप्रकरणम् ।

गुरुः –
गुणसम्भृतिमध्येषु नैकोऽपि तत्र दृश्यते ।
कथं शाण्डिल्यविद्यायामुपसंह्रियते ? न हि ॥१८९॥

विद्यानामेकतायै च प्रत्यभिज्ञां विना कथम् ?
कथं शण्डिल्यविद्यायां भवेत्तदुपसंहृतिः ॥१९०॥

एकत्वं ब्रह्मणो मात्रं गृहीत्वैवोपसंहृतिः ।
क्रियते चेत् कुत्र न स्यात् ? भवेदनुपसंहृतिः ॥१९१॥

अतः सम्भृतिरित्यादिगुणानामुपसंहृतिः ।
नैव शाण्डिल्यविद्यायां भवति, यद् वदन्तु ते ॥१९२॥

अत्राधिकरणे सूत्रमेकं वक्ति समन्ततः[६३] ।
न हि शाण्डिल्यविद्यायामुपसंह्रियते क्वचित् ॥१९३॥

## १३. पुरुषाधिकरणम् (ब्रह्मसूत्रम् ३।३।१३।२४)

शिष्यः –
तैत्तिरीताण्डिशाखायां पठ्यते यदि भो गुरो ?
दृश्यन्ते पौरुषी विद्याः समाना भिन्नवृत्तयः ॥१९४॥

सन्देहोऽत्र समायातः समाना वा पृथग् हि ताः ?
पूर्वपक्षा वदन्त्यत्र समाने ते उभे अपि ॥१९५॥

वादिनः कथयन्त्यत्र प्रमाणैः श्रुतिदर्शितैः ।
सैका हि पौरुषी विद्या भेदभिन्ना कथञ्चन ॥१९६॥

---

**६३. सम्भृतिद्युव्याप्त्यपि चातः । – ब्रह्मसूत्रम् ३।३।१२।२४**

तैत्तिरीयकशाखाया 'तस्यैवं विदुष'इति[६४] ।
आगता पौरुषी विद्या ताण्ड्यां सा 'पुरुष' इति[६५] ॥१९७॥

उभयोरपि श्रुत्योःस्तःतयोर्धर्मौ समानकौ ।
प्रातः सवनमित्यादिकर्माण्यपि तथा तयोः ॥१९८॥

पूर्वोक्तपूर्वपक्षाणां मतमेतद् यदागतम् ।
एताः पुरुषविद्याः किं समाना वा पृथक् पृथक् ? ॥१९९॥

गुरुः –
ता वेद्यरूपा बहुशः श्रूयन्ते भेदरूपकाः ।
व्यधिकरणषष्ठी स पुरुषस्तैत्तिरीयके ॥२००॥

स्वतस्ते यज्ञपुरुषे वदन्ति ताण्डिशाखिनः ।
सामानाधिकरण्यं तद् दृश्यते श्रूयते श्रुतौ ॥२०१॥

ताण्ड्यां तु त्रिकमायुष्यं दृश्यन्ते तद् विभक्तकम् ।
प्रातर्मध्याह्नसायं च कार्याणि सवनानि च[६६] ॥२०२॥

मरणाऽवभृथत्वादि धर्मेष्वपि समानता ।
दृश्यते च तयोस्तत्र गुणेषु ह्यसमानता ॥२०३॥

तैत्तिरीयकविद्यायां दृश्यते न ह्युपासना ।
परन्तु ब्रह्मविद्यायाः प्रशंसा तत्र दृश्यते ॥२०४॥

एतस्मात् कारणात् सर्वविद्यायां तैत्तिरीयके ।
धर्मेषु ताण्डिविद्याया न भवेदुपसंहृतिः ॥२०५॥

---

६४. तस्यैवं विदुषो यज्ञस्याऽऽत्मा यजमानः श्रद्धा पत्नी । – राणायनीयशाखा ८०
६५. पुरुषो वाव यज्ञः । – ताण्ड्युपनिषद्
६६. यत्प्रातर्मध्यन्दिनं सायञ्च तापि सवनानि । – राणायनीयशाखा ८

अत्राधिकरणे सूत्रमेकं वक्ति यथाश्रुतिः[६७] ।
तैत्तिरीताण्डिरुभयोर्न भवत्युपसंहृतिः ॥२०६॥

## १४. वेधाद्यधिकरणम् (ब्रह्मसूत्रम् ३।३।१४।२५)

शिष्यः –
वेधमन्त्रप्रवर्ग्याद्या विद्याङ्गानि न वा किमु ?
सन्देहोऽत्र समायातः कि तान्यङ्गानि वा न वा ? ॥२०७॥

वादिनः कथयन्त्यत्र विद्यायाः सह तावुभौ ।
तिष्ठतो वेधकर्माद्या विद्याङ्गानि भवन्ति वै ॥२०८॥

यदत्र पूर्वपक्षास्ते कुर्वन्तः श्रुतिमन्त्रणम्[६८] ।
वेधप्रवर्ग्यादीन्यपि च विद्याङ्गानि ब्रुवन्त्यहो ! ॥२०९॥

यथा बृहस्पतियागे वाजपेये च सङ्गते[६९] ।
विनियोगोऽपि भविता तथैतेषु च सङ्गते ॥२१०॥

तादित्थं पूर्वपक्षाणां सुदृढं मतमागतम् ।
किं भवत्युपसंहारो ? विद्यायामिह संगतः ? ॥२११॥

गुरुः –
आथर्वणा गदन्त्यत्र प्रारम्भे प्रगता इमे ।
'सर्वं प्रविध्य हृदयं प्रविध्यम्' कथयन्त्यपि ॥२१२॥

---

६७. पुरुषविद्यायामिव चेतरेषामनाम्नात् । – ब्रह्मसूत्रम् ३।३।१३।२४
६८. भूः प्रपद्येऽमुनामुनामुना । – छान्दोग्योपनिषद् ३।१५।३
६९. वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत इति श्रुतिः ।

प्रवर्ग्याद्या वेधमन्त्रा विद्याऽङ्गं न भवन्ति च ।
यावत् तावत् प्रमाणानि पूर्वपक्षा ददत्वपि ॥२१३॥

'सर्वं प्रविध्येति मन्त्रा आभिचारि दृष्टयः ।
तादृक्कर्माङ्गभूतास्तु विद्याङ्गं न भवन्त्यपि ॥२१४॥

सान्निध्यमात्रेण तु ते विद्याङ्गं न भवन्त्यपि ।
श्रुतिलिङ्गप्रमाणेन कर्माणि दुर्बलान्यहो ![70] ॥२१५॥

लिङ्गरूपादिभिर्वेधप्रवर्ग्याः सन्ति येऽपि ते ।
समानधर्मे यान्त्येव भवन्ति चोपसंहृताः ॥२१६॥

अतः सन्निधिमात्रेण विद्याङ्गानि भवन्ति नो ।
अरण्यानुवचोभिस्ते समधमेऽभियान्त्यपि ॥२१७॥

अत्राधिकरणे सूत्रमेकं वक्ति यथार्थतः[71] ।
प्रवर्ग्याद्या न विद्याङ्गं भवन्त्येव हि शास्त्रतः ॥२१८॥

## १५. हान्यधिकरणम् (ब्रह्मसूत्रम् ३।३।१५।२६)

वर्णकद्वयमारक्ष तावुभौ क्रमशोऽधुना ।
शङ्कामुत्थाप्य प्रथमं पूर्वपक्षं च दर्शयन् ॥२१९॥

ततः सिद्धान्तपक्षं च दर्शयित्वा यथाक्रमम् ।
द्वयोरप्युपसंहारस्तदन्ते क्रियतेऽपि च ॥२२०॥

---

७०. श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् । – जैमिनिसूत्रम् ३।३।१३

७१. वेधाद्यर्थभेदात् । – ब्रह्मसूत्रम् ३।३।१४।१५

वर्णकम् – १

शिष्यः –

पुण्यपापे विहायैव ताण्डिर्वदति वाजिवत्[७२] ।
प्रत्यग्रूपं गृहीत्वैव जनो मुक्तः प्रयात्यपि ॥२२१॥

तथैव मुण्डको वक्ति नद्यः सागरगा इव[७३] ।
विहाय नामरूपाणि यथा सागरगामिनी ॥२२२॥

शाट्यायनी श्रुतिर्वक्ति धर्मपापेऽपि धीमतः[७४] ।
प्राप्नुवन्ति सुता धर्मं पापमात्रं तु वैरिणः ॥२२३॥

कौषीतकिश्रुतिर्वक्ति त्यागी सुकृत दुष्कृते[७५] ।
विद्वान् तरति पुण्यादीस्तस्य गृह्णन्ति बान्धवाः ॥२२४॥

ग्राहकेऽपि श्रुतौ नास्ति यदि त्यागस्तथापि तत् ।
अर्थात् त्यागस्य प्राप्तिस्तु भवेद् वा न भवेत् ततः ॥२२५॥

त्यागस्य मात्रं मिलति नास्ति चेद् ग्रहणश्रुतिः ।
ग्रहणस्य स्वतःप्राप्ति र्भवेद् वा न भवेत् श्रुतेः ॥२२६॥

वादिनश्चात्र सन्देहे त्यागेऽपि प्रवन्त्यहो !
ग्रहणस्य भवेत् प्राप्तिर्वदन्ति सुदृढा हि ते ॥२२७॥

प्रथमे वर्णके प्राप्तं यदुपायनमस्ति तत् ।
तस्याऽप्यत्रोपसंहारो भवतीह न वाऽगते ॥२२८॥

---

७२. अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि। – छान्दोग्योपनिषद् ८।१३।१

७३. तथा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति। – मुण्डकोपनिषद् ३।२।८

७४. तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्। – श्रुतिः

७५. तत्सुकृतदुष्कृते विधूनुते तस्य प्रियाः, ज्ञातयः सुकृतमुपयन्त्यप्रियो दुष्कृतम्।
– कौषीतकिब्राह्मणोपनिषद् १।४

श्रुतमाक्षेपभेदौ च कथयन्त्यत्र वादिनः ।
विद्याभेदान्न भवति यत् कृते नोपसंहृतिः ॥२२९॥

अस्मिन् वदतु हे ब्रह्मन् ! विद्याभेदेऽपि तत्र तत् ।
उपायनस्य भवति न किं तत्रोपसंहृतिः ? ॥२३०॥

अथवा किमु हानार्थं भवेदस्योपसंहृतिः ।
सुष्पष्टं वदतु ब्रह्मन् ! हानं वा किमुपायनम् ॥२३१॥

गुरुः –
अर्थवादं गृहीत्वा तद् विद्याभेदो भवेदपि ।
तदुपायनस्य भवति तत्र गत्वोपसंहृतिः ॥२३२॥

सामर्थ्यादपि विद्यायाः संसारभूतकारणम् ।
विदुषां पापपुण्यादीन् भवन्त्येव निवारणम् ॥२३३॥

मित्रन्ति सुकृताचारा द्वेष्याः कर्षन्ति दुष्कृतिम् ।
स्तुत्यर्थं त्यागग्रहणे त्यागेऽपि ग्रहणायिताः ॥२३४॥

सामान्यस्तुतिरूपा हि चैकविंशादयोदिताः[७६] ।
हानस्य प्रत्यभिज्ञाऽपि चार्थवादायिताऽऽकृता ॥२३५॥

वर्णकम्–२
शिष्यः –
द्वितये वर्णके प्राप्तः शब्दो विधूननायितः ।
त्यागो वा चालनं कोऽस्ति ? सन्दिग्धं मे मनोऽभवत् ॥२३६॥

---

७६. एकविंशो वा इतोऽसावादित्यः । – छान्दोग्योपनिषद् २।१०।५

वादिनः प्रवदन्त्यत्र 'पताकेव शिखायितः'[७७] ।
सोऽयं विधूनशब्दार्थो नैव हानं न चालनम् ॥२३७॥

ब्रह्मन्नत्रैव सन्देहे किन्तदस्ति विधूननम् ?
चालनं वा भवेत् त्यागः प्रबोधयतु मामिह ।२३८॥

गुरुः –
तद्विधूननशब्दार्थस्त्यागः कथयति श्रुतिः[७८] ।
प्रक्षाल्य सर्वपापानि ज्ञानी विमुक्तिमेष्यति ॥२३९॥

वदन्तु चालनं ते तु परं सिद्धान्तिनः स्वतः ।
त्यागो विधूननस्यार्थो यद्वा हानं हि तत्वतः ॥२४०॥

वर्णकद्वयमेवाऽत्र सूत्रमेकमवर्णयत्[७९] ।
हानस्य शंसनं कृत्वा चोपसंहरति श्रुतिः ॥२४१॥

## १६. साम्परायाधिकरणम् (ब्रह्मसूत्रम् ३।३।१६।२७–२८)

शिष्यः –
ब्रह्मविद् ब्रह्मणो लोकं प्रगच्छन् पथि वा किमु ?
मृत्युपूर्वं हि पुण्यादिफलं त्यजति तद् गृहे ॥२४२॥

सन्देहोऽत्र समायातः पूर्वपक्षवचोऽत्र तु ।
विरजातरणे मार्गे त्यजन्तीति ब्रुवन्ति ते ॥२४३॥

---

७७. न हानं विधूननमभिधीयते 'धूञ् कम्पने' इति स्मरणात्, 'दोधूयन्ते ध्वजाग्राणि' इति च वायुना चाल्यमानेषु ध्वजाग्रेषु प्रयोगदर्शात् । तस्माच्चालनं विधूननमभिधीयते ।
– शाङ्करभाष्यम्, ब्रह्मसूत्रम् ३।३।१५।२६

७८. अश्व इव रोमाणि विधूय पापम् । – छान्दोग्योपनिषद् ८।१३।१

७९. हानौ तूपायनशब्दशेषत्वात् कुशाछन्दः स्तुत्युपगानवत्तदुक्तम् ।
– ब्रह्मसूत्रम् ३।३।१५।२६

पर्यङ्कस्थः पुमान् यत्र ब्रह्म वर्वर्ति तत्र हि[८०] ।
गच्छतः पुण्यपापानि क्षिप्यन्ते पथि सत्वरम् ॥२४४॥

देवयानेन मार्गेण गच्छन्तो ब्रह्मवादिनः[८१] ।
कौषीतकि श्रुतिर्वक्ति तरन्ति विरजानदीम् ॥२४५॥

तदित्थं पूर्वपक्षाणां मतमागतवान् गुरो !
पुण्यपापानि मार्गे वा मृत्युपूर्वं त्यजन्ति किम् ? ॥२४६॥

गुरो ! किं पुण्यपापानि मार्गे त्यजति ब्रह्मवित् ।
मृत्युपूर्वं त्यजति वा बोधयत्वत्र भो भवान् ॥२४७॥

गुरुः –
ब्रह्मविन्मृत्युपूर्वं हि पुण्यपापादिकानि च ।
ज्ञानाग्नौ स जुहोत्येव भस्मीभवन्ति सर्वथा[८२] ॥२४८॥

अतो मार्गे दृश्यते या तरणे विरजानदी ।
तरणात् पुण्यपापानि विनश्यन्त्येव सत्वरम् ॥२४९॥

भणित्येषा न मिलति ब्रह्मज्ञानं यदा भवेत् ।
तत्पूर्वमेव नश्यन्ति त्यागार्थं शेषयन्ति नो ॥२५०॥

दग्धा ज्ञानाग्निना सर्वाः सञ्चिता वासना अपि ।
भूत्वा विलीना यान्त्येव त्यागार्थं शेषयन्ति नो ॥२५१॥

---

८०. स एतं देवयानं पन्थानमासाद्याग्निलोकमागच्छति । – कौषीतकिब्राह्मणोपनिषद् १।३

८१. स आगच्छति विरजां नदीं तां मनसैवात्येति तत्सुकृतदुष्कृते विधूनुते ।
– कौषीतकिब्राह्मणोपनिषद् १।४

८२. यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ – श्रीमद्भगवद्गीता ४।३७

मृत्युपूर्वं हि पापानि रोमाणीव हयो यथा[८३] ।
पुण्यान्यपि विधूयैव ब्रह्मविद् ब्रह्म गच्छति ॥२५२॥

पुत्रा मुक्तस्य जीवस्याऽऽप्नुवन्ति धनसम्पदः[८४] ।
पुण्यानि सुहृदः सत्यं पापानि रिपवः सदा ॥२५३॥

वेलायां साधको ज्ञानी ब्रह्मज्ञानं करोत्यपि ।
विहाय पुण्यपापानि याति निर्मुक्तबन्धनः ॥२५४॥

अतो हि मार्गे त्यागार्थं शिष्यन्ते नैव कानिचित् ।
अशिष्टपुण्यपापः स मुक्तो ब्रह्माऽधिगच्छति ॥२५५॥

नैमित्तिकं निमित्तं च सर्वमेवो पपद्यते ।
श्रुत्योः शाटयायनी ताण्ड्योः सङ्गतिं च मिलत्यतः ॥२५६॥

अत्राऽधिकरणे सूत्रद्वयमस्ति विशेषतः[८५] ।
मुक्तात्मनः सर्वकर्म नश्यतीति प्रवक्ति च ॥२५७॥

## १७. गतेरर्थवत्वाधिकरणम् (ब्रह्मसूत्रम् ३।३।१७।२९–३०)

शिष्यः –

पुण्यपापादिहानस्याऽनन्तरं कुरुते श्रुतिः ।
देवयान समुल्लेखं न क्वचिन्मार्गदर्शनम् ॥२५८॥

उपासकोऽपि तत्वज्ञ उभयार्थं हि वस्तुतः ।
अर्चिरादिधूममार्गौ समानां वा पृथक् पृथक् ? ॥२५९॥

सन्देहोऽत्र समायातः कथं यन्त्यपि वादिनः ।
अर्चिरादिकमार्गस्तु स एक उभयोरपि ॥२६०॥

---

८३. अश्व इव रोमाणि विधूय पापम् । – छान्दोग्योपनिषद् ८।१३।१
८४. तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम् । – श्रुतिः
८५. साम्पराये तर्तव्याभावात्तथा ह्यन्ये । ब्रह्मसूत्रम् ३।३।१६।२७,२८

अस्मिन्नपि पुण्यपापकर्मणां त्यागवत् समम् ।
संस्मर्तव्यं साम्पराये मार्गैक उभयोरपि ॥२६१॥

तदित्थं मतमायातं वादिनां भवता गुरो !
उपयुक्तं नोपयुक्तं तत्सर्वं कथ्यतामिह ॥२६२॥

गुरुः –
गतिर्भवत्यर्थवती क्वचिदर्थवती न च ।
सगुणोपासनायां तु गतिरर्थवती सदा ॥२६३॥

विभिन्नलोकसम्प्राप्तौ गतिरर्थकरी भवेत् ।
कैवल्याप्तौ गतिः शून्या भवेत् सम्यक् प्रदर्शने ॥२६४॥

ज्ञानिनामिह ते प्राणा नोत्क्रामन्ति च यान्त्यथ[८६] ।
ब्रह्मैवाऽऽसीत् पुनर्ब्रह्म भवेत् प्राणोत्क्रमेऽपि च ॥२६५॥

पुण्यपापादिकर्माणि विनश्यन्ति समूलतः[८७] ।
निरञ्जना ज्ञानिनस्ते यान्ति कैवल्यमुक्तये ॥२६६॥

ग्रामे लोके सञ्चलने जनो मार्गमपेक्षते ।
आरोग्यार्थे तु मार्गस्याऽपेक्षा भवति न क्वचित् ॥२६७॥

इत्थमेव क्रमाद् याते जनो मार्गमपेक्षते ।
पुनः कैवल्य मुक्त्यर्थ न हि मार्गमपेक्षते ॥२६८॥

एतावदपि मोक्षस्य संक्षिप्तं शंसनं कृतम् ।
फलाध्याये चतुर्थे तु भविता पूर्णवर्णनम् ॥२६९ ॥

---

८६. न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति ।– बृहदारण्यकोपनिषद् ४।४।६
८७. पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति । – मुण्डकोपनिषद् ३।१।३

अत्राधिकरणे सूत्रद्वयं मोक्षस्य वर्णनम्[८८] ।
संक्षेपेण प्रकुरुते चैतत् संक्षिप्तसूचनम् ॥२७०॥

## १८. अनियमाधिकरणम् (ब्रह्मसूत्रम् ३।३।१८।३१)

शिष्यः –
सर्वसगुणविद्यासु गतिरर्थवती भवेत् ।
परं निर्गुणविद्यासु गतिर्व्यर्था भवत्यपि ॥२७१॥

कस्यां सगुणविद्यायां श्रूयते निश्चया गतिः ।
कस्यामन्यां तु विद्यायां गतिरस्त्यतिसंशया ॥२७२॥

यस्यां सगुणविद्यायां विश्रुता निश्चिता गतिः ।
तस्यां गतिर्निश्चितास्यादन्यायां तदनिश्चिता ॥२७३॥

यदा सन्देह उत्पन्नः स्वतो वदन्ति वादिनः ।
श्रूयते यत्र विद्याया गतिर्मान्याऽस्ति वस्तुतः ॥२७४॥

वदत्वत्र गुरो ! किं स्यात् ? युक्तं किं वादिनां मतम् ।
श्रुतमस्ति श्रुतौ किं वा भवेद् युक्तं कथं नु किम् ? ॥२७५॥

गुरुः –
तदत्र नियमो नास्ति फलमभ्युदयस्य यत्[८९] ।
सर्वसगुणविद्यायां देवयानं फलं स्मृतम् ॥२७६॥

---

८८. गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः । – ब्रह्मसूत्रम् ३।३।१७।२९–३०

८९. एवं प्राप्ते पठति – अनियम इति । सर्वासामेवाभ्युदयप्राप्ति फलानां सगुणानां विद्यानामविशेषेणैषा देवयानाख्या गतिर्भवितुमर्हति ।
– शाङ्करभाष्यम्, ब्रह्मसूत्रम् ३।३।१८।३१

अत्र प्रकरणादीनां विरोधोऽपि न दृश्यते।
शब्दानुमानैः सर्वैश्च कुर्वतेऽर्थमिमं दृढम् ॥२७७॥

'तद् य इत्थं विदु'वाक्यै 'र्ये चे मे' श्रुतिभिः सह[९०]।
शंसनैर्देवयानस्य सर्वेषां गृहमेधिनाम् ॥२७८॥

श्रद्धा तपोभ्यां मात्रेण लेखानां नाप्यते गतिः[९१]।
विद्यानां बलमात्रेण लभ्यते चोत्तमा गतिः[९२] ॥२७९॥

ब्रह्मलोकं गतो ज्ञानी मुक्तो भवति सत्वरम्[९३]।
अविद्वांसो न गच्छन्ति ब्रह्मलोकं कथञ्चन ॥२८०॥

ब्रह्मणो नाम सत्यं हि श्रुतिभिश्च समर्थितम्।
ते सत्योपासका यन्ति मार्गेणाऽऽश्वर्चिरादिना ॥२८१॥

विद्याा पञ्चाग्निनामेवेत्थंवित्त्वज्ञस्य वस्तुतः।
विद्यान्तराः समायान्ति ते ग्राह्याः सन्ति शास्त्रतः ॥२८२॥

मार्गद्वयौ शुक्लकृष्णौ [९४]जना यान्त्येतयोर्द्वयोः
श्रुतिस्तृतीयमार्गस्य करोत्यपि च शंसनम्[९५] ॥२८३॥

---

९०. तद् य इत्थं विदुः ... एष देवयानः पन्थाः। – छान्दोग्योपनिषद् ५।१०।१
९१. य एवमेतद् विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते। – बृहदारण्यकोपनिषद् ६।२।१५
९२. विद्यया तदारोहन्ति यत्र कामाः परागताः।
न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः॥ – श्रुतिः
९३. ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्। – कूर्मपुराण १।१२।२६९
९४. शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते।
एकया यात्यनावृत्तिमन्ययावर्तते पुनः॥ – भगवद्गीता ८।२६
९५. अथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गाः यदिदं दन्दशूकम्।
– बृहदारण्यकोपनिषद् ६।२।१६

ज्ञानिनां देवयानं स्यात् पितृयानं तु कर्मिणाम् ।
ज्ञानकर्मविहीनास्तु शून्यमार्गा भ्रमन्त्यहो ॥२८४॥

तादृशाः प्राणिनः सर्वे पारं नैव तरन्त्यहो[९६] ।
जायन्ते च म्रियन्ते च चङ्क्रमन्ति सदा भुवि ॥२८५॥

ये यान्ति देवयानेन तेषामूर्ध्वगतिर्भवेत् ।
पितृयानेन ये यान्ति जायन्ते ते पुनर्भुवि ॥२८६॥

उपकोशलविद्या च विद्या पञ्चाग्निरित्यपि ।
देवयानपथा याने द्विवारं समुपागता ॥२८७॥

द्विरुक्तिरेषा विद्याया ध्यानार्थं विद्धि सौम्य हि ।
गतेस्तु नियमो नास्ति चैतज्जानीहि तत्त्वतः ॥२८८॥

अत्राधिकरणे सूत्रमेकं वक्ति यथार्थतः[९७] ।
शास्त्रतो नियमो नास्ति वक्ति शब्दानुमानतः ॥२८९॥

## १९. यावदधिकाराधिकरणम् (ब्रह्मसूत्रम् ३।३।१९।३०)

शिष्यः –
ब्रह्मज्ञस्य जनस्येतो मुक्तिर्नित्या भवेन्न वा ?
सन्दिग्धं हृदयं विद्वन् ! मुक्तिर्नित्या भवेन्न वा ? ॥२९०॥

पूर्वपक्षा वदन्त्यत्र मुक्तिर्भवति पाक्षिकी ।
अपान्तरतमादीनां प्रमाणयन्ति नाम ते ॥२९१॥

---

९६. **अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्यसकृतावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानम् । – छान्दोग्योपनिषद् ५।१०।८**
९७. **अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् । – ब्रह्मसूत्रम् ३।३।१९।३२**

विदुषां पाक्षिकी मुक्तिर्नित्या भवति वा न वा ?
आज्ञापयत्वत्र गुरो ! सुस्पटं सर्वमेव माम् ॥२९२॥

गुरुः –
युक्तं तत् पूर्वपक्षा यदपान्तरतमादिनाम् ।
दृष्टान्तं यददुस्तत् तु ज्ञातव्यः पक्ष एव हि ॥२९३॥

अपान्तरतमादींस्तु मुक्तात्मानं स ईश्वरः ।
जगत्सञ्चालनार्थं स आदेशमनुदेशति ॥२९४॥

ईश्वराज्ञां समादाय कृत्वा सञ्चालनं जगत् ।
समयानन्तरं पश्चान् मुक्ता यान्ति परं पदम् ॥२९५॥

अवरुद्धं भवेत् कञ्चित् कालं प्रारब्धकर्म च ।
मुक्तात्मानः सृष्टिकार्यमज्ञवच् च प्रकुर्वते ॥२९६॥

तावत्कालं सुराधीनो मुक्तात्मा तत्र तिष्ठति ।
सूर्यतुल्यः स कैवल्यं मुक्तः प्राप्नोत्यनन्तरम्[९८] ॥२९७॥

यथाऽन्यविद्वानाप्नोति प्रारब्धफलमाधुरीम् ।
तथा प्राप्नोति मुक्तात्मा कैवल्यं मुक्तिमाधुरीम् ॥२९८॥

यथा जलप्रवाहोऽपि बन्धनादवरुध्यते ।
तथैव हीश्वरादेशात् प्रारब्धोऽप्यवरुध्यते ॥२९९॥

यदा बन्धाः प्रमुच्यन्ते ज्ञानिनामधिकारिणाम्[९९] ।
तत्कालमेव मुक्तात्मा कैवल्याऽमृतमश्नुते ॥३००॥

---

९८. अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता ।
– छान्दोग्योपनिषद् ३।११।१

९९. तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये । – छान्दोग्योपनिषद् ६।१४।२

नास्त्येषा पाक्षिकी मुक्तिर्ब्रह्मज्ञाने कृते सति ।
निर्दग्धकर्मबीजस्य देहोत्पत्तिरसम्भवा ॥३०१॥

ऋषयो देवमर्त्याद्या ब्रह्मज्ञानादनन्तरम्[१००] ।
अभूवन् ब्रह्म सर्वे हि प्रापन् सद्ब्रह्म सद्गतिम् ॥३०२॥

ब्रह्मज्ञानकृतो ये स्युरीश्वराज्ञां समाप्नुयुः ।
सांसारिकं कर्म कृत्वा देवाज्ञां पालयन्त्यपि ॥३०३॥

महा प्रलयवेलायां ते मुक्ताः स्युर्यदा तदा[१०२] ।
मुनिभिर्ज्ञानिभिः सार्धं कैवल्यं मोक्षमाप्नुयुः ॥३०४॥

अनुभाव्यविहीनं सत् स्वर्गस्तत् कर्मणां फलम् ।
सानुभाव्यं ज्ञानफलं मोक्षो हि ज्ञानिनां फलम्[१०३] ॥३०५॥

स्वर्गः प्राप्यो मृत्युपश्चात् तत्क्षणान्मोक्ष आप्यते ।
जीवन्मुक्तिर्भवत्येव 'अहं ब्रह्मे'ति बोधतः[१०४] ॥३०६॥

---

१००.क. भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ।
ख. स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः । – छान्दोग्योपनिषद् ७।२६।२
ग. यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ – गीता ४।३७
घ. बीजानग्न्युपदग्धानि न रोहन्ति यथा पुनः ।
ज्ञानदग्धैस्तथा क्लेशैर्नात्मा सम्पद्यते पुनः । – स्मृतिः

१०१. तयोर्देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम् ।
– बृहदारण्यकोपनिषद् १।४।१०

१०२. ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥ – कूर्मपुराणम् १।१२।२६९

१०३. यत्साक्षादपरोक्षाद् ब्रह्म । – बृहदारण्यकोपनिषद् २।४।१

१०४. अहं ब्रह्मास्मि । – बृहदारण्यकोपनिषद् १।४।१०

वामदेवस्त्वेह जीवन् 'मनुः सूर्योऽहमब्रवीत्[१०५] ।
अकरोदनुभूतिं च प्रमाणैः श्रुतिरब्रवीत् ॥३०७॥

अतो हि विदुषो या स्यात् कैवल्या मुक्तिरुच्यते ।
न हि सा पाक्षिकी मुक्तिः सा नित्या श्रुतिरुच्यते ॥३०८॥

मुक्तात्मा योऽधिकारी स्यात् ईशादेशेन सक्रियः ।
अपान्तरतमाद्यास्ते यान्ति विष्णोः परं पदम् ॥३०९॥

अत्राधिकरणे सूत्रमेकं वक्ति सदर्थतः[१०६] ।
अनित्यो न हि मोक्षस्तु नित्यः साक्षात् सनातनः ॥३१०॥

## २०. अक्षरध्यधिकरणम् (ब्रह्मसूत्रम् ३।३।२०।३३)

शिष्यः –
तदस्थूलमनण्वादि ब्रूते वाजसनिस्त्विदम्[१०७] ।
तददृश्यमथाऽग्राह्यं शाखाऽथर्वा वदत्यपि[१०८] ॥३११॥

एवं प्रकारेणान्यत्र स्थलेषु बहुषु कति ।
विशेषणमनादृत्याऽक्षरस्य ब्रह्मणः स्तुतः ॥३१२॥

दृश्यते सा वर्तते क्व कति सन्ति विशेषणम् ।
प्रतिषेधं भवत्येव ब्रह्मणोऽपि च शंसनम् ॥३१३॥

---

१०५. तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च ।
– बृहदारण्यकोपनिषद् १।४।१०

१०६. यावदधिकारमवस्थितिराधिकारिकाणाम् । – ब्रह्मसूत्रम् ३।३।१९।३२

१०७. एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवन्दन्त्यस्थूलमनण्वह्रस्व मदीर्घमलोहितमस्नेहम् ।
– बृहदारण्यकोपनिषद् ३।८।८

१०८. अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णम् ।
– बृहदारण्यकोपनिषद् ३।८।८

सर्वत्रैवोपसंहारो भवतीति न वा किमु ?
सन्दिग्धोऽस्मि गुरो ! पूर्वपक्षैरस्तीति कथ्यते ॥३१४॥

गुरो ! वक्तु भवानत्र सर्वत्रैवोपसंहृतम् ।
बुद्ध्या निषिध्यते यद्वा किं वा शास्त्रे निषिध्यते ॥३१५॥

गुरुः –
गत्वा तदक्षरे सर्वं विशेषणविशेषितम् ।
श्रौतशास्त्रानुसारेण भवत्येकोपसंहृतिः ॥३१६॥

तन्निराकाररूपत्वं ब्रह्मणः प्रतिपादनम् ।
समानमस्ति सर्वत्र नानात्वं नास्ति कुत्रचित् ॥३१७॥

यथा सर्वाणि कर्माणि लुप्यन्तेऽहीनकर्मणि[१०९] ।
तथैवाक्षरविद्यायां लुप्तं सर्वं विशेषितम् ॥३१८॥

अत्राधिकरणे सूत्रमेकं वक्ति च तत्त्वतः[११०] ।
सर्वान्त उपसंहारो भवत्येवा क्षरेऽक्षरे ॥३१९॥

## २१. इयदधिकरणम् (ब्रह्मसूत्रम् ३।३।२१।३४)

शिष्यः –
मुण्डकेऽपि च श्वेताश्वे 'द्वा सुपर्णे'ति दृश्यते[१११] ।
तदध्यात्माधिकारे हि समायातौ यथार्थतः ॥३२०॥

---

१०९. अग्नेर्वेर्होत्रं वेरध्वरम् । – शाङ्करभाष्यम्, ब्रह्मसूत्रम् ३।३।२०।३३

११०. अक्षरधियां त्ववरोध सामान्यतद्भावाभ्यामौपसदवत् तदुक्तम् ।
– ब्रह्मसूत्रम् ३।३।२०।३३

१११. द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्यनश्नन्नन्यो अभिचाकशीति । – मुण्डकोपनिषद् ३।१।१।

अन्यद् 'दृतं पिबन्तौ' तन्मन्त्रो दृष्टोऽस्ति काठके[११२] ।
त्रिणाचिकेतः पञ्चाग्निर्ब्रह्मज्ञैरपि शंसितः ।।३२१।।

गुरो ! ऽ धुनाऽस्मि सन्दिग्धो विद्या नानाऽथ वैकला ?
वादिनः कथयन्त्यत्र विद्या नैकाऽस्त्यनेकधा ।।३२२।।

दृश्यते चैतयोर्भेदो भोक्ताऽभोक्ता द्विधाकृतः ।
द्वयोरेकस्तु स्वाद्वत्ति नाऽन्यो भोक्ताऽस्ति किञ्चन ।।३२३।।

'ऋतं पिबन्ता'वित्यत्र भोक्तारौ द्वौ श्रुतावपि ।
अत एव हि विद्यायां भिन्नता दृश्यते कथम् ? ।।२२४।।

एतस्मात् कारणाद् भिन्नो दृष्टो वेद्यः कथं प्रभो ?
विद्यायां भिन्नतो दृष्टा शास्त्रे चापि कथं गुरो ? ।।३२५।।

भेदो दृष्टोऽस्ति विद्यायां स्पष्टमेव गुरो ! कथम् ?
आज्ञापयतु मामत्र स्पष्टं भेदोऽस्ति ? वा न वा ? ।।३२६।।

गुरुः –
श्रुतिसम्मतविद्या तु सैका यत् तद् वदन्तु ते ।
इयत्ता परिच्छिन्नत्वाद् द्वित्वेनाऽपि च साऽन्विता ।।३२७।।

एतस्मात् कारणान्मन्त्रौ द्वावेकस्थलमागतौ ।
जीवेश्वरावेव समं कुर्वाते प्रतिपादनम् ।।३२८।।

'द्वा सुपर्णे'ति मन्त्रस्याऽनश्नन् पदविशेषितम् ।
लक्ष्यते परमात्मानं क्षुत्पिपासाविवर्जितम् ।।३२९।।

---

**११२. ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे ।**
**छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ।। – कठोपनिषद् ३।१**

'ऋतं पिबन्ता'वित्यत्र मुक्तपीतक्रियाकरः ।
जीवात्मा लक्ष्यितो विद्धि साक्षिणा परमात्मना ॥३३०॥

तादात्म्य साहचर्याभ्यां छत्रिन्यायेन तौ प्रति ।
'ऋतं पिबन्तावित्युक्त ईशस्तु न पिबत्यहो ! ॥३३१॥

[११३]'अन्यत्र' [११४]'यः सेतु' रिति मन्त्रौ चापि विशेषतः ।
परमात्मानमेवैकं प्रतिपादयतो भृशम् ॥३३२॥

'गुहां प्रविष्टावात्मानौ' सूत्रे सर्वं विवेचितम्[११५] ।
अत एकाऽस्ति विद्या तु भेदः कोऽपि न विद्यते ॥३३३॥

पौर्वापर्यविचारेण चेदमालोचितं स्वतः ।
श्वेताश्वे काठकेऽथर्वे मतमेकं हि सर्वतः ॥३३४॥

सर्वे हि परमात्मानं कुर्वते प्रतिपादनम् ।
सनातनमभिन्नं तद् विद्या भेदो न दृश्यते ॥३३५॥

अज्ञाधिकरणे सूत्रे मियदामननादिति[११६] ।
विद्यायां नास्ति भेदोऽत्र वक्ति सूत्रं विचारतः ॥३३६॥

---

११३. अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् ।
अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद । – कठोपनिषद् १।२।१४

११४. यः सेतुरितिजानानामक्षरं ब्रह्म यत्परम् ।
अभयं तितीर्षतां पारं नचिकेतशं शकेमहि ॥ – कठोपनिषद् १।३।२

११५. गुहां प्रविष्टावात्मानौ हि । – ब्रह्मसूत्रम् १।२।११

११६. इयदामननात् । ब्रह्मसूत्रम् ३।३।२१।३४

## २२. अन्तराधिकरणम् (ब्रह्मसूत्रम् ३।३।२२।३५–३६)

शिष्यः –

'यत्साक्षादपरोक्षाच्च' उषस्ताच्चकहोलतः[११७] ।
द्विवारमागतः प्रश्नः श्रुतौ वाजसनेयके ॥३३७॥

संशयोऽत्राऽभवद् ब्रह्मन् ! सर्वा विद्या किमेकला ?
यद्वा गुरो ! वदतु मां विद्याऽनेका भवन्ति किम् ? ॥३३८॥

पूर्वपक्षा वदन्त्यत्र विद्या नैका भवन्त्यतः ।
द्विवारं विहिताः प्रश्नाः किमु व्यर्था भवन्त्यहो ! ॥३३९॥

'यजति' क्रियया हेतोर्भेद आयाति कर्मणि ।
तथाऽभ्यासस्य हेतोर्वै विद्यायां भेद आगतः ॥३४०॥

अनेकविद्या दृश्यन्ते तदित्थं वादिनां मते ।
आज्ञापयत्वत्र भवान् विद्या भेदा अहो ! कति ? ॥३४१॥

गुरुः –

आत्माऽन्तरे ब्रह्म वस्तिरुभे हि वदतः श्रुती ।
इत्थं विषयकाः प्रश्ना आयान्त्येवोत्तराणि च ॥३४२॥

उभयोर्मन्त्रयोः सर्वप्राणिनामन्तरस्थितः ?
आत्मा तिष्ठति सर्वत्र श्रुतयः प्रवदन्ति च ॥३४३॥

आम्नाय भेदतोऽप्यत्र विद्याभेदः प्रदृश्यते ।
अन्यथाऽनुपपन्नः स्यात् तद् वक्तुं शक्यते कथम् ? ॥३४४॥

---

**११७.क. यत्साक्षादपरोक्षाद् ब्रह्म, य आत्मा सर्वान्तरः ।**
**– बृहदारण्यकोपनिषद् ३।४।१, ३,५।१**
**ख. एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।**
**– श्वेताश्वतरोपनिषद् ६।११**

यथाऽन्यत्रोपदेशोऽस्ति तथैवाऽस्योपपत्तितः ।
ताण्डेरुल्लिखित आत्मातुल्यो भेदो न दृश्यते[११८] ॥३४५॥

जिज्ञासाशान्तये वत्स ! उपदेशः क्रियेत वै ।
तदर्थमेव विद्यायां भेदो न भवति क्वचित् ॥३४६॥

उपक्रमोपसंहारौ 'अतोऽन्यः' श्रुतितोऽपि च ११९।
एकार्थताऽस्ति विद्यायां कश्चिद् भेदो न दृश्यते ॥३४७॥

'यदेवे'ति श्रुतौ दृष्ट 'एव' शब्दोऽस्ति तेन वै ।
पूर्वमेवाऽस्य प्रश्नस्याऽनुकर्षः प्रविधीयते ॥३४८॥

पूर्वापरविचारेण विद्यायामेक अर्थता ।
दृश्यते चापि हे सौम्य ! नान्यथा भवति क्वचित् ॥३४९॥

अत्राऽधिकरणे सूत्रद्वितयं वक्ति चान्ततः[१२०] ।
न 'तत्वमसि' वद् भेदो विद्यायां दृश्यते क्वचित् ॥३५०॥

### २३. व्यतिहाराधिकरणम् (ब्रह्मसूत्रम् ३।३।२३।३७)

शिष्यः –
जीवेश्वरद्वयोरन्तर्व्यतिहारो भवेन्न वा ।
विशेषणविशेष्यस्य भावो भवति वा न वा ? ॥३५१॥

उपास्योपासकस्यापि वर्णनं कुरुते श्रुतिः[१२१] ।
अभेदं चिन्तयन्ती सा स्वदेहे कर्तृकर्मणोः ॥३५२॥

---

११८.क. स आत्मा तत्त्वमसि श्वेतकेतो । – छान्दोग्योपनिषद् ६।८।७
ख. भूय एव मा भगवान् विज्ञापयतु ।– छान्दोग्योपनिषद् ६।५।४
११९.यदेव साक्षादपरोक्षाद् । – बृहदारण्यकोपनिषद् ३।५।१
१२०.अन्तरा भूतग्रामवत्स्वात्मनः । – ब्रह्मसूत्रम् ३।३।२२।३५–३६
१२१. तद् योऽहं सोऽसौ योऽसौ सोऽहम् । – श्रुतिः

जीवेश्वरद्वयोरन्तर्व्यतिहारो य आगतः ।
उपासनार्थमायातो यद्वाऽन्यत् स्यात् प्रयोजनम् ॥३५३॥

तदित्यमाप्तः सन्देहो वादिनां त्वरितं मतम् ।
एकरूपं प्रकुर्वाणाः करवामो वदन्त्यपि ॥३५४॥

व्यतिहारोऽभवदत आत्मन ईश्वरेण तु ।
अस्त्येकत्वं नाऽतिरिक्तं नाऽन्यद् योग्यं विचिन्तनम् ॥३५५॥

व्यतिहारसहायेनाऽहं त्वं त्वमहमित्यपि[१२२] ।
एकत्वस्यैव दार्ढ्यार्थं श्रुतिः शंसति सन्ततम् ॥३५६॥

सप्रमाणं समायातं वादिनामीदृशं मतम् ।
गुरो ! वदतु किं बुद्धिमेकत्वं योजयाम किम् ? ॥३५७॥

गुरुः –
व्यतिहारः समायातो ध्यानार्थमेव विद्धि तम् ।
श्रुतिशंसित एषोऽपि सर्वात्मत्वगुणो यथा ॥३५८॥

'अहं त्वं त्वमहं' चैतत् श्रुतिनिर्देशसाधकम् ।
उभयार्था मतिं कृत्वा श्रुत्यर्थो सार्थको भवेत् ॥३५९॥

उभयार्थमिदं दृष्टमाध्यानार्थं हि निश्चितम् ।
नो चेत् तदन्यथा प्राप्ते श्रुती स्यातामनर्थकौ ॥ ३६०॥

ऐक्यं भूत्वाऽपि तत् सर्वं व्यतिहारोक्तिमाश्रितम् ।
द्विप्रकाराऽऽगता बुद्धिर्निश्चितोपासनार्थिका ॥३६१॥

---

**१२२. त्वं वा अहमस्मि भगवो देवतेऽहं वै त्वमसि । – श्रुतिः**

श्रुतौ व्यक्तेरीशतत्त्वे जीवत्वप्रतिपादनम् ।
उपासनार्थमायातं व्यतिहारस्य चिन्तनम् ॥३६२॥

यथा गुणोपदेशार्थं सत्यकामादिचिन्तनम् ।
ध्यानार्थमुपदिष्टं सद् व्यवहारार्थमेव तत् ॥३६३॥

तथापि तैः सर्वगुणैर्युक्तो योऽस्तीश्वरो हि सः ।
सदृशं स्मरणीयं तत् समानीयात्र तादृशम् ॥३६४॥

अत एवाऽत्र यद् दृष्टं महत्वं व्यतिहारके ।
ध्यानार्थमेव तत् साम्यमुपहारार्थ मेव च ॥३६५॥

अत्राधिकरणे सूत्रं 'व्यतिहारः' समुच्चरत्[१२३] ।
उपासनार्थमायातो दार्ढ्यार्थमपि शंसितः ॥३६६॥

### २४. सत्याद्यधिकरणम् (ब्रह्मसूत्रम् ३।३।२४।३७)

शिष्यः –

तस्य नामाक्षरेणैव सत्यविद्येति संब्रुवन्[१२४] ।
उपासनार्थं विद्यायाः श्रुतिः शंसति सन्ततम् ॥३६७॥

तत् सत्यमस्ति यत् तच्चाऽऽदित्यश्रुतिसमर्थितम्[१२५] ।
तन्मण्डलस्थः पुरुषो दक्षिणे नयनस्थितः ॥३६८॥

सन्देहोऽत्र समायातः सत्यविद्या किमु द्विधा ?
यद्वा सैका वादिनस्तु प्रवदन्ति द्विधेत्यपि ॥३६९॥

---

१२३. व्यतिहारो विशिंषन्ति हीतरवत् । – ब्रह्मसूत्रम् ३।३।२३।३७
१२४. स यो हैतत् महद्यक्षं प्रथमजं वेद सत्यं ब्रह्म । – बृहदारण्यकोपनिषद् ५।४।१
१२५. तद् यत् तत्सत्यमसौ स आदित्यो य एष एतस्मिन् मण्डले
पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुषः । – बृहदारण्यकोपनिषद् ५।५।२

सा विद्या तु द्विधेत्यत्र फलाप्तौ भिन्नताऽस्त्यपि ।
प्रथमं स्याल्लोकजयो[१२६] द्वितीयं पापनाशनम्[१२७] ॥३७०॥

उपासनाफले चेमे वस्तुतो द्वितयं फलम् ।
आकर्षणमुपास्यस्य चैकत्वं वस्तुतत्त्वतः ॥३७१॥

वादिनां मतमायातं द्विधां विद्यां प्रकुर्वताम् ।
युक्तमेतन्न वाऽयुक्तं गुरो ! वदतु तद् भवान् ॥३७२॥

गुरुः –
'तद यत् सत्यं तदेवाऽसौ' सत्यविद्याऽस्ति सैकला ।
भवेदत्रापि प्रकृतेराकर्षणचिरन्तनम् ॥३७३॥

उक्ताकर्षणहेतोर्हि पूर्वविद्या समेति च ।
सत्येनोत्तरयन्ती च सिन्धौ मिलति वारिवत् ॥३७४॥

'तद् यत् सत्य'मयं मन्त्रः सत्यं ब्रह्म सनातनम्[१२८] ।
कथं तस्याऽनुवादेन वर्ण्यते रविरूपकम्[१२९] ॥३७५॥

एतस्मात् कारणादेकं सत्यविद्यासनातनम् ।
[१३०]पापनाशार्थ मात्रं तदर्थवादाय शंसितम्[१३१] ॥३७६॥

सैका विद्या यतो गत्वा सत्ये मिलति ब्रह्मणि ।
अन्त्येऽपि सूत्रं वदति भवत्येवोपसंहृता[१३२] ॥३७७॥

---

१२६. जयतीमाँल्लोकान् । – बृहदारण्यकोपनिषद् ५।४।१
१२७. हन्ति पाप्मानं जहाति च य एवं वेद । – बृहदारण्यकोपनिषद् ५।५।३
१२८. तद् यत्सत्यम् । – बृहदारण्यकोपनिषद् ५।५।२
१२९. असौ स आदित्यो य एष । – बृहदारण्यकोपनिषद् ५।५।२
१३०. पापघातलोकजयकाम उपासीत । – श्रुतिः
१३१. अङ्गेषु फलश्रुतिरर्थवादः । – न्यायः
१३२. सैव हि सत्यादयः । – ब्रह्मसूत्रम् ३।३।२४।३८

## २५. कामाद्यधिकरणम् (ब्रह्मसूत्रम् ३।३।२५।३९)

शिष्यः –

‘अथ यत्’ श्रुतितोऽप्यत्र समुपक्रम्य पठयते[१३३] ।
‘एष आत्मे’ति कुरुते शंसनं पुनरेव तम्[१३४] ॥३७८॥

एवं क्रमेणाऽन्यमन्त्रः ‘स वा एष’ इति वदन् ।
कुरुते भिन्नरूपेण चात्मनो वर्णनं श्रुतौ ॥३७९॥

तदत्र दहराकाशो हार्दाकाशो यथाक्रमात् ।
सत्यकामवशित्वादिगुणैः सन्ति समन्विताः ॥३८०॥

दहराकाशमुत्थाप्य श्रुतिरेका प्रशंसति ।
सूक्ष्मं वर्णयति ब्रह्म समुपक्रम्य ब्रह्मणः ॥३८१॥

तदित्थं श्रुतिरन्या च प्रवक्ति ब्रह्मणः स्थितिम् ।
श्रुतिर्वक्ति हृदाकाशे शेते ब्रह्म सनातनम् ॥३८२॥

समागत्याऽत्र विद्याया यदेकत्वं परस्परम् ।
संशयोऽभवदत्रोपसंहृतं भवति न वा ? ॥३८३॥

वदन्ति पूर्वपक्षास्तु ज्ञेयोपास्यमुभौ समौ ।
भिन्नौ वा नोपसंहारो भवत्यत्र कदाचन ॥३८४॥

द्वयोरत्र भवति वा न वा किमुपसंहृतिः ?
ब्रह्मन्नाज्ञापयत्वत्र प्रमाणैः सह सम्प्रति ॥३८५॥

---

१३३. अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः ।
– छान्दोग्योपनिषद् ८।१।१

१३४. एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघित्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः । – छान्दोग्योपनिषद् ८।१।५

गुरुः –

'स वा एषोऽस्ति छान्दोग्ये' 'एष आत्मा' बृहत्यपि।
पृथक् पदैर्व्याहृतेऽपि ज्ञातव्यः सम एव हि ॥३८६॥

वशित्वाद्या गुणा ये स्युर्हृदाकाशे स्वतो हि ते।
उपासनार्थमेव स्युर्भवत्येवोपसहृतिः ॥३८७॥

सत्यकामत्वमित्यादिगुणानां तत्वतो भृशम्।
हृदाकाशे भवत्येव वस्तुत उपसंहृतिः ॥३८८॥

हृदयाकाशमन्तःस्थं दहराकाशमस्ति यत्।
तत्र वस्ताऽस्ति यो हंसः स आत्मा वदति श्रुतिः ॥३८९॥

स्थानं समं हि सर्वत्र दहरं मूलमस्त्यहो !
वेद्यं ब्रह्म समानं तत् सेतुत्वं दहरस्थितम् ॥३९०॥

शाब्दं गुणात्मकाकाशं छान्दोग्ये ब्रह्मवाचकम्[१३६]।
सगुणब्रह्मविद्याया उपदेशस्तदन्तिमे ॥३९१॥

आत्मानं सत्यकामानं ज्ञात्वा यो म्रियते ततः[१३७]।
स एव ब्रह्मविद् भूत्वा ब्रह्म ज्ञात्वा तरत्यपि ॥३९२॥

निर्गुणं ब्रह्मोपदेशं करोति बृहदारण्यम्।
'अत ऊर्ध्वं विमोक्षाय' मन्त्रमेवं प्रवक्ति च[१३८] ॥३९३॥

---

१३५. स वा एष महानज आत्मा योऽयं विज्ञानमय प्राणेषु य एषोऽन्तहृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी। – बृहदारण्यकोपनिषद् ४।४।२२

१३६. दहर उत्तरेभ्यः। – ब्रह्मसूत्रम् १।३।१४

१३७. अथ य इहाऽऽत्मानमनुविद्य व्रजन्त्येतां सत्यां कामान्। – छान्दोग्योपनिषद् ८।१।६

१३८. अत ऊर्ध्वं विमोक्षाय ब्रूहि। – बृहदारण्यकोपनिषद् ४।३।१४

परं मायाविकारस्य वेद्यं ब्रह्माऽस्त्यसङ्गकम्[१३९] ।
नेति नेतीति वाक्याभ्यां निषेधति[१४०] पुनः श्रुतिः ॥३९४॥

'नेतीति' श्रुतिवाक्यैन चाऽतद्वस्तु निषिध्यते ।
कुरुते निर्गुणं ब्रह्म वस्तुतः प्रतिपादनम् ॥३९५॥

अन्येन 'नेति' वाक्येन मायाकार्यं निषिध्यते ।
ततः प्रवृत्तिर्भवति ब्रह्म ज्ञानैकचेतसः ॥३९६॥

सत्यकामादिनामस्ति छान्दोग्य उपसंहृतिः ।
वशित्वाद्याश्च सर्वेऽपि छान्दोग्य उपसंहृतिः ॥३९७॥

सर्व आयतनास्ते स्युर्हेतव उभयोरिह ।
उपसंहृतिर्भवत्येव पक्षयोरुभयोरपि ॥३९८॥

निर्गुणस्य विभूतिहि सगुणं ब्रह्म दृश्यते ।
तद् दर्शनार्थमेवात्रोपसंहारः प्रशंसितः ॥३९९॥

उपासनार्थं नायातं वस्तुतस्तन्न बोधताम् ।
इत्येव भाष्यं सूत्रस्य व्याख्यां प्रकुरुतेऽन्ततः[१४१] ॥४००॥

अत्राधिकरणे सूत्रमेकं वदति शास्त्रतः[१४२] ।
उभयोरुपसंहारो भवत्यपि च तत्त्वतः ॥४०१॥

---

१३९. असङ्गो ह्ययं पुरुषः । – बृहदारण्यकोपनिषद् ४।३।१५
१४०. स एष नेति नेति । – बृहदारण्यकोपनिषद् ३।९।२६
१४१. गुणवतस्तु ब्रह्मण एकत्वाद् विभूतिप्रदर्शनायाऽयं गुणोपसंहारः सूत्रितो नोपासनायेति द्रष्टव्यम् । – शाङ्करभाष्यम्, ब्रह्मसूत्रम् ३।३।२५।३९
१४२. कामादीतरत्र तत्र चायतादिभ्यः । – ब्रह्मसूत्रम् ३।३।२५।३९

## २६.आदराधिकरणम् (ब्रह्मसूत्रम् ३।३।२६।४०–४१)

शिष्यः –

श्रुतौ प्राणाहुतौ पाठे 'तद् यद् भक्तं' समागतम्[१४३] ।
तत्तु होमोऽग्निहोत्रस्य श्रुतिरन्या वदत्यपि[१४४] ॥४०२॥

बुभुक्षितः शिशुरिव यथा मातुरुपासनाम्[१४५] ।
तथा प्राणाः प्रकुर्वन्ति चाऽग्निहोत्रमुपासनाम् ॥४०३॥

समायातोऽत्र सन्देहो भोजनं यदि लुप्यते ।
तत्र प्राणाऽग्निहोत्रस्य लोपो भवति वा न वा ? ॥४०४॥

सह प्राणाऽग्निहोत्रेण वादिनः कथयन्त्यपि ।
भवेच्चेदन्नसंयोगस्तदा भवति तत्क्रिया ॥४०५॥

विशेषगुणमाधातुं तदुक्तं तत्र तेन यत्[१४६] ।
भवत्यन्नादिद्रव्यस्य शंसनं मुख्यतः श्रुतौ ॥४०६॥

यदि भोजनलोपश्चेद् जलाद् वाऽप्यन्यवस्तुतः ।
भवेत् प्रतिनिधिन्यायात् प्राणाग्निहोत्रमेव तत् ॥४०७॥

यदि भोजनलोपः स्यात् तदा प्राणाग्निपूजनम् ।
न लुप्यते वदन्त्यत्र वादिनोऽपि प्रमाणतः[१४७] ॥४०८॥

---

१४३.तद्यद्भक्तं प्रथममागच्छेत्तदधोमीयं स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात् प्राणाय स्वाहा । – छान्दोग्योपनिषद् ५।१९।१

१४४. य एतदेवं विद्वानग्निहोत्रं जुहोति । – छान्दोग्योपनिषद् ५।२४।२

१४५.यथेह क्षुधिता बाला मातरं पर्युपासते ।
एवं सर्वाणि भूतान्यग्निहोत्रमुपासते ॥

१४६. पूर्वोऽतिथिभ्योऽश्नीयात्, यथा ह वै स्वयमहुत्वा परस्य जुहुयादेवं तत् ।
– जाबालश्रुतिः

१४७. तद्यद्भक्तम् । – छान्दोग्योपनिषद् ५।१९।१

इत्थमत्र समायातं हे गुरो ! वादिनां मतम् ।
सुस्पष्टं श्रौतसिद्धान्तं भवानाज्ञापयत्वतः ॥४०९॥

गुरुः –
यदा भोजनमाप्नोति ग्रासेन प्रथमेन तम्[१४८] ।
प्राणाऽग्निहोत्रं सम्पन्नं सुधीभिः क्रियते सदा ॥४१०॥

यदि भोजनलोपः स्यादन्य द्रव्यात् कथं भवेत् ।
तदा प्रतिनिधिन्यायद्वाराऽऽहुतिर्न सम्भवेत् ॥४११॥

यदि भोजनलोपः स्यादाहुतिश्चापि लुप्यते ।
प्राप्यते प्रथमं भक्तं होमार्थं वक्ति च श्रुतिः ॥४१२॥

प्रथमं भोजनं कुर्यात् तन्नित्यमतिथेरपि ।
अन्यथाऽऽहुतिलोपो हि क्रियते यदभोजनम् ॥४१३॥

भोजनं यदि लुप्येत न मन्ये वादिनां मतम् ।
तदाऽऽहुतेर्लोपि एव शास्त्रं संसूचयत्यपि ॥४१४॥

अत्राधिकरणे सूत्रद्वयं पूर्वं तथोत्तरम्[१४९] ।
उभौ प्राणाग्निहोत्रस्य कुर्वातेऽत्र विवेचनम् ॥४१५॥

## २७. तन्निर्धारणाधिकरणम् (३।३।२७।४२)

शिष्यः –
ओमित्येक्षरमुद्गीथमित्यादि कर्म चास्ति यत्[१५०] ।
ज्योतिष्टोमादियज्ञानामङ्गानां तदुपासनम् ॥४१६॥

---

१४८. तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम् । – छान्दोग्योपनिषद् ५।१९।१
१४९. आदरादलोपः । – ब्रह्मसूत्रम् ३।३।२६।४०,४१
१५०. ओमित्येतदक्षरमुद्गीथमुपासीत । – छान्दोग्योपनिषद् १।१।१

यथा जुहू पर्णमयी यज्ञोपासनकर्मसु ।
नित्या सा किमनित्या वा यथा गोदोहनं तथा ॥४१७॥

वदन्ति ते नित्यमिति वादिनोऽत्रापि संशये ।
यत् प्रयोगवचस्तस्मात् तस्मादपि परिग्रहात् ॥४१८॥

पर्णतायाः समानं तत् सार्धं तच्छ्रुतिवाक्यतः ।
उपासनानामपि स सम्बन्धो युक्त एव सः ॥४१९॥

जुहू पर्णमयी चास्ति यस्य तत्रैव सङ्गमे[१५१] ।
पापश्लोकान्न शृणोति निष्पापः श्रूयतेऽपि च ॥४२०॥

ऋतुप्रकरणे चैष पाठो न पठितोऽपि च ।
ऋतौ प्रविष्टो भविता जुहू चेत्यादिकर्मभिः ॥४२१॥

अतस्तन्नित्यमेवाऽस्ति सदाऽनुष्ठेयमस्ति तत् ।
वादिनः कथयन्त्यत्र नित्यं वा किमनित्यकम् ? ॥४२२॥

गुरुः –
विधीयमानमस्त्येतद् यावद् गोदोहनं परम्[१५२] ।
उपासना नैव सन्ति क्रतोरङ्गानि कान्यपि ॥४२३॥

स्वतन्त्राः पुरुषार्थास्ताः सर्वा जानीह्युपासनाः ।
पृथक् कर्मफलेभ्यस्ता भिन्नाः सन्ति ह्युपासनाः ॥४२४॥

सामाः पञ्चविधाःसन्ति 'कल्पन्ते' वदति श्रुतिः[१५३] ।
देवतोपासनादृष्टिरैच्छिकं तद् विधानकम् ॥४२५॥

---

**१५१. यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति । – श्रुतिः**
**१५२. चमसेनापः प्रणयेत्, गोदोहनेन पशुकामस्य । – श्रुतिः**
**१५३. कल्पन्ते हास्मै लोका ऊर्ध्वाश्चावृत्ताश्च । – छान्दोग्योपनिषद् २।२।३**

अङ्गाश्रिता उपासना 'स्तेनोभौ' वदति श्रुतिः[१५४] ।
वाक्यशेषे समायान्ति ह्युपासकाऽनुपासकाः ॥४२६॥

आधारभूतौ तदुभौ तदङ्गेभ्यः समुद्भवौ ।
स्पष्टं कर्मण्यनुष्ठाने सुयोग्यौ कथितावुभौ ॥४२७॥

तदन्यत् कर्मणामस्ति फलेभ्यो वीर्यवत्तरम् ।
कर्म समृद्धिरूपत्वं फलं प्राप्तं भविष्यति ॥४२८॥

एतत् कर्माङ्गहीनत्वं भवत्येषाऽप्युपासना ।
समायाता परं नास्ति सा कर्मणि निमित्तकम् ॥४२९॥

उपासना भवत्येव विशिष्टा च क्रियात्मिका ।
उपपन्नाऽभविष्यच्चेदुद्गीथं चाश्रयात्मकम् ॥४३०॥

तस्मादुपासनायाश्च न विरोधः फलेष्वपि ।
न भवेद् यज्ञसम्बन्धः कश्चिद् गोदोहनादिषु ॥४३१॥

शिष्यः –

उपासना आश्रिता या अङ्गरूपाऽस्ति कर्मणि ।
अनुष्ठेयाः सन्ति न वा नियतास्ता ह्युपासनाः ॥४३२॥

वादिनः कथयन्त्यत्र पर्णतायाः समानताम् ।
वाणीभिः सह सम्बन्धो भवत्यासां ऋतोः सह ॥४३३॥

अतस्ता नियमेनैव दृश्यन्ते हि क्रियात्मिकाः ।
गुरो ! वदतु किं चैतदयुक्तं ? वा सयुक्तिकम् ? ॥४३४॥

---

१५४. तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद ... तदेव वीर्यवत्तरं भवति ।
– छान्दोग्योपनिषद् १।१।१०

पृथग्रूपं फलं तासां श्रूयते यच्च विद्धि तत् ।
गोदोहनसमाः सर्वा अनित्याः सन्त्युपासनाः ॥४३५॥

उपासकाऽनुपासकौ 'तेनोभौ' श्रुतिसङ्गतौ ।
उभयोर्विद्धि कर्मापि सदैवाऽनियतात्मकौ ॥४३६॥

अत्राधिकरणे सूत्रमेकं वक्ति च सारतः[१५५] ।
कर्माङ्गत्वं न भवति निश्चिता तदुपासना ॥४३७॥

## २८. प्रदानाधिकरणम् (ब्रह्मसूत्रम् ३।३।२७।४३)

शिष्यः –
किं वायुप्राणयोः कार्यमेकरूपत्वचिन्तनम् ।
पृथग्रूपेण वा चिन्त्यं संशयोऽस्ति गुरो ! महान् ॥४३८॥

स्वरूपतोऽपृथग्रूपावुभौ वदन्ति वादिनः ।
तयोः कर्तुं न शक्येत वस्तुतश्चिन्तनं पृथक् ॥४३९॥

उभावेतौ चैकरूपौ स्पष्टं निगदति श्रुतिः[१५६] ।
भिन्नं रूपं धारयित्वा भिन्नस्थाने वसत्यपि ॥४४०॥

यः प्राणो वायुरेवाऽस्ति कश्चिद् भेदस्तयोर्न हि[१५७] ।
वायुप्राणावुभौ चैकरूपौ निगदति श्रुतिः ॥४४१॥

इत्थमत्र गुरो ! वक्तु वायोः प्राणस्य चिन्तनम् ।
तयोरभिन्नरूपेण कार्यं वा भिन्नरूपतः ॥४४२॥

---

१५५. तन्निर्धारणानियमस्तद्दृष्टे पृथग्ध्यप्रतिबन्धः फलम् । – ब्रह्मसूत्रम् ३।३।२७।४२
१५६. वायुर्वाव संवर्गः, प्राणो वावः संवर्गः । – छान्दोग्योपनिषद् ४।३।२
१५७. यः प्राणः स वायुः । – श्रुतिः

गुरुः –

चिन्त्यमध्यात्मरूपेण किं वाऽधिदैवतेन च ।
द्वयोरवस्थाभेदत्वात् चिन्तनीयं पृथक् पृथक् ॥४४३॥

इन्द्रो देव एक एव परन्तु गुणभेदतः ।
द्वयोर्भेदो दृश्यते हि तयो रुपाधिभेदतः ॥४४४॥

तथैव तौ प्राणवायू विद्यायामेकरूपकौ ।
आध्यात्मिकाऽधिदेवत्वाद् भिन्नौ स्तो गुणभेदतः ॥४४५॥

उपास्याऽशंस्य भेदेनोपासनाया अपि पृथक् ।
भेदो दृष्टोऽस्ति 'नाना वा देवता' जैमिनेर्मतम्[१५८] ॥४४६॥

स्थानभेदेन किं वाऽस्य गुणभेदेन भिद्यते ।
अतोऽनुचिन्तनं भिन्नं कर्तव्यं तावतः क्रमात् ॥४४७॥

अत्राधिकरणे सूत्रमेकं वक्ति प्रदानवत्[१५९] ।
एतस्मात् कारणाद् भिन्नं चिन्तनीयं विशेषतः ॥४४८॥

## २९. लिङ्गभूयस्त्वाधिकरणम् (ब्रह्मसूत्रम् ३।३।२९।४४–४५)

शिष्यः –

अग्नौ वाजसनेयानां रहस्यं पुनरागमत्[१६०] ।
अग्निः स्वतन्त्ररूपेण शंसितोऽत्र कथञ्चन ॥४४९॥

---

१५८. नाना वा देवता पृथग्ज्ञानात् । – जैमिनिसूत्रसङ्कर्षणकाण्डम्
१५९. प्रदानवदेव तदुक्तम् । – ब्रह्मसूत्रम् ३।३।२८।४३
१६०. नैव वा इदमग्रे सदासीत् । – श्रुतिः

यत्किञ्चेमानि भूतानि मनसा..लिङ्गरूपकम्[१६१] ।
प्रमाणं मुख्यमत्राऽस्ति स्वातन्त्र्यप्रतिपादकम् ॥४५०॥

लिङ्गं भवति बलवत् प्राकरण्यमपेक्षया[१६२] ।
इदं जैमिनिना प्रोक्तं पूर्वकाण्डानुसारतः ॥४५१॥

मनश्चिदादिरग्निः किं कर्माङ्गं वा स्वतन्त्रकम् ?
सन्देहोऽभवदत्राऽपि कर्मशेषं वदन्ति ते ॥४५२॥

इत्थमत्र गुरो ! वक्तु युक्तं किं वादिनां मतम् ?
सिद्धान्तं वा किमस्तीति यद् युक्तं प्रब्रवीतु तत् ॥४५३॥

गुरुः –
लिङ्लोटादिविधिर्नास्ति शब्दतो नैव दृश्यते ।
अर्थवादं गृहीत्वाऽत्र कल्पना क्रियते विधिः ॥४५४॥

गृहीत्वा स्तावकं वाक्यं फलमुत्पादकानि च ।
रात्रिसत्राख्यनाम्न्यत्राऽधिकारी च समर्पितः ॥४५५॥

समाप्तिर्भवतीत्यत्र चैतस्मात् कारणादपि ।
ब्राह्मणोऽयमवश्यैव विधिरूपात्मकोऽस्त्यपि ॥४५६॥

विध्युद्देशगतः सोऽयं लिङ्गं प्रबलमस्त्यपि[१६३] ।
कर्माङ्गत्वमिहाऽऽयाति व्यावृत्तं क्रियते श्रुतिः ॥४५७॥

करोति चाऽनया श्रुत्या स्वातन्त्र्यस्य प्रशंसनम् ।
श्रुतिलिङ्गादिभिर्बाधं क्रियते तन्निरूपणम् ॥४५८॥

---

**१६१. तद्यत्किञ्चेमानि भूतानि मनसा सङ्कल्पयन्ति । – श्रुतिः**
**१६२. श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् ।**
**– जैमिनिसूत्रम् ३।३।१३**
**१६३. 'ते हैते विद्याचित एव' इति, विद्यया हैवैते एवंविदश्चिता भवन्ति । – श्रुतिः**

विद्यात्मकं स्वतन्त्रं च मनश्चिदादिशंसनम् ।
स्वतन्त्ररूपं भवति वह्नेरपि विचिन्तनम् ॥४५९॥

अथवाः –
मनश्चिदादिरग्निः किं कर्माङ्गं वा स्वतन्त्रकम् ?
समायातोऽत्र सन्देहः शेषी किं कर्मशेषकम् ? ॥४६०॥

वादिनः कथयन्त्यत्र दृष्ट्वा प्रकरणं बलम् ।
कर्माङ्गमग्निर्भवति वा स्वतन्त्रं बलं किमु ? ॥४६१॥

लिङ्गं प्रमाणमन्यार्थं तानि दर्शनरूपकम् ।
मनश्चिदादिर्योऽग्निः स अतः कर्माङ्गशेषकम् ॥४६२॥

इत्थमत्र गुरो ! वक्तु मनश्चिदग्निरस्ति यः ।
कर्माङ्गशेषं यद्वाऽस्ति सोऽग्निः किमु स्वतन्त्रकः ॥४६३॥

गुरुः –
गृहीतं विधिगल्लिङ्गं श्रुतिवाक्य प्रमाणतः ।
बाधः प्रकरणादस्ति कथितः पूर्वपक्षतः ॥४६४॥

'सोऽमृतो भवतीं त्यत्र विद्या फलमिहाऽगतम्[१६४] ।
न भवत्युपसंहारो नास्ति कर्मप्रधानकम् ॥४६५॥

उपक्रमोपसंहारौ पूर्वापरसमन्वितौ ।
मनिश्चिदादिर्योऽग्निः स विद्यात्मकश्चिरन्तनः ॥४६६॥

क्रमेण बाधं भवति तदित्थं वादिनां मतम् ।
स्वतन्त्ररूपं भवति वस्तुतो वह्निचिन्तनम् ॥४६७॥

---

**१६४. सोऽमृतो भवति मृत्युर्ह्यस्यात्मा भवति । – श्रुतिः**

अत्राधिकरणे सूत्रनवकं दृष्टमागतम्[१६५] ।
सनातनं सर्वकार्यं स्वतन्त्रं वह्निचिन्तनम् ॥४६८॥

### ३०. ऐकात्म्याधिकरणम् (ब्रह्मसूत्रम् ३।३।३०।५३–५४)

शिष्यः –
मुमुक्षवे वर्णयितुं वेदान्ते बन्धमोक्षयोः ।
शंसितः श्रौतसिद्धान्त ईशोपनिषदादिकः ॥४६९॥

देहभिन्नात्मनः कर्तुं विमर्शन विवेचनम् ।
प्रयत्नशीलः शबरो मीमांसायां विशेषतः[१६६] ॥४७०॥

आत्मा नित्योऽस्ति मिथ्याऽस्ति शरीरं पाञ्चभौतिकम् ।
आत्मना सह जीवस्य हैक्यं भवति तात्त्विकम् ॥४७१॥

एतदर्थं हि स्थूणानिखननन्यायतः क्रमात् ।
सूत्रं च बुद्धेर्दाढ्यार्थं कुरुते च विवेचनम् सूत्रं च ॥४७२॥

शरीरमात्मा यद्वा किं भिन्न आत्मा शरीरतः ।
आत्मा देहोऽथवा भिन्नः ? सन्देहोऽत्र समागतः ॥४७३॥

देहातिरिक्तो नास्तीह क्वचित् सत्ताऽस्ति चात्मनः ।
देहास्तित्वेऽत्रात्मनोऽस्ति ह्यस्तित्वं नान्यथा भवेत् ॥४७४॥

---

१६५. लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि । – ब्रह्मसूत्रम् ३।३।२९।४४–५२
१६६.सत्यमुक्तं भाष्यकृता, न तु तत्राऽऽत्मास्तित्वे सूत्रमस्ति ।
इह तु स्वयमेव सूत्रकृता तदस्तित्वमाक्षेपपुरेःसरं प्रतिष्ठापितम् । इत एव चाऽऽकृष्याऽऽचार्येण शबरस्वामिना प्रमाणलक्षणे वर्णितम् ।
– शाङ्करभाष्यम्, ब्रह्मसूत्रम् ३।३।३०।५३

अन्वयव्यतिरेकाऽऽख्यां स्थूलां दृष्टिं गृहीतकाः[१६७] ।
चार्वाकास्ते स्थूल आत्मा देह एव ब्रुवन्त्य हो ॥४७५॥

भूम्यादिभिः पञ्चभूतैर्मनः शक्त्या मिलन्निह ।
प्रारब्धं तत्क्षणं देहे चैतन्य मुपपद्यते ॥४७६॥

अत एवाऽत्र देहोऽयमात्मा चैतन्य युक् स्वतः ।
देहातिरिक्तमस्तित्वमात्मनो नास्ति वस्तुतः ॥४७७॥

चार्वाका वादिनो नित्यं 'देह आत्मा' ब्रुवन्त्यतः ।
इत्थमत्र गुरो ! वक्तु 'आत्मा देहो' न वा किमु ? ॥४७८॥

गुरुः –
'आत्मा शरीरतो भिन्न' इति वेदान्तडिण्डिमः[१६८] ।
पञ्चभूतात्मसङ्घातभिन्न आत्मा प्रतिष्ठितः ॥४७९॥

आत्मा तु विषयी नित्यो देहादिविषा मृषा ।
विषयीविषयौ भिन्नौ, तयोरैक्यं कथं भवेत् ॥४८०॥

चार्वाका वादिनोऽप्यत्र यां कुरां समुदीरयन् ।
अन्वयव्यतिरेकाख्यं मतं तेषामदर्शितम् ॥४८१॥

पुण्यपापे गृहीत्वेतो देहपातादनन्तरम् ।
स्वर्लोकमनरकौ याति भ्रमन् देही निरन्तरम् ॥४८२॥

---

१६७. शरीर सत्त्वे आत्मसत्ता शरीराभावे आत्माभावः । – चार्वाकसिद्धान्तः
१६८. न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् ।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ।
– कठोपनिषद् १।२।१८

एतदर्थं हि निर्दिष्टौ मार्गौ विधिनिषेधकौ[१६९] ।
अतः शरीरतो भिन्नः पृथगात्माऽस्त्यलौकिकः ॥४८३॥

शरीरमात्मा नैवाऽस्ति भिन्नावेतौ परस्परम् ।
भिन्नधर्मवहौ चैतौ सततं जडचेतनौ ॥४८४॥

अन्त्यकाले तु देहोऽयमज्ञानीह वितिष्ठति ।
पृथिवीजलतेजादौ देहोऽयं लीयते शनैः ॥४८५॥

सनातनोऽस्ति सर्वेषां ज्ञाताऽत्मा त्वेक एव हि ।
तस्योपलब्धिज्ञानं हि वक्ति वेदान्तदर्शनम् ॥४८६॥

शरीरान्तः स्थितश्चात्मा वसत्येको निरञ्जनः[१७०] ।
न याति सह देहेन सच्चिदात्मा सनातनः ॥४८७॥

जायते म्रियते देह आत्मा जातो मृतो न हि ।
स्वच्छः सूक्ष्मः सच्चिदात्मा कालाऽतीतोऽस्ति निर्मलः ॥४८८॥

श्रुति [१७१]स्मृतिरिदं [१७२]वक्ति जडो देहोऽस्त्यनित्यकः ।
शरीरान्तःस्थितश्चात्मा सदा नित्योऽस्ति चेतनः ॥४८९॥

मिथ्या देहोऽयमात्माऽस्ति चार्वाकाणामिदं मतम् ।
खण्डितं चारुवाचा तदद्वैतं मण्डितं मतम् ॥४९०॥

---

१६९. स्वर्गकामो यजेत, सुरां न पिबेत् । – श्रुतिः
१७०. एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥
– श्वेताश्वतरोपनिषद् ६।१६
१७१. अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति । – कठोपनिषद् १।२।२२
१७२. अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः । – गीता २।२४

अत्राधिकरणे सूत्रद्वयं पूर्वं तथोत्तरम्[१७३] ।
आत्मनो देहभिन्नस्य चान्ते भवति निर्णयम् ॥४९१॥

## ३१. अङ्गाबद्धाधिकरणम् (ब्रह्मसूत्रम् ३।३।३०।५५–५६)

शिष्यः –
शंसनं चोक्थबुद्ध्यर्थमागतं विविधश्रुतौ ।
उक्थमुक्थं प्रजावक्ति[१७४]ह्योकारोपासनाऽऽगता[१७५] ॥४९२॥

सामोपास्यं पञ्चविधं क्वचिद् दृष्टं समागतम्[१७६] ।
क्वचित् पृथ्वी [१७७]समायाता ह्येषोऽग्निश्चित [१७८]आगतः ॥४९३॥

उद्गीथादिना यत् कर्माङ्गं तत्सम्बद्धा च या श्रुतिः ।
प्रत्येकं वेदशाखायां विहिता संस्तुतिर्हिता ॥४९४॥

यः स्वरादिकभेदेन संशयोऽपि समागतः ।
भेदो दृष्ट उद्गीथादौ संस्तुतिर्भविता न वा ॥४९५॥

उक्थादिविधयः सर्वे स्वशाखार्थं भवन्ति किम् ?
यद्वा तदन्यशाखार्थं विधेयास्ते भवन्ति किम् ? ॥४९६॥

वादिनश्चात्र सन्देहे हेतुर्ब्रुवन्ति सन्निधिम् ।
स्वशाखायां विधिर्दृष्टो भवत्यन्यत्र नान्यथा ॥४९७॥

---

१७३. एक आत्मनः शरीरे भावात् । – ब्रह्मसूत्रम् ३।३।३०।५३,५४
१७४. ओमित्येतदक्षरमुद्गीथमुपासीत । – छान्दोग्योपनिषद् १।१।१
१७५. उक्थमुक्थमिति वै प्रजा वदन्ति तदिदमेवोक्थम् । – श्रुतिः
१७६. लोकेषु पञ्चविधं सामोपासीत । – छान्दोग्योपनिषद् २।२।१
१७७. इयमेव पृथिवी । – श्रुतिः
१७८. अयं वाव लोक एषोऽग्निश्चितः । – श्रुतिः

अत एव स्वशाखायां गत्वा ह्युद्गीथपारणम् ।
करणीयं हि विद्याया विधानं निगमेऽस्त्यपि[१७९] ॥४९८॥

आज्ञापयतु हे विद्वन् ! तद् युक्तं किं मतं गुरो !
अयुक्तं चेत् तदा वक्तु सिद्धान्त उचितोऽत्र कः ? ॥४९९॥

गुरुः –
सूत्रस्थेन तु शब्देन खण्ड्यते वादिनां मतम् ।
प्रत्येकं वेदशाखायामुपासनां विधीयते ॥५००॥

उद्गीथस्य विधिर्दृष्टः करणीया ह्युपासना ।
सामान्या श्रुतिरेषाऽस्ति सद्विधिं न हि बाधते ॥५०१॥

यद्यपि स्वरभेदोऽत्र दृश्यते यत्र कुत्रचित् ।
उद्गीथत्वे नैव दृष्टः शाखाभेदेऽपि न क्वचित् ॥५०२॥

अतः सम्पूर्णशाखास्थ उद्गीथादौ स्वतः सता ।
कार्या समानरूपेणोपासनाऽपि सुनिश्चिता ॥५०३॥

सैषा मुख्या वृत्तिरस्ति मन्यते मूलकारणम् ।
सर्वशाखासु भवति ह्युक्थं सामान्यबोधनम् ।५०४॥

समानं सर्ववेदेसु ह्युक्थमस्माद्धि कारणम् ?
स्वशाखायामुक्थबुद्धिः कार्याऽन्यत्राऽपि सर्वथा ॥५०५॥

उद्गीथमुक्थं तैः शब्दैः प्रतीतिर्भवति श्रुतौ ।
सामान्यनियमश्चैष कार्या चापासना तयोः ॥५०६॥

---

**१७९. उद्गीथमुपासीत । – छान्दोग्योपनिषद् १।१।१**

यदा चान्ते बोधते चेत् सान्निध्याऽपि श्रुतिः क्वचित् ।
सर्ववेदस्य शाखासु ह्युक्थबुद्धिर्भवत्यपि ।।५०७।।

अत्राधिकरणे सूत्रद्वयमैक्यं तयोर्मतम्[१८०] ।
उक्थबुद्धिस्तु सर्वत्र करणीयेति निर्णयः ।।५०८।।

## ३२. भूमज्यायस्त्वाधिकरणम् (ब्रह्मसूत्रम् ३।३।३२।५७)

शिष्यः –
सह प्राचीनशालेन [१८१]'तस्ये'ति श्रुतिरब्रवीत्[१८२] ।
व्यस्तं समस्तं वदतो वैश्वानरमुपासनम् ।।५०९।।

संशयोऽत्र समायातो व्यस्तं वा किं समस्तकम् ।
वैश्वानरोपासना सा द्वे वा चैका गुरो ! किमु ? ।।५१०।।

वादिनाऽत्र समानीत 'उपास्से' तत् क्रियापदम् ।
व्यस्ता समस्ता सा कार्या तत्पदेन समन्विता ।।५११।।

इत्थमत्र गुरो ! वक्तु वैश्वानरमुपासनम् ।
समस्तमथवा व्यस्तमाज्ञापयतु किं भवान् ।।५१२।।

गुरुः –
वैश्वानरोपासना तु तत् समस्तं विवक्षितम् ।
उपक्रमोपसंहारौ चैकवाक्यसमन्वितौ ।।५१३।।

---

१८०. अङ्गावबद्धस्तु न शाखासु हि प्रतिवेदम् । – ब्रह्मसूत्रम् ३।३।३१।५५,५६

१८१. प्राचीनशाल औपमन्यवः । औपमन्यव कं त्वमात्मनमुपास्स इति दिवमेव भगवो राजन्निति होवाचैष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मनमुपास्से ।
– छान्दोग्योपनिषद् ५।११।१, ५।१२।१

१८२. तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो बस्तिरेव रयिः पृथिव्येव पादौ । – छान्दोग्योपनिषद् ५।१८।२

'को न आत्माऽथ किं ब्रह्मे'त्युपक्रमसुसंयुतम् ।
'तस्य ह वे'ति मन्त्रेणोपसंहारेऽपि शंसितम् ।।५१४।।

तदत्र यदि मन्येत तदंशोपासना भवेत् ।
निषिध्यते वाक्यभेदात् तदंशोपासनामपि ।।५१५।।

उपासनां पृथङ् मत्वा न्यायः कैमुतिकः पतेत् ।
समस्तोपासनाया हि स्तुतौ मिलति सा गता ।।५१६।।

पृथगुपासना कार्या यदि चेद् वाक्यभेदतः ।
'मूर्धा ते व्यपतिष्यत्' तन्निन्दावाक्येन शंसितः[१८३] ।।५१७।।

व्यस्ताऽव्यस्तोपासनयाऽप्ययुक्तं वादिनां मतम् ।
वैश्वानरोपासनं चेत् सदा कार्यं समस्तकम् ।।५१८।।

अत्राधिकरणे सूत्रमेकं वक्ति समस्तकम्[१८४] ।
वैश्वानरोपासनीयं पूर्णमेवं समर्थति ।।५१९।।

## ३३. शब्दादिभेदाधिकरणम् (ब्रह्मसूत्रम् ३।३।३३।५८)

शिष्यः –
विद्या दृष्टाऽस्ति छान्दोग्ये शाण्डिल्यदहरादयः ।
तादृश्यामन्यशाखाया सन्ति विद्या अनेकशः ।।५२०।।

भूमज्यायादिषु यथा विद्या भिन्नाऽपि दृश्यते ।
वेद्यं विषयमेकं हि ततो विद्याष्वभिन्नता ।।५२१।।

---

१८३. 'मूर्धा त्वेष आत्मन इति होवाच ।' इत्यादिना मूर्धादिभावं तेषां विदधाति । मूर्धा ते व्यपतिष्यद् यन्मा नागमिष्यः । – छान्दोग्योपनिषद् ५।१२।२

१८४. भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति । – ब्रह्मसूत्रम् ३।३।३२।५७

यथा [१८५]मनोमयः [१८६]कं [१८७]खं सत्यकामादिमन्त्रकाः ।
वेद्यं विषयमेकं हि ततो मन्त्रेष्वभिन्नता ।।५२२।।

विद्यायां दृश्यते चैक्यं वैभिन्यं चापि दृश्यते ।
अनैक्यमैक्यं किमिति सन्देहोऽत्र समागः ।।५२३।।

वादिनः कथयन्त्यत्र समस्तोपासनाऽस्ति या ।
श्रेष्ठा दृष्टास्तथाऽऽत्मैक्यादुपास्तावेकरूपता ।।५२४।।

श्रुतौ सर्वत्र शाखायां वेद्यमेकं सदा समम् ।
विद्यायाः पूर्णतार्थं स उपसंहार युक्तिमान् ।।५२५।।

विद्वन्नत्राऽऽज्ञापयतु तास्ताः सर्वा उपासनाः ।
अभिन्ना वा भिन्नभिन्ना शुश्रूषा चित्तमागता ।५२६।।

गुरुः –
'नाना' शब्दः समायातः सूत्रेऽनेनाऽपि गद्यते ।
अभेदो वेद्यविषये विद्यायां भेदभिन्नता ।५२७।।

विद्यास्त्वनन्ताः सन्त्येव सर्वा एकीकृता यदि ।
असम्भवमनुष्ठानं कर्तुं सम्भ्रमिते सति ।।५२८।।

एतस्मादपि विद्यायां भेदो दृष्टोऽप्यनुत्तमः ।
गुणभेदेऽपि भेदो न वेद्ये ब्रह्मणि दृश्यते ।।५२९।।

---

१८५. मनोमयः प्राणशरीरः । – छान्दोग्योपनिषद् ३।१४।२
१८६. कं ब्रह्म खं ब्रह्म । – छान्दोग्योपनिषद् ४।१०।५
१८७. क. सत्यकामः सत्यसङ्कल्पः । – छान्दोग्योपनिषद् ८।१।५
ख. एक एव प्राणः, प्राणो वाव संवर्गः । – छान्दोग्योपनिषद् ४।३।३
ग. प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च । – छान्दोग्योपनिषद् ५।१।१
घ. प्राणो ह पिता प्राणो माता । – छान्दोग्योपनिषद् ७।१५।१

शाण्डिल्यादिकविद्यायां समस्तोपासनाक्रमः ।
असम्भवं दृश्यते तत् संसृष्टे सम्भ्रमो भवेत् ॥५३०॥

प्रत्येकं सर्वविद्याया इयत्ताऽनिश्चयात्मिका ।
असम्भवं दृश्यते तत् संसृष्टे सम्भ्रमो भवेत् ॥५३१॥

सर्वं ज्ञात्वोपक्रमोपसंहाराभ्यां सुनिश्चितम् ।
परिमाणं हि विद्याया ज्ञातुमस्तीह सम्भवम् ॥५३२॥

गुणभेदोपचारेण भेदो ब्रह्मणि दृश्यते ।
उपक्रमादिहेतोर्हि भेदो विद्यासु दृश्यते ॥५३३॥

'नाना शब्दादि भेदात्' तत् सूत्रं युक्तं वदत्यपि[१८८] ।
सत्यं प्रत्येकविद्यायां नानात्वं भेद आगतः ॥५३४॥

अत्राधिकरणे सूत्रमेकं वक्ति च शब्दतः[१८९] ।
शाण्डिल्यादिकविद्यायां भेदो दृष्टोऽस्ति तत्त्वतः ॥५३५॥

## ३४. विकल्पाधिकरणम् (ब्रह्मसूत्रम् ३।३।३४।५९)

शिष्यः –

विद्या भेदोऽत्र सिद्धोऽस्ति विद्याभेदे प्रपाठिते ।
समुच्चयोऽस्ति विद्यायां ? यथेष्टं किं विकल्पितः ? ॥५३६॥

---

१८८.नानेति । वेद्याऽभेदेऽप्येवञ्जातीयका विद्याभिन्ना भवितुमर्हीति । कुत ? शब्दादि-भेदात् । भवति हि शब्दभेदः 'वेद' 'उपासीत' 'स क्रतुं कुर्वीत' (छान्दोग्योपनिषद् ३।१४।१) इत्येवमादि । शब्दभेदश्च कर्मभेदहेतुः समधिगतः पुरेस्तात्-शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात् इति । आदिग्रहणाद् गुणादयोऽपि यथासम्भवं भेदहेतवो योजयितव्याः । – शाङ्करभाष्यम्, ब्रह्मसूत्रम् ३।३।२३।५८

१८९. नाना शब्दादिभेदात् । – ब्रह्मसूत्रम् ३।३।३।५८

अहङ्ग्रहोऽस्ति विद्यायां यत् प्रयुक्तमुपासनम् ।
तदर्थं नियमाः सन्ति ? विकल्पोऽयदुपासनम् ॥५३७॥

सन्देहोऽत्र समायातो मतं रक्षन्ति वादिनः ।
विद्याभेदे समुद्दिष्टे वदन्ति नियमा न हि ॥५३८॥

विद्वन्नत्राऽऽज्ञापयतु काश्चिदस्ति नियामकः ।
यद्वा किं नियमो नास्ति विद्योपासनकर्मणि ॥५३९॥

गुरुः –
विकल्पोऽस्तीह विद्यायामयुक्तोऽस्ति समुच्चयः ।
साक्षात्कार उपास्यस्य चैकं विद्याफलं सदा ॥५४०॥

एकेनोपासनेनाऽपि साक्षात्कारे कृते सति[१९०] ।
अन्या चोपासना व्यर्था ब्रह्मज्ञानं कृते सति ॥५४१॥

समुच्चये कृते भूयात् साक्षात्कार असम्भवः ।
तथा कृते तु चित्तस्य विक्षेपः सम्भवो भवेत् ॥५४२॥

श्रुतिः कथयतीत्यत्र ब्रह्मज्ञाने कृते सति ।
साक्षात्कारे कृते किञ्चिज्ज्ञातव्यं नावशिष्यते ॥५४३॥

देवो भूत्वा यो म्रियते देवतां प्राप्नुयात् स तु[१९१] ।
इदमित्थं श्रुतिश्चान्या स्पष्टं घोषति घोषणाम् ॥५४४॥

---

१९०. एकेन चोपासनेन साक्षात्कृत उपास्ये विषय ईश्वरादौ द्वितीयमनर्थकम् । अपि चाऽसम्भव एव साक्षात्करणस्यपक्षे, चित्तविक्षेपहेतुत्वात् ।
– शाङ्करभाष्यम्, ब्रह्मसूत्रम् ३।३।३४।५९

१९१. देवो भूत्वा देवानप्येति । – बृहदारण्यकोपनिषद् ४।१।२

ब्रह्मसाक्षात्कृतो योऽन्त्ये देहं त्यजति बुद्धिमान् ।
पश्चात् तद्भावमाप्नोति कृष्णगीताऽपि घोषति [१९२] ॥५४५॥

साक्षात्कारः स साध्योऽस्ति विद्याफलमिहोच्यते ।
श्रुतिस्मृती प्रकुर्वाते नित्यमेतच्च शंसनम् ॥५४६॥

यस्य तादृक् फलं चास्ति सैकां विद्यामुपासकः ।
साक्षात्कारो न यावत् स्यात् तदा कार्यमुपासनम् ॥५४७॥

अत्राधिकरणे सूत्रमेकं स्पष्टयति भृशम्[१९३] ।
विशिष्टफलयुक्तत्वाद् विकल्पश्चाऽत्र युज्जते ॥५४८॥

## ३५. काम्याधिकरणम् (ब्रह्मसूत्रम् ३।३।३५।६०)

शिष्यः –
यथेच्छा वा विकल्पोऽस्ति प्रतीकोपासनाऽऽगतः ?
अहङ्ग्रहसमो यद्वा सन्देहः समुपागतः ॥५४९॥

पूर्वपक्षा वदन्त्यत्राऽहंग्रहोपासनामिह ।
तद्विकल्पसमानं हि प्रतीकोपासनामपि ॥५५०॥

गुरो ! वदत्वत्र भवान् यथेष्टं वा विकल्पकम् ?
वादिनः कथयन्त्यत्राऽहङ्ग्रहस्य समं न किम् ? ॥५५१॥

प्रतीकोपासनायां तत् साक्षात्कारप्रयोजनम् ।
अहङ्ग्रहस्य तुल्यो हि विकल्पो मन्यतेऽधुना ॥५५२॥

---

१९२. यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ – श्रीमद्भगवद्गीता ८।६
१९३. विकल्पोऽविशिष्टफलत्वात् । – ब्रह्मसूत्रम् ३।३।३४।५९

ब्रह्मन्नाज्ञापयत्वत्र यथेष्टं वा विकल्पकम् ?
अहङ्ग्रहसमः किं वा साक्षात्कारो विकल्पकः ? ॥५५३॥

गुरुः –
अनात्मवस्तून्यपि च देहदृष्ट्याऽप्युपासनम् ।
कर्तव्यं वक्ति शास्त्रं तु तत्प्रतीकमुपासनम् ॥५५४॥

अहङ्ग्रहोपासनं तु 'देवो भूत्वा' समागतम् ।
साक्षात्कारार्थमायातो भिन्नं हि तदुपासनम् ॥५५५॥

प्रमाणं विद्यते नाऽत्र प्रतीके समुपासने ।
विकल्पश्चलति किं वा समुच्चयो भवेदिह ॥५५६॥

द्वयोरुपास्तिनोः सौम्य ! लक्ष्यते स्पष्टमन्तरम् ।
पूर्वं तु साक्षात्कारार्थमन्यत् काम्यार्थमस्त्यपि[१९४] ॥५५७॥

यदस्ति काम्यविद्यायां क्रिया साम्यं भवत्यपि[१९५] ।
अदृष्टेनाऽऽत्मना रम्यं मिलति मधुरं फलम् ॥५५८॥

यस्मिन्न साक्षात्कारस्याऽपेक्षामस्तीह वस्तुतः ।
यथाकामो भवत्येव विकल्पो वा समुच्चयः ॥५५९॥

समुच्चयो भवेद् वापि न भवेद् वा स्वभावतः ।
समानेन फलेनाऽपि पूर्वहेतोरभावतः ॥५६०॥

अत्राधिकरणे सूत्रमेकं वक्तीह शास्त्रतः[१९६] ।
प्रतीकोपासने चाऽस्ति यथाकामः समुच्चयः ॥५६१॥

---

१९४. स य एतमेव वायुं दिशां वत्सं वेद न पुत्ररोदं रोदिति । – छान्दोग्योपनिषद् ३।१५।२
१९५. स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति ।
– छान्दोग्योपनिषद् ७।१।५
१९६. काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् । – ब्रह्मसूत्रम् ३।३।३५।६०

## ३६. यथाश्रयभावाधिकरणम् (ब्रह्मसूत्रम् ३।३।३६।६१–६६)

तल्लौकिकं च कर्माङ्गं द्विधा भेदेन दृश्यते ।
प्रतीकस्याऽपि द्वौ भेदौ शास्त्रं वर्णयतीह वै ।।५६२।।

उपर्युक्ता लौकिकी या कर्माश्रितप्रतीकता ।
उपासना विद्यते या तद्विचारौ भवत्यतः ।।५६३।।

कर्माश्रितप्रतीकोपासनायाऽस्ति समुच्चयः ।
किं वा ऽत्र नियमो नास्ति ? संशयः पुनरापतत् ।।५६४।।

वादिनः कथयन्त्यत्र सुस्पष्टोऽस्ति समुच्चयः ।
यद्वा भवति कर्माङ्गे सोऽयं गत्वा समुच्चयः ।।५६५।।

प्रतीकोपासना याऽस्ति सा किं कर्माङ्गसंश्रिता ?
समुच्चयो भवत्यत्र सन्देहेन विना स्वतः ।।५६६।।

कर्माङ्गोद्गीथविद्यायामाश्रितोऽस्ति समुच्चयः ।
असंशयोऽस्ति नियमो योऽस्ति कर्माङ्गमाश्रितः ।।५६७।।

उपासना यत्र भवेत् तत्राऽऽयाति समुच्चयः ।
भवन्त्युपासनास्तत्र यत्र कर्माङ्गमाश्रिताः ।।५६८।।

वादिनः कथयन्त्यत्रोपासनायाः समुच्चयः ।
ब्रह्मन्नाज्ञापयत्वत्र भवेद् वा न समुच्चयः ।।५६९।।

गुरुः –

तास्ता उपासनाः सन्ति या अङ्गत्वेनसंश्रिताः ।
कदापि न भवन्त्येता उपासनाः समुच्चिताः ।।५७०।।

यथा 'ग्रहं गृहीत्वा' चाङ्गेन सह भावना[१९७] ।
उपास्तौ श्रूयते नैव कर्माङ्गैः सह भावना ॥५७१॥

कर्माङ्गोद्गीथ संसक्तौ विद्यायां स समुच्चयः ।
दृश्यते नियमात् तस्मादनुष्ठानार्थमेव सः ॥५७२॥

आश्रयाधारसंसक्तोपासना तु विनाश्रयम् ।
भवितुं नैव शक्नोति विनाश्रयमुपासनम् ॥५७३॥

आश्रयः सहभावेन सहभावो भवेदिति ।
नियमो दृश्यते नैव श्रुतिश्च न हि वक्ति तत् ॥५७४॥

'एवं विद्धे'ति यद्वाक्यमागतं श्रुतिशंशितम्[१९८] ।
दृश्यतेऽसह भावेनोपासनायां यदागतम् ॥५७५॥

एतस्मात् कारणादत्र विकल्पो वा समुच्चयः ।
स्वेच्छया करणीयोऽस्ति सोऽयं वेदान्तनिर्णयः ॥५७६॥

अत्राधिकरणे सूत्र षट्कं तेन विनिश्चितम् ।
उपासना स्वेच्छयाऽस्ति विकल्पो वा समुच्चयः ॥५७७॥

ब्रह्मसूत्रे कारिकायां तृतीयाध्यायवर्णितः ।
पादस्तृतीयोऽप्यत्रैव समनूद्य समापितः ॥५७८॥

॥ इति ब्रह्मसूत्रकारिकायां तृतीयेऽध्याये तृतीयः पादः ॥

१९७. ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति स्तोत्रमनुशंसति प्रस्तोतः साम गाय होतरेतद्यज । – श्रुतिः

१९८. एवं विद्ध यै ब्रह्मा यज्ञं यजमानं सर्वाश्चर्त्विजोऽभिरक्षति ।
– छान्दोग्योपनिषद् ४।१७।१०

१९९. अङ्गेषु यथाश्रयभावः । – ब्रह्मसूत्रम् ३।३।३६।६१–६६

## ॐ तत्सद्ब्रह्मणे नमः
## ब्रह्मसूत्रकारिकायां
# तृतीयेऽध्याये चतुर्थः पादः

(अस्मिन् पादे पुरुषार्थतः समारभ्य मुक्तिफलं यावत् सप्तदश अधिकरणानि सन्ति । अत्र निर्गुणविद्याया अन्तरङ्गाणि बहिरङ्गाणि च साधनानि च विवेचितानि विद्यन्ते ।)

### १. पुरुषार्थाधिकरणम् (ब्रह्मसूत्रम् ३।४।१।१–१७)

वेदान्तज्ञानतः सत्यं प्राप्यते परमार्थता ।
शोकस्य पारमात्मज्ञस्तीर्त्वा यात्येव शास्त्रतः[१] ॥१॥

यो जानातीह सद्ब्रह्म स स्वयं ब्रह्मविद् भवेत्[२] ।
ब्रह्मज्ञानी स्वयं ब्रह्म भवति श्रुति वाक्यतः ॥२॥

ब्रह्मवित् सत्यमेवेतः प्राप्नोति परमात्मनि[३] ।
भणन्ति श्रुतयो नैका मुक्तकण्ठा इतस्ततः ॥३॥

आचार्यवान् योऽस्ति पुमान् स तस्माद् ब्रह्मवेत्यतः[४] ।
देहपातानन्तरं तु ब्रह्मैव भवति स्वयम् ॥४॥

---

१. तरति शोकमात्मवित् । – छान्दोग्योपनिषद् ७।१।३
२. स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति । – मुण्डकोपनिषद् ३।२।९
३. ब्रह्मविदाप्नोति परम् । – तैत्तिरीयोपनिषद् २।१।१
४. आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये ।
– छान्दोग्योपनिषद् ६।१४।२

‘य आत्मे’ति समारभ्य स उपक्रमति शनैः[५] ।
‘स सर्वाश्चेति मन्त्रेणोपसंहृत्य’ प्रशंसति[६] ॥५॥

‘आत्मा वाऽरे’ ति प्रारभ्याऽऽचार्य उपक्रमत्यपि[६] ।
आत्माऽमृतत्वं वदति सोऽन्त्येपीयूषसमश्नुते[७] ॥६॥

ब्रुवन्ति नैकाः श्रुतयो ‘विद्या तु पुरुषार्थता’ ।
साधनानि तु बाह्यानि साध्या विद्या हि केवलम् ॥७॥

गुरो ! तदित्थमायातं नैकाभिः श्रुतिभिर्मतम् ।
क्रत्वर्थं तन्मतं किं वा ? ज्ञानं स्यात् तत् स्वतन्त्रकम् ? ॥८॥

वादिनः स्वमतं चेत्थं स्थापयन्ति पुनः पुनः ।
आत्मा कर्तेत्यतः सैष कर्माङ्गं भवति स्वतः ॥९॥

आत्मा देहात् पृथगिति तथ्यं बुध्वा हि वस्तुतः ।
मानवाः कर्म कुर्वन्ति कर्माङ्गं ज्ञानमेव तत् ॥१०॥

विद्वन्नत्राऽऽज्ञापयतु ह्यात्मज्ञानमिदं किमु ?
क्रत्वर्थं ज्ञानमथवा स्वतन्त्रं वक्तु तत्त्वतः ॥११॥

---

५. य आत्माऽपहतपाप्मा । – छान्दोग्योपनिषद् ८।७।१

६. स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानाति । – छान्दोग्योपनिषद् ८।७।१

आत्मा वा अरे द्रष्टव्यः । – बृहदारण्यकोपनिषद् ४।५।६

७. एतावदरे खल्वमृतत्वम् । – बृहदारण्यकोपनिषद् ४।५।१५

गुरुः –

आत्मज्ञानं न कर्माङ्ग विरुद्धं तस्य तद् भवेत् ।
एतद्ध स्मेतियद् वाक्यं तद् वेदान्तवचः स्मृतम्[८] ॥१२॥

ज्ञानिनां जनकादीनामाचारो लोकसङ्ग्रहः ।
एतदर्थं कर्म तेषां ज्ञानहेतुर्न कर्म तत् ॥१३॥

आत्मज्ञानं स्वतन्त्रं स्यात् पुरुषार्थं तदेव हि ।
न तद् भवति कर्माङ्गं सिद्धः सिद्धान्त एष हि ॥१४॥

अत्राधिकरणे सप्तदश सूत्राणि सन्त्यपि[९] ।
आत्मज्ञानं स्वतन्त्रं स्यान्न कर्माङ्गं स्मृतं हि तैः ॥१५॥

## २. परामर्शाधिकरणम् (ब्रह्मसूत्रम् ३।४।२।१८–२०)

वर्णकद्वयमस्त्यत्र प्रथमं तूर्ध्वरेतसः ।
विवेचयति सन्यास आश्रमो वा न वाऽस्ति किम् ॥१६॥

द्वितीयं वर्णकं लोककामी गृहाश्रमी नरः ।
परात्परं ब्रह्मज्ञानं करोति न करोति तत् ॥१७॥

वर्णकम् – १

शिष्यः –

तत् स्थानमाश्रमः किं वा ? यत् स्थानं चोर्ध्वरेतसः ।
वदन्ति वादिनश्चात्र सन्देहे न तदाश्रमः ॥१८॥

---

८. एतद्ध स्म वै तद्विद्वांस आहुर्ऋषयः काषवेयः किमर्था वयं यक्ष्यामहे एतद्ध स्म वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहवाञ्चक्रिरे । एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय भिक्षाचर्यं चरन्ति ।
– बृहदारण्यकोपनिषद् ३।५।१

९. पुरुषार्थोऽतः शब्दादिति बादरायणः । – ब्रह्मसूत्रम् ३।४।१।१–१७

विधिवाक्य चैतदर्थं कुत्रापि नैव दृश्यते ।
'वीरहे'ति श्रुतेर्वाक्यं गृहस्थानां कृते हि तत्[१०] ॥१९॥

सन्यासः शंसितो दृष्टः स्मृतौ कुत्रापि लभ्यते ।
पङ्ग्वन्धानां कृते तत् तु यत् सन्यासो विधीयते ॥२०॥

एतस्मात् कारणान्नास्ति ह्यूर्ध्वरेताख्य आश्रमः ।
भणन्ति वादिनः स्पष्टं नास्ति सन्यास आश्रमः ॥२१॥

तदत्र वदतु ब्रह्मन् ? नास्ति सन्यास आश्रमः ?
अनेन मे मानसेऽत्र सम्भूतोऽतीव विभ्रमः ॥२२॥

गुरुः –
ऊर्ध्वरेताऽऽश्रमोऽस्तीह यत् तद वदन्तु वादिनः ।
विधिर्न दृश्यते स्पष्टं तथाप्यस्ति तदाश्रमः ॥२३॥

तदत्र कल्पना कार्या ह्यपूर्वस्य विधेरपि ।
आहिताग्ने र्गृहस्थस्य कृते वाक्यं तु वीरहा ॥२४॥

पङ्ग्वन्धानां कृते भिन्नो विधिर्दृष्टः स्मृतौ क्वचित् ।
स्वस्थमानववासार्थं सन्यासाश्रम आगतः[११] ॥२५॥

---

१०. क. आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः ।
– तैत्तिरीयोपनिषद् १।११।१
ख. नापुत्रस्य लोकोऽस्तीति तत्सर्वे पशवो विदुः, इत्येवमाद्या ।
ग. ये चेमेऽरण्ये श्रद्धा तप इत्युपासते । – छान्दोग्योपनिषद् ५।१०।१
घ. तपःश्रद्धे ये ह्युपवसन्त्यरण्ये । – मुण्डकोपनिषद् १।२।४४
इति च देवयानोपदेशः, नाश्रमान्तरोपदेशः । – ब्रह्मसूत्रम्, शाङ्करभाष्यम्
११. एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति । – बृहदारण्यकोपनिषद् ४।४।२२

गृहस्थाश्रमिणां नैवाऽधिकृतो न्यास आश्रमः ।
तदर्थं तु विधेयोऽस्ति सन्यासोऽस्ति सुनिश्चितः[१२] ॥२६॥

श्रुतिर्वदति जाबालः क्रमशस्तुर्य आश्रमः[१३] ।
श्रुतिसम्मत एषोऽस्ति तुरीयोऽन्यास आश्रमः ॥२७॥

वर्णकम् २

ब्रह्मज्ञातु कः समर्थो लोककाम्याश्रमी जनः ।
शक्नोति वा नेति चित्तभित्तौ सन्देह आगतः ॥२८॥

वादिनस्तु त्रयो धर्मान् गृहीत्वा शक्नुवन्ति ते[१४] ।
"सर्व एते भवन्त्यादि' शक्नुवन्ति, वदन्ति च[१५] ॥२९॥

पुण्यलोकाभिलाषी चेद् ज्ञानमार्गेऽभिसञ्चरन् ।
ब्रह्मनिष्ठाधिकारी यः समर्थो ब्रह्मबोधने ॥३०॥

---

१२. क. न्यास इति ब्रह्मा ब्रह्मा हि परःपरो हि ब्रह्मा तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत् । – नारायणीयोपनिषद् ७८

ख. वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद् यतयः शुद्धसत्त्वाः ।
– मुण्डकोपनिषद् ३।२।६

ग. अथ पुनरेव व्रती वाऽव्रती वा स्नातको वोत्सन्नाग्निरनग्निको वा ।
– जाबालोपनिषद् ४

घ. अथ परिव्राड् विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षाणो ब्रह्मभूयाय भवति ।
– जाबालोपनिषद् ५

ङ. तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ – गीता ५।१७

१३. ब्रह्मचर्यं परिसमाप्य गृही भवेद् गृही भूत्वा वनी भवेद् वनी भूत्वा प्रव्रजेत् ।
यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद् वा वनाद् वा ॥ – जाबालोपनिषद् ४

१४. त्रयो धर्मस्कन्धाः । – छान्दोग्योपनिषद् २।२३।१

१५. सर्वे एते पुण्यलोका भवन्ति । – श्रुतिः

निषेधो दृश्यते नापि ब्रह्मज्ञानैकमार्गणे ।
ब्रह्म ज्ञातुं समर्थः स्यात् सारल्येनैव सज्जनः ॥३१॥

ब्रह्मज्ञातुं शक्नुवन्ति तदित्थं वादिनां मतम् ।
समागतं न वा ते किमाज्ञापयतु तत्वतः ॥३२॥

गुरुः –
बाह्यवृत्तीन् परित्यज्य दत्तचित्तः स्मरेद् बुधः ।
एकं ब्रह्माऽनन्यचित्तो ब्रह्मनिष्ठः सदैव चेत् ॥३३॥

ब्रह्मज्ञानार्थसंलग्नोऽक्षमः संसारकर्मणि ।
कर्मानुष्ठानसंलग्नो ब्रह्मज्ञाने न सक्षमः ॥३४॥

तमांसि लोककर्माणि ब्रह्मज्ञानं प्रकाशकम् ।
समुच्चयो नैतयोऽस्ति लोकेऽस्मिन् ज्ञानकर्मणोः ॥३५॥

यः कर्मणा त्यागकर्ता ज्ञानकर्ताऽस्ति निश्चयः ।
सर्वांशे नैव भविता ज्ञानकर्मसमुच्चयः ॥३६॥

ब्रह्मसंस्थोऽमृतत्वं यः संन्यासाश्रमसंस्थितः ।
नान्धा परम्परा सैषा ह्यसत्यं वादिनां मतम् ॥३७॥

ब्रह्मनिष्ठो न कर्मिष्ठो भवतीह कदाचन ।
कर्मत्यागी ब्रह्मनिष्ठो भवतीह तु सर्वदा ॥३८॥

अत्राधिकरणे सूत्रत्रयं वक्तीह निश्चितम्[१६] ।
भवितुं नैव शक्नोति ज्ञानकर्मसमुच्चयः ॥३९॥

---

**१६. परामर्शं जैमिनिरचोदना चापवदति । – ब्रह्मसूत्रम् ३।४।२।१८–२०**

## ३. स्तुतिमात्राधिकरणम् (ब्रह्मसूत्रम् ३।४।३।२१–२२)

शिष्यः –

उद्गीथावयवाः सन्ति तस्मिनोङ्कार कल्पिताः ।
पूर्णा रसतमास्तेऽपि स्तवे ध्याने किमर्थकाः[१७] ।।४०।।

तदित्थं सति सन्देहे 'इयमेव जुहू' इति[१८] ।
आदित्यरूपं वदति तत् कर्माङ्गं किमु स्तुतिः ? ।।४१।।

आज्ञापयतु हे विद्वन् ? ध्यानं तत् किमु वा स्तुतिः ?

गुरुः –

रसैतमत्वमित्यादि न ध्यानं तत्तु संस्तुतिः ।।४२।।

वादी प्रदत्तो दृष्टान्तो विषमोऽस्तीह निश्चयः ।
जुहूरादित्ययोरत्र सम्बन्धो नास्ति निश्चयः ।।४३।।

ओमित्यनेन मन्त्रेण सहस्यादेकवाक्यता ।
रसैतमत्वं वाक्यं तु ध्यानार्थं विद्यते सदा ।।४४।।

अत एव हि पूर्वोक्ता सर्वे रसमया गुणाः ।
ध्यानार्थमेव विद्यन्ते न स्तुतौ ते तदर्थकाः ।।४५।।

अत्राधिकरणे सूत्रद्वयं वक्ति निरन्तरम्[१९] ।
गुणा रसतमा ये ते ध्यानार्थं सन्ति सर्वदा ।।४६।।

---

१७. स एष रसानां रसतमः परमः पराध्योऽष्टमो यदुद्गीथः । – छान्दोग्योपनिषद् १।१।३
१८. इयमेव जुहूरादित्यः कूर्मः स्वर्गोलोक आहवनीयः । – श्रुतिः
१९. स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् । – ब्रह्मसूत्रम् ३।४।३।२१,२२

## ४. पारिप्लवाधिकरणम् (ब्रह्मसूत्रम् ३।४।४।२३–२४)

शिष्यः –

'अथ–[20]प्रतर्दनो–[21]जाने' [22]त्याख्यानेषु समागताः ।
पारिप्लवार्थमायाता वा विद्यास्तुतये किमु ? ।।४७।।

सन्देहे वादिनः पारिप्लवार्थं ब्रुवते ततः ।
न हि विद्यासंस्तुतये भणन्ति सुदृढाः समे ।।४८।।

पारिप्लवमिदं तेषां वादिनां मतमागतम् ।
स्तुत्यर्थं नैव, कर्माङ्गं तन्मतं, सुष्ठु किं गुरो ! ।।४९।।

गुरुः –
'पारिप्लवमाचक्षीते'त्युपक्रम्य यदागतम् ।
'मनुर्वैवस्वतो राजा' तद् विशेषणमागतम् ।।५०।।

वादिनां मतमेद्धि कर्माङ्गं ते वदन्ति यत् ।
तत् तु नास्त्यत्र कर्माङ्गं विद्या स्तुत्यर्थमागतम् ।।५१।।

श्रुतौ य आगतो मन्त्र 'आत्मा वे'तीह निश्चितम् ।
विद्यया सह तस्यात्र युक्तमस्त्येकवाक्यता ।।५२।।

इत्थमेव हि 'प्राणोऽस्मि' 'वायु[23]र्जानश्रुतौ' तथा ।
एकवाक्यं विद्ययैव सह स्तुत्यर्थमागतम् ।।५३।।

---

२०. अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च ।
– बृहदारण्यकोपनिषद् ४।५।१

२१. प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम ।
– कौषीतकि ब्राह्मणोपनिषद् ३।१

२२. जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस । – छान्दोग्योपनिषद् ४।१।१

२३. वायुर्वाव संवर्गः । – छान्दोग्योपनिषद् ४।३।१

तथा 'स आत्मनो'[२४] मन्त्रः कर्माख्यानादिका हि ये ।
समीपमागताः सर्वे विधिस्तुत्यर्थमेव च ।।५४।।

पूर्वोक्ता वादिनश्चत्थ सन्देहे ये समागताः ।
श्रौताख्यानादयो विद्यास्तुत्यर्थं ते विदन्त्वि ति ।।५५।।

इत्यादिकानि वाक्यानि श्रौताख्यानानि सर्वथा ।
समीपस्थानि सर्वाणि विधिस्तुत्यर्थमेव हि ।।५६।।

समाख्यानानि सर्वाणि विद्यास्तुत्यर्थमेव हि ।
पारिप्लवार्थं नैतानि सिद्धान्तोऽयं प्रबुध्यते ।।५७।।

अत्राधिकरणे सूत्रद्वयमस्ति प्रवक्ति च[२५] ।
विद्यास्तुत्यर्थमाख्यानं न पारिप्लवमर्थकम् ।।५८।।

### ५. अग्नीन्धनाद्यधिकरणम् (ब्रह्मसूत्रम् ३।४।५।२५)

शिष्यः –
आत्मबोधफलार्थं हि कर्मणः समपेक्षते ।
अपेक्षते नाऽन्यदत्र सन्देहोऽधिक आगतः ।।५९।।

अङ्गी चोपेक्षतेऽङ्गं तत् सन्देहेऽत्र सदैव हि ।
वादिनः कथयन्त्यत्र प्रयाजे दृश्यते यथा ।।६०।।

आज्ञापयत्वत्र गुरो ! वादिनां मतमस्ति यत् ।
अङ्गी त्वपेक्षतेऽङ्गानि युक्तमेतन्न वा किमु ? ।।६१।।

---

२४. स आत्मनो वपामुदखिदत् । – श्रुतिः
२५. पारिप्लवार्था इति चेन्न विशेषितत्वात् । – ब्रह्मसूत्रम् ३।४।४।२३–२४

गुरुः –
सच्चिद् विशुद्धं मोक्षार्थमात्मज्ञानं सुनिर्मलम् ।
नापेक्षते हि कर्माणि मुक्तये तु कदाचन ॥६२॥

यथा दीपः प्रकाशार्थं तमो नापेक्षते क्वचित् ।
तथा ज्ञानं तु कर्माणि तदङ्गं चाऽनपेक्षते ॥६३॥

आत्मज्ञानं प्रकाशोऽस्ति कर्माणि निविडं तमः ।
अन्धकारविनाशार्थं दीपो नापेक्षते तमः ॥६४॥

कर्मजन्यो न मोक्षोऽस्ति मोक्षोऽनित्यस्तथा सति ।
प्रकाशरूपो मोक्षोऽस्ति श्रुतिश्चाऽप्यनुमोदते ॥६५॥

विद्या भवति मोक्षाय सैषा मोक्षादिकारणम् ।
निवारयति विद्या हि सर्वथा वादिनां मतम् ॥६६॥

अत्राधिकरणे सूत्रमेकं मोक्षार्थमागतम्[२६] ।
कर्मापेक्षां न कुरुते विद्याज्ञानं प्रवक्ति च ॥६७॥

## ६. सर्वापेक्षाधिकरणम् (ब्रह्मसूत्रम् ३।४।६।२६–२७)

शिष्यः –
ब्रह्मतत्त्वावबोधोऽयं कर्मोत्पत्तिनिमित्तकम् ।
अपेक्षते किं नवेति सन्देहः पुनरागतः ॥६८॥

वादिनः प्रवदन्त्यत्र ब्रह्मविद्या कथञ्चन ।
फलोत्पादनहेत्वर्थं सर्वदैवाऽनपेक्षते ॥६९॥

तथैव ब्रह्म विद्याऽपि ब्रह्मज्ञानार्थहेतवे ।
कर्मापेक्षां न कुरुते ब्रह्मज्ञानैककारणम् ॥७०॥

२६. अत एव चाग्नीन्धनाद्यनपेक्षा । – ब्रह्मसूत्रम् ३।४।५।२५

कर्मापेक्षां प्रकुरुते विद्या ज्ञानोदये यदि ।
तत्राऽर्धजरती दोषः शास्त्रदृष्टौ पतेदपि ।।७१।।

ब्रह्मन् ! तदत्र वदतु युक्तं किं वादिनां मतम् ?
अयुक्तं यदि तद् ब्रह्मन् ! किमन्यदुपयुक्तकम् ? ।।७२।।

गुरुः –
अत्र दोषो न लगति तदर्धजरती क्वचित् ।
क्वचित् कर्मापेक्षते च कदाचिदनपेक्षते ।।७३।।

कर्मापेक्षा तदा नास्ति विद्योत्पन्ना यदा भवेत् ।
स्वकीयोत्पत्तिहेतौ तु विद्या कर्माप्यपेक्षते ।।७४।।

विद्योत्पत्तौ साधनानि सन्ति यज्ञादयोऽपि च[२७] ।
श्रुतिर्वदति विद्याया ब्रह्मचर्यं हि कारणम्[२८] ।।७५।।
साक्षादाश्रमकर्मापि विद्यायाः साधनं भवेत् ।
बाधकानि न कर्माणि भवन्ति वदति श्रुतिः ।।७६।।

नश्यन्ति रागान् द्वेषांश्च सम्पूर्णानपि कर्मणः[२९] ।
स्मृतिर्वदत्यपि ततो ज्ञानमायाति निश्चितम् ।।७७।।

प्राप्तव्य एक एवाऽस्ति वेदशास्त्राणि चक्षते[३०] ।
ब्रह्मचर्याद्याश्रमा हि विद्याप्तौ कर्महेतवः ।।७८।।

---

२७. तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन ।
– बृहदारण्यकोपनिषद् ४।४।२५

२८. अथ यद्यज्ञं इत्याचक्षते ब्रह्मचर्यमेव तत् । – छान्दोग्योपनिषद् ८।५।१

२९. कषायपक्तिकर्माणि ज्ञानन्तु परमा गतिः ।
कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते ।। – स्मृतिः

३०. सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद् वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीमि ।। – कठोपनिषद् २।१५

शान्तदान्तादयो भावा विद्याङ्गानि भवन्त्यपि[३१] ।
अनुष्ठेया इमे नित्यं ज्ञानार्थं वदति श्रुतिः ॥७९॥

विद्यया सह संयोगे शमाद्याः सर्वसम्पदः ।
आन्तराणि साधनानि भवन्ति वदति श्रुतिः ॥८०॥

कर्तुर्विविदिषा चेत् ता यज्ञयागादिकाः क्रिया ।
बाह्यानि साधनानिस्युर्विद्याऽऽप्तौ सन्तिसर्वदा ॥८१॥

नापेक्षन्ते यथा ह्यशचाः कर्षणे हलयो जने ।
कर्मापेक्षा तु विद्यार्थ यथाऽश्वान् रथयोजने ॥८२॥

विद्योत्पत्तौ सहेतुत्वादपेक्षा कर्मणो भवेत् ।
मोक्षार्थमन्तकाले तु नापेक्षा कर्मणो भवेत् ॥८३॥

अत्राधिकरणे सूत्रद्वयमास्ते तयोर्मतम्[३२] ।
कर्मापेक्षा समारम्भे नापेक्षाऽन्ते तु कर्मणः ॥८४॥

## ७. सर्वान्नानुमत्यधिकरणम् (ब्रह्मसूत्रम् ३।४।७।२८–३१)

शिष्यः –

प्राणोपासकहेतोर्यदस्ति सर्वान्नभक्षणम्[३३] ।
शमादितुल्यं विद्याया अङ्गरूपेण दृश्यते ॥८५॥

---

३१. तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्यति ।
– बृहदारण्यकोपनिषद् ४।४।२३

३२. सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् । – ब्रह्मसूत्रम् ३।४।६।२६,२७

३३. क. न ह वा एवंविदि किञ्चनानन्नं भवति । – छान्दोग्योपनिषद् ५।२।१
ख. न ह वा यस्यान्नं जग्धं भवति नान्नं प्रतिगृहीतम् ।
– बृहदारण्यकोपनिषद् ६।१।१४

विधिस्तत् किमु वाऽस्त्येतत् केवलं स्तुतिकीर्तनम् ।
वादिनः प्रवदन्त्यत्र विधिः सर्वान्न भक्षणम्[३४] ॥८६॥

अन्यथा वामदेवाख्या विद्या चात्रापि बाधते[३५] ।
भक्षाऽभक्षविभागाख्यं शास्त्रं चात्रापि बाधते ॥८७॥

भवानत्राऽऽज्ञापयतु ब्रह्मन् ! सर्वान्न भक्षणम् ।
तदपूर्वो विधिः किं वा तत् कि संस्तुतिकीर्तनम् ? ॥८८॥

गुरुः –
सङ्कटेसमनुप्राप्ते प्राणनाशकरक्षणे ।
श्रुतिर्वक्ति प्राणरक्षां कुर्यात् सर्वान्नभक्षणम्[३६] ॥८९॥

श्रुतिरापत्तिकाले तु बुधे वाऽप्यबुधे जने[३७] ।
अन्नभक्षणकार्यार्थमाज्ञापयति च स्मृतिः ॥९०॥

सामान्यायामवस्थायां श्रुतिः सर्वान्निभक्षणे ।
अनुज्ञां न ददात्येव निषेधयति तत्क्षणे ॥९१॥

सदा त्यजेन्मद्यपानं ब्राह्मणो वदति स्मृतिः[३८] ।
नो चेद् दण्डं मिलति तं सुरापी भवति कृमिः ॥९२॥

स्वेच्छाप्रवृत्तिं संरोद्धुं यस्या अस्ति प्रयोजनम् ।
श्रुतिः स्पष्टं निगदति विप्रो मद्यं पिबेन्न हि[३९] ॥९३॥

---

३४. न ह वा एवंविदि किञ्चनानन्नं भवति । – छान्दोग्योपनिषद् ५।२।१
३५. न काञ्चन स्त्रियं परिहरेत् तद्व्रतम् । – छान्दोग्योपनिषद् २।१३।२
३६. न वा आजीविष्यमिमानखादन् । – छान्दोग्योपनिषद् १।१०।४
३७. जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ – स्मृतिः
३८. मद्यं नित्यं ब्राह्मणः सुरापस्य ब्राह्मणस्योष्णामाषिञ्चेयुः ।
सुरापाः कृमयो भवन्त्यभक्षभक्षणात् ॥ – स्मृतिः

निषेधाज्ञां प्रकुरुते श्रुतिः सर्वान्नभक्षणम् ।
[40]'न ह वे'ति स्तुतौ वाक्यं विधिवाक्यं न तत्क्वचित् ॥९५॥

दृश्यतेऽत्राधिकरणे सूत्राणां हि चतुष्टयम्[41] ।
अर्थवादोऽस्ति सर्वान्नभक्षणं न विधिः स्मृतः ॥९६॥

## ८. आश्रमकर्माधिकरणम् (ब्रह्मसूत्रम् ३।४।८।३२–३५)

शिष्यः –
विद्यायाः साधनं चैकमाश्रमः कर्म केवलम् ।
'सर्वापेक्षा...' सूत्रमिदं कुरुते शंसनं ध्रुवम्[42] ॥९७॥

आश्रमकर्मलग्नो यो विद्यायां नास्ति कामना ।
अज्ञानिनं कर्म किं तदनुष्ठेयं न वाऽस्ति किम् ? ॥९८॥

आश्रमार्थं प्रभिन्ना किम् विद्या चैकाऽस्ति वा पुनः ?
अनुष्ठेया भिन्नविद्या यद्वा चैकाऽस्ति सा च का ? ॥९९॥

सन्देहोऽत्र समायातः किं तदाश्रमकर्म यत् ।
अमुमुक्षुजनार्थं तदनुष्ठेयं न वाऽस्ति किम् ? ॥१००॥

वादिनः कथयन्त्यत्र 'तमेतम्' श्रुतिसंग्रही[43] ।
आश्रमिणः स्वनुष्ठेयं विद्यायाः कर्मसाधनम् ॥१०१॥

यदि प्रयोजनं भेदस्तत्प्रयोगे भवत्यपि ।
पृथक् पृथगनुष्ठानमनुष्ठेयं यथार्थतः ॥१०१॥

---

३९. तस्माद् ब्राह्मणः सुरां न पिबेत् । – श्रुतिः
४०. न ह वा एवंविदि । – छान्दोग्योपनिषद् ५।२।१

योो न कामयते विद्यां यो वाञ्छति फलान्तरम् ।
तेन नित्यानि कर्माणि ह्यनुष्ठेयानि सन्ति नो ॥१०२॥

आज्ञापयत्वद्य गुरो ! किं युक्तं वादिनां मतम् ?
अयुक्तं यदि सिद्धान्तो युक्तो मान्योऽस्ति कः पुनः ॥१०३॥

गुरुः –
अमुमुक्षोर्यदा निष्ठाऽऽश्रममात्रे भवेद् यदि ।
तस्य नित्यं कर्म कार्यं भणति श्रुतिरप्यतः[४४] ॥१०४॥

विद्यायाः सहकारीणि यज्ञकर्माणि वेदतः ।
तानि चाऽऽश्रमकर्माणि विद्यायाः साधनानि च[४५] ॥१०५॥

विद्या विधेयो नास्त्येव प्रयाजादिकयज्ञवत् ।
अग्नीन्धनाद्यपेक्षा नो विद्यायामन्यसाधनम्[४६] ॥१०६॥

धर्माण्याश्रम कर्माणि पक्षद्वयमपेक्षते ।
अग्निहोत्रादिधर्माणि ह्यनुष्ठेयानि वस्तुतः ॥१०७॥

ब्रह्मचर्यादिमार्गेण सदात्मा प्राप्यते शनैः ।
गृहाश्रमाणि कर्माणि विद्याहेतुरिति श्रुतिः ॥१०८॥

कर्मणस्तदनुष्ठान मेकवारं कृते सति ।
भोजनं दीयते श्राद्धे तेन तृप्तिमिलेद् यथा ॥१०९॥

४१. सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् । – ब्रह्मसूत्रम् ३।४।७।२८–३१
४२. सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् । – ब्रह्मसूत्रम् ३।४।६।२६
४३. तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेनैतमेव विदित्वा मुनिर्भवति । – बृहदारण्यकोपनिषद् ४।४।२२
४४. यावज्जीवमग्निहोत्रं जुहोति । – श्रुतिः
४५. सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ।– ब्रह्मसूत्रम् ३।४।६।२६
४६. अत एव चाग्नीन्धनाद्यनपेक्षा ।– ब्रह्मसूत्रम् ३।४।५।२५

तथैव क्रियते कर्म विद्यार्थं यदनुष्ठितम् ।
तथा सुनिश्चितं कर्म भवत्याश्रमिणां प्रति ॥११०॥

श्रुतेर्बलात्तु कर्मैकं फलद्वयमपेक्षते ।
यथैव खादिरो युपो वीर्यकामाय चेष्यते[४८] ॥१११॥

अतः कर्म शुभं चैकं समनुष्ठीयते यदि ।
फलद्वयं प्राप्यतेऽत्र श्रुतिरुद्गिरति स्वयम् ॥११२॥

अत्राधिकरणे सूत्रचतुष्कं परिदृश्यते[४९] ।
एकवारं कर्म कृते फलं तस्योपलभ्यते ॥११३॥

### ९. विधुराधिकरणम् (ब्रह्मसूत्रम् ३।४।९।३६–३९)

शिष्यः –
किं सर्वे विधुराद्याश्च तथाऽनाश्रमिभिः सह ।
विद्याधिकारिणः सन्ति न वा सन्देह आगतः ॥११४॥

अत्राऽनाश्रमिणः सर्वे ततस्ते पूर्वपक्षिणः ।
विद्याऽधिकारिणो नैव ततस्ते प्रवदन्त्यपि ॥११५॥

तानि चाश्रमकर्माणि विद्यार्थं यदि हेतवः ।
अधिकारः कुतोऽस्त्यत्र तदनाश्रमिणां कृते ॥११६॥

ते त्वनाश्रमिणः पूर्वपक्षाश्वात्र वदन्त्यपि ।
नाऽस्मान् विद्याधिकारोऽस्ति प्रमाणं दर्शयन्ति च ॥११७॥

---

४७. एष ह्यात्मा न पश्यति यं ब्रह्मचर्येणानुविन्दते । – छान्दोग्योपनिषद् ८।५।३
४८. खादिरो यूपो भवति, खादिरं वीर्यकामस्य यूपं कुर्वीत । – श्रुतिः
४९. विहितत्वाच्चाश्रमकर्मापि । – ब्रह्मसूत्रम् ३।४।८।३२–३५

इत्थमत्र गुरो ! वक्तु किमनाश्रमिणो जनान् ?
शुश्रूषाऽत्र समायाताऽधिकारो नास्ति वाऽस्ति किम् ? ॥११८॥

गुरुः –
अनाश्रमिजनास्ते तु श्रुतितः स्मृतितोऽपि च ।
अधिकारं सुरक्षन्ति गार्गीरैक्वादयो यथा ॥११९॥

रैक्वो वाचक्नवी गार्गी तावनाश्रमिणावपि ।
छान्दोग्यं बृहदारण्यं स्मरन्तौ ब्रह्मज्ञानिनौ ॥१२०॥

तथा संवर्त इत्याद्या सन्त्यनाश्रमिणो जनाः ।
आसन् महायोगिनस्ते इतिहासः प्रवक्ति च ॥१२१॥

आसीदनाश्रमी रैक्वो जपति ज्ञानहेतुकः ।
विद्याधिकारं प्राप्नोति स्मृतिर्वक्ति निरन्तरम् ॥१२२॥

अतीतजन्मसिद्धाभिराश्रमकृतकर्मभिः ।
शास्त्रमन्यं प्रवदति विद्याप्राप्तिर्भवेदिति[५०] ॥१२३॥

तदित्थमिह चान्यान्या विधुराद्या अपि क्रमात् ।
भवन्ति विद्याऽधिकृता भाष्ये लिखितमित्यपि[५१]॥१२४॥

अनाश्रमिभ्योऽपि सदाऽऽश्रमिणस्तत्त्वतोऽधिका[५२] ।
विद्याप्राप्तिर्भवेदत्र श्रुतिर्गिरति कण्ठतः ॥१२५॥

---

५०. क. जप्येनैव तु संसिद्ध्येद् ब्राह्मणो नात्र संशयः ।
कुर्यादन्यत्र वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ – स्मृतिः
ख. अनेकजन्मसंसिद्धस्ततो याति पराङ्गतिम् । – गीता ६।४५

५१. तस्माद् विधुरादीनामप्यधिकारो न विरुध्यते । –शाङ्करभाष्यम्, ब्रह्मसूत्रम् ३।४।९।३८

५२. तेनैति ब्रह्मवित्पुण्यकृत्तैजश्च । –बृहदारण्यकोपनिषद् ४।४।९

अनाश्रमी न तिष्ठेत ब्राह्मणः कुत्रचित् क्वचित्[५३] ।
यदि स्थितो वर्षमेकं कृच्छ्रं कुर्यादतन्द्रितः ॥१२६॥

अत्राधिकरणे दृष्टं वक्ति सूत्रचतुष्टयम्[५४] ।
अनाश्रमिजनाश्चापि सन्ति विद्याधिकारिणः ॥१२७॥

### १०. तद्भूताधिकरणम् (ब्रह्मसूत्रम् ३।४।१०।४०)

शिष्यः –

सन्यासाश्रमतस्तस्याऽवरोहः स्यान्न वेति किम् ?
सन्देहो मेऽभवद् ब्रह्मन् ? किमारोहावरोहकः ? ॥१२८॥

तस्य पूर्वाश्रमकृतयागादौ रागसम्भवात् ।
च्युतिर्भवति सन्यासाद् वादिनः प्रवदन्त्यपि ॥१२९॥

गुरो ! भवान् प्रवदतु किं सन्यासाच्युतिर्भवेत् ?
भवति वा न भवति ? सन्यासात्पतनं किमु ? ॥१३०॥

गुरुः –

यस्मिन्नस्ति प्राप्तभावो वस्तुत ऊर्ध्वरेतसः ।
तस्मान्न तद्भवप्राप्तिर्भविता नैव तत्वतः ॥१३१॥

पूर्वोक्तैः श्रुतिभिः सार्धं स्मृतिशास्त्रादिभिस्तथा ।
पतनं नैव भवति नायाति पुनराश्रमे ॥१३२॥

---

५३. अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः ।
संवत्सरमनाश्रमी स्थित्वा कृच्छ्रमेकञ्चरेत् ॥
इति च स्मृतिलिङ्गात् ॥ – ब्रह्मसूत्रभाष्यम् ३।४।९।३९

५४. अन्तरा चापि तु तद्दृष्टेः । – ब्रह्मसूत्रम् ३।४।९।३६–३९

आश्रमी वनमाप्नोतु प्रत्यावर्तेद् गृहं न हि ।
तादृशा नियमाः सन्ति मुनिर्भणति जैमिनिः[५५] ॥१३३॥

व्रती नियममातिष्ठेत् आचार्यकुलशिक्षितः[५६] ।
गुरोरनुज्ञां संप्राप्य नित्यमेकाश्रमे वसेत् ॥१३४॥

ब्रह्मचर्यं समाप्यैव गृहस्थाश्रममाविशेत्[५७] ।
समायाति विरागश्चेत् ततः सन्यासमाश्रयेत् ॥१३५॥

यदा वैराग्यमायाति यस्मिन्नप्याश्रमस्थितः ।
ब्रह्मचर्यादपि वटुः सन्यासाश्रममाविशेत् ॥१३६॥

सन्ति चारोहवाक्यानि शास्त्रवाक्यविलोकने ।
अवरोहो नैव दृष्टः शास्त्रे वाक्येऽपि वस्तुतः ॥१३७॥

स्मृतिर्वदत्यशिष्टास्ते सन्ति प्रत्यवरोहिणः ।
स्वधर्मश्चाश्रमः श्रेयान् गीताशास्त्रं च वक्त्यहो ?[५८] ॥१३८॥

दृष्टमारोह मात्रं च सन्यासाश्रमसंश्रये ।
अवरोहणं नैव दृष्टमशास्त्रीयं तदस्ति किम् ? ॥१३९॥

---

५५. अरण्यमियादिति पदं ततो न पुनरेयात् । अत्यन्तमात्मानमाचार्यकुलेऽवसादयन् ।
— छान्दोग्योपनिषद् २।२३।१

५६. आचार्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमम् ।
आविमोक्षाच्छरीरस्य सोऽनुतिष्ठेद् यथाविधि ॥ — स्मृतिः

५७. ब्रह्मचर्यं समाप्य गृही भवेत्, ब्रह्मचर्यादेव प्रव्रजेत्, यद्वा यदहरेव विरजेत् तदहरेव प्रव्रजेत् । — जाबालोपनिषद् ४

५८. श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ — श्रीमद्भगवद्गीता ३।३५

अत्राधिकरणे सूत्रमेकमस्ति प्रवक्ति च[५९] ।
सन्यासाश्रममातिष्ठन् न तस्याऽस्त्यवरोहणम् ॥१४०॥

## ११. अधिकाराधिकरणम् (ब्रह्मसूत्रम् ३।४।११।४१–४२)

शिष्यः –
ऊर्ध्वरेताऽस्ति यः शिष्यो ब्रह्मचारी च नैष्ठिकः ।
भ्रष्टः स्वाश्रमतोऽयुक्तो व्यवहारोऽस्ति तस्य चेत् ॥१४१॥

शास्त्रे तस्याऽस्ति वा नास्ति प्रायश्चित्तविधिः क्वचित् ।
सन्देहः समनुत्पन्नो जिज्ञासासहितो मयि ॥१४२॥

तदत्र ब्रह्मनिष्ठस्य वदन्ति पूर्वपक्षिणः ।
प्रायश्चित्तविधिर्नास्ति केवलं चोपकुर्वतः ॥१४३॥

[६०]क्षतव्रतानां कुत्रापि सूत्रे वापि स्मृतौ [६१]क्वचित् ।
प्रायश्चित्तविधिर्नास्ति च्युतानां नियमादिह ॥१४४॥

प्रायश्चित्तविधिर्दृष्टो गृहस्थस्योपकुर्वतः ।
धर्मशास्त्रे क्वचिदिति वादिनः प्रवदन्ति च ॥१४५॥

इत्थमत्र गुरो ! वक्तु युक्तं किं वादिनां मतम् ? ।
अयुक्तं यदि चेत् कोऽस्ति सिद्धान्तो युक्तियुक्तकः ? ॥१४६॥

---

५९. तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात् तद्रूपाभावेभ्यः ।
– ब्रह्मसूत्रम् ३।४।१०।४०
६०. अवकीर्णिपशुश्च तद्वदाधानस्याऽप्राप्तकालत्वात् । – जैमिनिसूत्र ६।८।२१
६१. आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः ।
प्रायश्चितं न पश्यामि येन शुद्ध्येत् स आत्महा । – स्मृतिः

गुरुः –

अवश्यं भविता शास्त्रे प्रायश्चित्तं विधानतः ।
न महापातकञ्चैतद् वस्तुत उपपातकम् ॥१४७॥

उपकुर्वाणनामाख्यो ब्रह्मचर्याश्रमे वसन् ।
आस्ते यो मधुमांसादीन् भक्षणं कुरुते यदि ॥१४८॥

मन्यन्ते तस्य कर्माणि तदर्थमुपपातकम् ।
मन्यते चावकीर्णी च केवलमुपपातकी ॥१४९॥

नैष्ठिको ब्रह्मचारी तु यो वसेद् व्रतविच्युतः ।
प्रायश्चित्तं भवेत् तस्य समा विप्रतिपत्तितः[६२] ॥१५०॥

प्रायश्चित्ताख्यसंस्कारो महायत्नेन सिध्यति ।
तेनैव संस्कृतः शुद्धो ब्रह्मचारी क्षतव्रतः ॥१५१॥

सम्भवेद् यत्नतः शुद्धिर्नैष्ठिकब्रह्मचारिणः ।
असम्भवो नास्ति शुद्धिर्वनस्थ इव दृश्यते[६३] ॥१५२॥

'प्रायश्चित्तं क्वचिन्नास्ति' मतं तेषामयुक्तकम् ।
प्रायश्चित्तमस्ति शास्त्रे युक्तं वेदान्तविन्मतम् ॥१५३॥

अत्राधिकरणे सूत्रद्वयमेकं तयोर्मतम्[६४] ।
प्रायश्चित्त भवेच्छास्त्रे नैष्ठिकब्रह्मचारिणाम् ॥१५४॥

---

६२. क. समा विप्रतिपत्तिः स्यात् ।–जैमिनिसूत्रम् १।३।८
ख. शास्त्रस्था वा तन्निमित्तत्वात् ।–जैमिनिसूत्रम् १।३।१९

६३. 'वानप्रस्था दीक्षाभेदे कृच्छ्रं द्वादशरात्रं चरित्वा महाकक्षं वर्धयेत् ।'
'भिक्षुर्वानप्रस्थवत्सोमवल्लिवर्जं स्वशास्त्रसंस्काराच्च ।'
इत्वेवमादि प्रायश्चित्तस्मरणमनुस्मर्तव्यम् । – शाङ्करभाष्यम्, ब्रह्मसूत्रम् ३।४।१२।४२

६४. न चाधिकारिकमपि पतनानुमानात्तदयोगात् । – ब्रह्मसूत्रम् ३।४।११।४१–४२

## १२. बहिरधिकरणम् (ब्रह्मसूत्रम् ३।४।१२।४३)

शिष्यः –

प्रायश्चित्तविहितेन ये शुद्धा ब्रह्मचारिणः ।
शिष्टैर्विद्वद्भिरपि ते ग्राह्यास्त्याज्या भवन्ति किम् ? ॥१५५॥

वादिनः प्रवदन्त्यत्र प्रायश्चित्तेन कर्मणा ।
दोषमुक्ता ये भवन्ति ते तु ग्राह्या भवन्त्यतः ॥१५६॥

गुरो ! भवान् प्रवदतु युक्तं किं वादिनां मतम् ?
अयुक्तं चेत्तु सिद्धान्तः कोऽस्ति युक्तः प्रवक्तु तम् ॥१५७॥

गुरुः –

ऊर्ध्वरेता नैष्ठिकी चेदवकीर्णी च्युताश्रमी[६५] ।
शिष्टैस्त्याज्यो बहिर्गम्यस्तादृशः पातकी स चेत् ॥१५८॥

नैष्ठिको ब्रह्मचारी य आरूढपतितो भवेत् ।
धर्मच्च्युतो भवेत् सद्य आत्मघाती च मन्यते ॥१५९॥

प्रायश्चित्तो दुस्तरोऽस्ति शुद्धिस्तस्य भवेन्न हि ।
अस्वीकार्यो हि भवति सत्याज्यः शिष्टवर्गतः ॥१६०॥

परलोकनिमित्ता हि तस्य शुद्धिस्तु शास्त्रतः ।
शास्त्रं वक्तीह लोके तु ग्राह्यो नास्ति स वस्तुतः ॥१६१॥

---

६५. आरूढो नैष्ठिकं धर्मं यस्तु प्रच्च्यवते पुनः ।
प्रायश्चितं न पश्यामि येन शुध्येत्स आत्महा ॥
आरूढपतितं विप्रं मण्डलाच्च विनिःसृतम् ।
उद्बद्धं कृमिदष्टञ्च स्पृष्ट्वा चान्द्रायणञ्चरेत् ॥ – स्मृतिः

अत्राधिकरणे सूत्रमेकं वक्ति च शास्त्रतः[६६] ।
प्रायश्चित्तं न भवति भ्रष्टाचारस्य तस्य तु ॥१६२॥

## १३. स्वाम्यधिकरणम् (ब्रह्मसूत्रम् ३।४।१३।४४–४६)

शिष्यः –
तदङ्गस्योपासनाया अनुष्ठाताऽस्ति यो जनः ।
ऋत्विग् वा यजमानो वा कोऽस्ति मुख्यो द्वयोरिह ॥१६३॥

इत्थमत्राऽस्त्यनुष्ठाता यजमानो भवेदिति ।
वादिनः प्रवदन्त्यत्र प्रमाणैः श्रुतिशंसितैः[६७] ॥१६४॥

तज्जन्यफलसंप्राप्तिर्ध्याता मुख्यो भवत्यपि ।
स्वामी स यजमानोऽस्ति श्रूयते चेदमेव हि ॥१६५॥

श्रुतिरन्यापि वदति आगानादपि कारणात्[६८] ।
यजमानः प्राप्तिफलं ऋत्विक् चापि प्रशंसति ॥१६६॥

आत्रेयोऽपि प्रवदति कर्ता स्वामी फलस्य तु ।
आज्ञापयत्वत्र गुरो केन तत्फलमाप्यते ॥१६७॥

गुरुः –
औडुलोमिः कथयति ह्ययुक्तं वादिनां मतम्[६९] ।
स मन्यते ऋत्विगेव कर्ताऽङ्गकर्मणः पुनः ॥१६८॥

---

६६. बहिस्तूभयथापि स्मृतेराचाराच्च । –ब्रह्मसूत्रम् ३।४।१२।४३
६७. वर्षति हास्मै वर्षयति ह य एतदेवं विद्वान् वृष्टौ पञ्चविधं सामोपास्ते । वर्षत्यस्मै य उपास्ते ।– छान्दोग्योपनिषद् २।३।२
६८. आत्मने वा यजमानाय वा यं कामं कामयते तमागायति ।
– बृहदारण्यकोपनिषद् १।३।२८
६९. आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते । – ब्रह्मसूत्रम् ३।४।१३।४५

ऋत्विजे दक्षिणां दत्वा कर्ताऽऽत्मीयति कर्म तत् ।
उद्गाताऽत्र समायाति श्रुतिरेवं भणत्यपि ॥१६९॥

ऋत्विग् यज्ञे कर्मकर्ता यजमानार्थमेव हि ।
'यां वै काञ्चन यज्ञे'ति मन्त्रं पठति च श्रुतिः[७०] ॥१७०॥

य एतद् विज्ञ उद्गाता कर्तुर्भावं प्रबुध्यते[७१] ।
कामनां प्राप्तये वक्ति उद्गायामो वयं त्विति ॥१७१॥

ऋत्विक्कर्तृकविज्ञानद्वारोद्भूतं च यत् फलम् ।
यजमानार्थमेवैतत् श्रुतिर्वक्तीह निश्छलम् ॥१७२॥

यज्ञकर्ता ऋत्विगस्ति यजमानः फलोपभुक् ।
श्रुतिरेतत् कथयति सिद्धान्तः सैष निर्मलः ॥१७३॥

यजको यज्ञकर्ताऽस्ति वक्ति सूत्रत्रयं त्विह[७२] ।
उपासको यज्ञफलस्वामी भवति निश्चयम् ॥१७४॥

## १४. सहकार्यन्तरविध्यधिकरणम् (ब्रह्मसूत्रम् ३।४।१४।४७–४९)

शिष्यः –
आत्मनो मौनविषये किमुल्लिखति वेदवाक्[७३] ।
विजिज्ञासा ममास्तीह किं मौनविधिरस्ति नो ॥१७५॥

---

७०. यां वै काञ्चन यज्ञे ऋत्विज आशिषमाशासत इति
यजमानायैव तामाशासत इति होवाचेति । – छान्दोग्योपनिषद् १।७।८
७१. तस्मादु हैवंविदुद्गाता ब्रूयात्कं ते काममागायति । – छान्दोग्योपनिषद् १।७।८
७२. स्वामिनः फलश्रुतेरित्यात्रेयः । – ब्रह्मसूत्रम् ३।४।१३।४४–४६
७३. तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन निष्ठासेद् बाल्यञ्च पाण्डित्यञ्च निर्विद्याथ मुनिरमौनञ्च मौनञ्च निर्विद्याथ ब्राह्मणः ।
– बृहदारण्यकोपनिषद् ३।५।१

वादिनो ब्रुवतेऽत्रापि मौनविधिर्न विद्यते ।
पाण्डित्ये मौनमायाति स्वत एव वदन्ति ते ।।१७६।।

ब्राह्मणेन सहाऽस्मिन् वै मुनिश्चैव प्रशंसति ।
विधानं न भवत्यत्र वदन्ति पूर्वपक्षिणः ।।१७७।।

पाण्डित्यं मौनमेतच्च द्वयं हि ज्ञानवाचकम् ।
विधानमत्र नास्तीति वादिनां मतमागतम् ।।१७८।।

इत्थमत्र गुरो ! वक्तु नास्ति मौनविधिः किमु ?
यद्यस्ति श्रोतुमिच्छामि कः स्यान्मौनविधिः पुनः ? ।।१७९।।

गुरुः –
'सहकार्यान्तरविधि'र्भाष्ये योऽस्ति प्रशंसितः ।
तमेतं विद्धि हे सौम्य ! सूक्ष्मं कृत्वाऽत्मचिन्तनम् ।।१८०।।

बाल्यपाण्डित्यसदृशं विद्यायाः सहकर्म च ।
ज्ञेयं मौनविधिस्तुल्यं शास्त्रसङ्गतमेव हि ।।१८१।।

पाण्डित्यानन्तरं दृष्टं मुनेरस्ति प्रयोजनम् ।
सदैव ज्ञाननिष्ठाया अपूर्वः शंसितः विधिः ।।१८२।।

'तिष्ठासेदिति' यः शब्दो यन्मन्त्रै चानुवर्तितः[७४] ।
विध्यर्थकः स एवाऽस्ति वेदः सूचयतीत्यपि ।।१८३।।

निरन्तरमविच्छिन्नं सज्ज्ञानमनुवर्तते ।
सशक्तं चेत्तु संस्कारभेदं त्रोटयितुं क्षमम् ।।१८४।।

---

७४. तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् ।
– बृहदारण्यकोपनिषद् ३।५।१

यद् 'दर्शपूर्णमासाभ्यां' सहकार्य विधेरिह[७५] ।
विद्यावाक्ये दृश्यते यत् तन्मौनविधिरुच्यते ॥१८५॥

श्रेष्ठाश्रमेल ब्धज्ञानं प्रधानं श्रुतिबोधितम् ।
पाण्डित्यापेक्षया चैतत् त्रितयो विधिरुच्यते ॥१८६॥

बाल्यपाण्डित्यत्रितयं मौनं ज्ञानविशेषितम् ।
निदिध्यासनमौनं तु विधेयो निश्चितो भवेत् ॥१८७॥

अत्राधिकरणे सूत्रत्रितयं सर्वसम्मतम्[७६] ।
निदिध्यासनरूपं हि विधेयं मौनमित्यपि ॥१८८॥

## १५. अनाविष्काराधिकरणम् (ब्रह्मसूत्रम् ३।४।१५।५०)

शिष्यः –
'तस्मादिति' श्रुतौ 'बाल्यं' शब्दः किमर्थमागतः ।
वयो वा गृह्यते तेन बुद्धेः शुद्धिर्न वा किमु ? ॥१८९॥

बाल्यभावो विद्यतेऽत्र यद्वा तत्कर्म विद्यते ?
तद्धितप्रत्ययान्तो वा वयोऽनेन न गृह्यते ॥१९०॥

शौचं पुरीषमूत्राणां नियमो यत्र नास्त्यपि ।
एतादृग् बालचरितमेकपक्षेऽव्यवस्थितम् ॥१९१॥

पक्षान्तरे भावशुद्धं दम्भदर्पादिवर्जितम् ।
मनो विशुद्धं चापल्यं मात्सर्यादिविवर्जितम् ॥१९२॥

---

७५. **दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत । – श्रुतिः**
७६. **सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ।**
**– ब्रह्मसूत्रम् ३।४।१४।४७–४९**

‘बाल्येने’ति श्रुतौ व्यक्तं बाल्यं किमनयो रिह[७७] ।
सन्देहः समनुत्पन्नो बाल्यशब्दः किमर्थकः ? ।।१९३।।

वादिनः कथयन्त्यत्र स्वेच्छया भक्ष्यभोजनम् ।
मलमूत्रविसर्गादि बाल्यमेतत् प्रकीर्तितम् ।।१९४।।

परन्तु पतितत्वादिदोषप्राप्ति र्यतो भवेत् ।
तत् सर्वं कामचारादि बाल्यभावे न गृह्यते ।।१९५।।

इत्थमत्र गुरो वक्तु युक्तं बाल्यं किमस्त्यतः ।
वादिभिः स्वीकृतं किंस्यादुपयुक्तं किमस्त्यहो ! ।।१९६।।

गुरुः –
बाल्यशब्देन न वयो बुद्धिशुद्धिः प्रगृह्यते ।
श्रवणादिषु मौनं च विधेयं भवतीह तु ।।१९७।।

मनसो हि विशुद्ध्यर्थं भावशुद्धिरपेक्षिता ।
अत्याज्य द्वेषरागादीन् मनः शुद्धिर्भवेन्न हि ।।१९८।।

कामचारामवस्थां तु बाल्येन नैव गृह्यते ।
अयुक्तं च विरोधि च तदवस्थाद्वयं मिथः ।।१९९।।

‘अनाविष्कुर्व’शब्देन ख्यातिं स्वामपि गोप्यते ।
बालकस्यान्तरो भावो बाल्यशब्देन गृह्यते ।।२००।।

---

**७७. बाल्येन तिष्ठासेत् । – बृहदारण्यकोपनिषद् ३।५।१**

अन्येन सह यो विद्वान् स्वं ज्ञानं न प्रकाशते ।
तस्मिन् बाल्यं वर्तते हि स्मृतिस्तं वै प्रशंसति[७८] ॥२०१॥

बुद्धेरन्तः स्थिता शुद्धिर्बाल्यशब्देन गृह्यते ।
कामचारामवस्थां तु श्रुतिस्त्यजति तत्त्वतः ॥२०२॥

अत्राधिकरणे सूत्रमेकं प्रवदतीह तु[७९] ।
बाल्यं नाम बुद्धिशुद्धिर्नैवाऽवस्था प्रगृह्यते ॥२०३॥

### १६. ऐहिकाधिकरणम् (ब्रह्मसूत्रम् ३।४।१६।५१)

शिष्यः –
'सर्वापेक्षा'दिसूत्रेण शुभारम्भो विधीयते[८०] ।
विद्याप्रमाणैर्नैकानि साधनानि विचार्यते ॥२०४॥

श्रवणादिरनुष्ठानादिह जन्मनि वा पुनः ।
विद्यासिद्धिर्भवेद् यद्वा गुरो ! जन्मान्तरे पुनः ॥२०५॥

वादिनः प्रवदन्त्यत्र जन्मन्येवेह सिद्ध्यति ।
विद्यासिद्धिं किमु गुरो ! संशयोऽत्र समागतः ॥२०६॥

इहैव जन्मनि प्राप्ता भवत्विति विचारतः ।
इच्छया च प्रक्रियते श्रवणादिकसाधनम् ॥२०७॥

---

७८. यं न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम् ।
न सुवृत्तं न दुर्वृत्तं वेद कश्चित् स ब्राह्मणः ॥
गूढधर्माश्रितो विद्वानज्ञानचरितं चरेत् ।
अन्धवज्जडवच्चापि मूकवच्च महीं चरेत् ॥
अव्यक्तलिङ्गोऽव्यक्ताचारः, इति चैवमादि ॥
७९. अनाविष्कुर्वन्नन्वयात् । – ब्रह्मसूत्रम् ३।४।१५।५०
८०. सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् । – ब्रह्मसूत्रम् ३।४।६।२६

यज्ञयागादिकर्माणि क्रियनते च विविदिषाः ।
भवतु ज्ञानसंप्राप्तिं जन्मन्येवेह वाञ्छया ॥२०८॥

अतो विद्याजन्यफलमैहिकं भवतीत्यतः ।
वादिनां मतमायातं सन्देहो मां समागतः ॥२०९॥

आज्ञापयत्वत्र गुरो ! ज्ञानप्राप्तिः कदा भवेत् ?
इहैव जन्मनि भवेदन्यस्मिन् जन्मनि किमु ? ॥२१०॥

गुरुः –
इहैव जन्मनि भवेन्नास्ति चेत् प्रतिबन्धकम् ।
विद्योत्पत्तिरन्यथा तु सम्भवेदन्यजन्मनि ॥२११॥

श्रवणादिकयत्नेन ज्ञानप्राप्तिर्निरन्तरम् ।
प्रतिबन्धकनाशश्चेत् सम्भवेदिह जन्मनि ॥२१२॥

दुर्बोध्यश्चापि दुर्ज्ञेय आत्मा तु श्रवणादिभिः ।
आत्मसान्न भवेत् सद्यः श्रुतिर्वदति सन्ततम्[८१] ॥२१३॥

गर्भस्थितो वामदेव एकीभावेन चेतसा ।
ब्रह्मभावस्थित इति श्रुतिः संसूचयत्यपि[८२] ॥२१४॥

---

८१. श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः ।
आश्चर्योऽस्य वक्ता कुशलोऽस्य लब्धाऽऽश्चर्यो ज्ञाता कुशलानुशिष्टः ॥
– कठोपनिषद् २।७

८२. तदुक्तमृषिणा गर्भे नु सन्... गर्भ एवैतच्छयानो वामदेव एवमुवाच ।
– ऐतरेयोपनिषद् २।१।५

पूर्वजन्मार्जितेनापि शुभसञ्चितकर्मणा ।
ज्ञानमाविष्करोतीह दृश्यते शास्त्रनिश्चयम्[८३] ॥२१५॥

गर्भस्थितेरवस्थायां साधनानि न सन्त्यपि ।
विद्योत्पत्तिर्जायते चेत् पूर्वसञ्चितकर्मणा ॥२१६॥

शास्त्रोक्तेन दिशा विद्योत्पत्तिर्भवति चेत् तदा ।
प्रतिबन्धो नश्यते हि ज्ञानी मुक्तो भवेत् ततः ॥२१७॥

इहैव जन्मनि यद्वा तस्याऽऽगामिनि जन्मनि ।
पापं चेन्नश्यते पश्चाद् याति मुक्तः सुधीरितः ॥२१८॥

'श्रवणायापि शास्त्रेण वामदेवप्रमाणतः ।
दृष्टान्ताद् ज्ञायते चैतन्मुक्तिमार्गं चलत्यपि ॥२१९॥

अत्राधिकरणे सूत्रमेकं वक्ति च शास्त्रतः[८४] ।
इह जन्मनि वाऽन्यस्मिन् तत्त्वतो ज्ञानमाप्यते ॥२२०॥

---

८३. क. तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च । – बृहदारण्यकोपनिषद् ४।४।२
ख. अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ।
इत्यर्जुनेन पृष्ठो भगवान् वासुदेवः । – गीता ६।३७
ग. नहि कल्याणकृत्कश्चिद् दुर्गतिं तात गच्छति । – गीता ६।४०
घ. तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।–गीता ६।४३
ङ. अनेक जन्मसंसिद्धस्ततो याति पराङ्गतिम् । – गीता ६।४५
८४. ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् । – ब्रह्मसूत्रम् ३।४।१६।५१

## १७. मुक्तिफलाधिकरणम् (ब्रह्मसूत्रम् ३।४।१७।५२)

शिष्यः –

विद्यासाधनन्यूनानि यद्वा तान्यधिकानि चेत् ।
इहैव वा परत्रापि न्यूनाधिकफलं भवेत्[८५] ॥२२१॥

इदृङ् नियम उत्कर्षे अपकर्षेऽपि किं भवेत् ?
मुक्तौ च विद्यते किं वा न वा संशय आगतः ? ॥२२२॥

मुक्तिः सातिशया यद्वा न किं सातिशयाऽस्ति वा ।
सन्देहः पुनरायातः किमस्त्यत्रास्ति वा न किम् ? ॥२२३॥

वादिनः कथयन्त्यत्र स्वर्गो वा ब्रह्मलोकवत् ।
मनुष्यभेदान्मोक्षः स्यात् सैव सातिशयो भवेत् ॥२२४॥

ब्रह्मन्नाज्ञापयत्वत्र मुक्तिः सातिशयाऽस्ति का ?
यद्वा निरतिशाय्यस्ति ? का सैकाऽस्ति द्वयोरिह ॥२२५॥

गुरुः –

विशेषनियमोऽन्यत्र न हि मुक्तिफले भवेत् ।
आशङ्का नैव कार्याऽत्र वेदान्ते मुक्तिरेकला ॥२२६॥

ब्रह्मैव मुक्त्यवस्थाऽस्ति भिन्नाकारा न मुक्तिषु ।
एकं स्वरूपं ब्रह्माऽस्ति श्रुतिशास्त्रेषु सर्वतः ॥२२७॥

---

८५. कर्माधिक्यात् फलाधिक्यमिति नियमः ।

अस्थूलं[86]यत्र नान्यत्[87]स एष नेति[88]स वा[89]इदम्[90] ।
'यत्र त्वस्य सर्वं[91]मन्त्रा एकं ब्रह्म वदन्त्यतः[92] ॥२२८॥

इत्यादिश्रुतिभिः सर्वैर्ब्रह्मरूपस्य वर्णनम् ।
संक्षेपेण कृतं चैतन्मात्रं ज्ञानार्थसूचनम् ॥२२९॥

कदाऽप्यतिशयाधानं मुक्तौ विद्या करोति न ।
मुक्तौ विद्याफलाऽऽधानं कदापि न भवत्यहो ! ॥२३०॥

नित्यसिद्धः स्वभावोऽस्ति मुक्तिः साध्याऽस्ति न क्वचित् ।
ब्रह्मैव विद्यया प्राप्यं सम्पूर्णश्रुतिशंसितम् ॥२३१॥

नैव तादृगतिशयं विद्यया लभ्यते क्वचित् ।
ब्रह्मतुल्यं न चोत्कर्षं न निकृष्टं क्वचित् किमु ? ॥२३२॥

अतो निकृष्टे न भवेद् विद्यात्वं नैव कस्यचित् ।
उत्कृष्टपात्रे विद्यात्वमायाति हि यदा कदा ॥२३३॥

क्वचिदतिशयप्राप्तिर्विद्यायामपि दृश्यते ।
मुक्तौ न सम्भवेत् तादृक् कदाप्यतिशयस्थितिः ॥२३४॥

---

८६. अस्थूलमनण्वह्रस्वमदीर्घम् । – बृहदारण्यकोपनिषद् ३।८।८
८७. यत्र नान्यत्पश्यति नान्यच्छृणोति । – छान्दोग्योपनिषद् ७।२४।१
८८. स एष नेति नेत्यात्मा । – बृहदारण्यकोपनिषद् ३।९।२६
८९. स वा एष महानज आत्माजरोऽमृतोऽमरोऽभयो ब्रह्म ।
– बृहदारण्यकोपनिषद् ४।४।२५
९०. इदं सर्वं यदयमात्मा । – बृहदारण्यकोपनिषद् २।४।६
९१. यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् । – बृहदारण्यकोपनिषद् ४।५।१५
९२. ब्रह्मैवेदममृतं पुरेस्तात् । – मुण्डकोपनिषद् २।२।११

ब्रह्मज्ञानं यः कुरुते ब्रह्मैव भवति स्वयम्[९३] ।
पूर्वं तु ब्रह्मैवाऽऽसीत् स ब्रह्मैव भवति पुनः ॥२३५॥

स्वर्गादितुल्यमेतन्न नैवाऽऽगन्तुकमस्ति च ।
मुक्तिर्ज्ञानस्वरूपाऽस्ति नैव सातिशया क्वचित् ॥२३६॥

ब्रह्मप्राप्तिर्मुक्तिरेव ब्रह्म सातिशयं न हि ।
ब्रह्मणो मानवस्यापि मुक्तिरेकात्मिका भवेत्[९४] ॥२३७॥

अत्राधिकरणे सूत्रमेकं वक्ति च तत्त्वतः[९५] ।
ब्रह्मविद् ब्रह्म भवति श्रुतिर्वदति तत्त्वतः[९६] ॥२३८॥

ब्रह्मसूत्रे कारिकायां तृतीयाध्यायवर्णितः ।
पादश्चतुर्थोऽप्यत्रैव समनूद्य समापितः ॥२३९॥

॥ इति ब्रह्मसूत्रकारिकायां तृतीयाध्यायस्य चतुर्थः पादः सम्पूर्णः ॥

---

९३. न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति । – बृहदारण्यकोपनिषद् ४।४।६
९४. ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥ – कूर्मपुराणम् १।१२।२६९
९५. एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः । –ब्रह्मसूत्रम् ३।४।१७।५२
९६. ब्रह्म वेद ब्रह्मैव भवति । – मुण्डकोपनिषद् ३।२।९

ॐ तत्सद्ब्रह्मणे नमः

अथ ब्रह्मसूत्रकारिकायां

# चतुर्थोऽध्यायः प्रथमः पादः

चतुर्थे जीवतो मुक्तिरुत्क्रान्तेर्गतिरुत्तरा ।
ब्रह्मप्राप्तिब्रह्मलोकाविति पादार्थसङ्ग्रहः ॥

(पादेऽस्मिन्नावृत्तित इतरक्षपणसहितानि चतुर्दशाऽधिकरणानि सन्ति । एतेष्वधिकरणेषु जीवन्मुक्तिसम्बन्धि निरूपणं कृतमस्ति ।)

## १. आवृत्त्यधिकरणम् (ब्रह्मसूत्रम् ४।१।१।१ –२०)

शिष्यः –

आगतं त्रितयेऽध्याये विद्यासाधनमेव हि ।
ब्रूते चतुर्थाध्यायस्तु विद्यायः फलमेव हि ॥१॥

संयोज्याऽन्यैश्च विषयैर्भिन्नमार्गव्यवस्थितिः ।
भवेदन्येषु पादेषु विचार्य क्रमशोऽपि च ॥२॥

कानिचित् साधनान्यत्र विचार्यन्ते यथाक्रमम् ।
'आत्मा'[१] 'तमेव'[२] 'सोऽन्वेष्ट'[३] मन्त्रा यत् कथयन्त्यपि ॥३॥

श्रोतव्या किमु द्रष्टव्या ज्ञातव्या श्रुतिरित्यतः ।
सकृदेव किमु श्रव्या ? यद्वा किमसकृत् पुनः ? ॥४॥

---

१. आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ।
– बृहदारण्यकोपनिषद् ४।५।६

२. तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः । – बृहदारण्यकोपनिषद् ४।४।२१

३. सोऽन्वेष्टव्यः स विजिज्ञासितव्यः । – छान्दोग्योपनिषद् ८।७।१

सन्देहे वादिनोऽप्यत्र सकृत् प्रत्ययमित्यपि ।
प्रयाजादिसमं शास्त्रं कृतार्थास्ते वदन्त्यपि ॥५॥

नावृत्तिरुपदेशस्य मन्त्रे श्रोतव्य आदिके ।
सकृच्छ्रवणमात्रेण [४]शास्त्रं च मनुते सुधी ॥६॥

आवृत्तिर्न श्रुता चापि ये वेदं समुपासते ।
शास्त्रं विरुध्यतेऽत्रैव यद्यावृत्तिः प्रजायते ॥७॥

सकृत् प्रत्ययो भवति वादिनां मतमागतम् ।
आज्ञापयत्वत्र गुरो ! सकृत् किमसकृत् पुनः ? ॥८॥

गुरुः –
आवृत्तिः सर्वथा कार्या प्रत्ययस्याऽपि वस्तुनः ।
आत्मा श्रोतव्य इत्यादिः श्रुतिर्निर्दिशति स्वयम् ॥९॥

आवृत्तिः सर्वथा कार्या साक्षात्कारो यदा न चेत्[५] ।
यथाऽवघातो धान्यानां तण्डुलं प्राप्यते न चेत् ॥१०॥

[६]उपास्[७]विद्धातवोरर्थो वेदान्ते साम्यमाप्यते ।
विदुपक्रमते पूर्वमुपसंहरति ह्युपास् ॥११॥

---

४. सकृत्कृते कृतः शास्त्रार्थः । सकृत्प्रत्ययः स्यात् प्रयाजादिवत्, तावता शास्त्रस्य कृतार्थत्वात् । – शाङ्करभाष्यम्, ब्रह्मसूत्रम् ४।१।१।१
५. दर्शनपर्यवसानानि हि श्रवणादीन्यावर्त्यमानानि दृष्टार्थानि भवन्ति, यथाऽवघातादीनि तण्डुलादिनिष्पत्तिपर्यवसानानि, तद्वत् ।
– शाङ्करभाष्यम्, ब्रह्मसूत्रम् ४।१।१।१
६. अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से । – छान्दोग्योपनिषद् ४।२।२
७. यस्तद्वेद यत्स वेद स मयैतदुक्तम् । – छान्दोग्योपनिषद् ४।१।४

उपास् धातोश्च कुत्रापि[8] भवत्युपक्रमोऽपि हि ।
भवत्येवोपसंहारो विद्धातोरपि कुत्रचिद् ॥१२॥

सकृद्वारं प्रपठित आवृत्तिर्भवतीह वै ।
असकृद्वारपाठे तु सूत्रमेवं दिशत्यपि ॥१३॥

अहङ्ग्रहेऽपि चोपास्तौ श्रवणादिककर्मणि ।
आवृत्तिस्तु भवेदेव श्रुतिरुद्गिरति स्वयम्[9] ॥१४॥

अतएव हि वादिनां पूर्वोक्ते ह्युपदेशके ।
आवृत्तिस्तु भवेत् सिद्धा वेदेऽपि प्रतिपद्यते ॥१५॥

नावश्यकं समर्थानामावृत्तिर्येऽसमर्थकाः ।
तेषां समुपदेशोऽस्ति वेदेऽपि नवधा पुनः[10] ॥१६॥

आत्मा निरंशोऽस्ति ज्ञातुं कठिनं भवतीत्यतः ।
अत एवाऽसकृद्वारमुपदेशः प्रदर्शितः ॥१७॥

य आत्मन्येव सन्तुष्टो रमतेऽपि य आत्मनि[11] ।
आत्मज्ञस्य कृते तादृगुपदेशो निरर्थकः ॥१८॥

---

८. मनो ब्रह्मेत्युपासीत । – छान्दोग्योपनिषद् ३।१८।१

९. क. भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ।
– छान्दोग्योपनिषद् ३।१८।३

ख. आदित्य उद्गीथः । रश्मींस्त्वं पर्यावर्तयात् । – छान्दोग्योपनिषद् १।५।१,२

१०. तत्त्वमसि श्वेतकेतो, भूय एव मा भगवान् विज्ञापयतु । – छान्दोग्योपनिषद् ६।८।७

११. क. यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं नविद्यते ॥– श्रीमद्भगवद्गीता ३।१७

ख. किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोकः ।
– बृहदारण्यकोपनिषद् ४।४।२२

यत्र दृष्टं फलं चास्ति ह्यदृष्टपरिकल्पनम् ।
नैव कार्यं कदापीह यदि स्यादात्मवञ्चनम् ॥१९॥

शिष्यो यः प्रतिभाहीनो यद्वा मन्दमति र्भवेत्[१२] ।
तदर्थमुपदेशोऽस्ति कर्तव्याऽऽवृत्तिरप्यथ ॥२०॥

असकृन्नैव कर्तव्य उपदेशः किमर्थकः ।
वादिनां मतमायातं तद् भवत्यत्र खण्डनम् ॥२१॥

एतस्मात् कारणात् साक्षाद् ब्रह्मसम्बन्धिबोधने ।
आवृत्तिरसकृत् कार्या सिद्धा चैषा कुराऽन्तिमे ॥२२॥

अत्राधिकरणे सूत्रद्वयं तदनुसारतः[१३] ।
आवृत्तिरसकृत् कार्या सिद्धा श्रुत्यनुसारतः ॥२३॥

## २. आत्मतत्त्वोपासनाधिकरणम् (ब्रह्मसूत्रम् ४।१।२।३)

शिष्यः –
ब्रह्मज्ञानं कार्यमिति श्रुतिरुद्गिरति स्वयम् ।
आत्मत्वेन पृथक्त्वेन कार्यमेतद्द्वयोः किमु ? ॥२४॥

सन्देहोऽत्र समायातो वादिनः कथयन्त्यपि ।
ब्रह्मज्ञानं पृथक्त्वेन कार्यं स्यादुपयुक्तकम् ॥२५॥

---

१२. यस्तु स्वयमेव मन्दमतिरप्रतिभानात् तं वाक्यार्थं जिहासेत् तस्यैतस्मिन्नेव वाक्यार्थे स्थिरीकार आवृत्त्यादिवाचोवाचोयुक्तयाऽभ्युपेयते, तस्मात् परब्रह्मविषयेऽपि प्रत्यये तदुपायोपदेशेष्वावृत्तिसिद्धः । – शाङ्करभाष्यम्, ब्रह्मसूत्रम् ४।१।१।२
१३. आवृत्तिरसकृदुपदेशात् । – ब्रह्मसूत्रम् ४।१।१।१–२

अहं ब्रह्माऽस्मीति बोधेऽनुपयुक्तं च सम्भवेत् ।
पाप्मादिदोषयुक्तात्मा कथं ब्रह्म भविष्यति ॥२६॥

दर्शनं प्रभवेद् विष्णोः प्रतिमादौ यथा तथा ।
अहं ब्रह्मास्मीति बोधे भावना तादृशी स्थिरा ॥२७॥

अतो जीवात्मनश्चैक्यं सम्भवं नैव दृश्यते ।
एवं वदन्तो दृश्यन्ते पूर्वपक्षा न सम्भवम् ॥२८॥

आज्ञापयत्वत्र गुरो किमैक्यं नास्ति सम्भवम् ?
ब्रह्मजीवैकत्वमपि श्रुतिः किं भणतीत्यहो ? ॥२९॥

गुरुः –
अहं ब्रह्माऽस्मीति भावः कर्तव्यः शास्त्रसम्मतम्[१४] ।
अहं त्वमस्मि, त्वमहमसीति श्रुतिसम्मतम्[१५] ॥३०॥

कुर्वते वेदवाक्यानि तदाऽऽत्मैकत्ववर्णनम् ।
[१६]आत्मा सर्वान्तरोऽस्तीति त्वं स्याः सच्चित् सनातनः[१७] ॥३१॥

विष्णुप्रतीकन्यायस्तु प्रसङ्गो गौण एव सः ।
कवलोपासनार्थं हि तन्मनो ब्रह्मचिन्तनम्[१८] ॥३२॥

'अहं त्वमस्मि, त्वमहमसि' दृष्टिरभेदिका ।१९
भिन्नोऽसि त्वमहं भिन्नोऽस्मीत्येषा भेददर्शिनी ॥३३॥

---

१४. अहं ब्रह्मास्मि । – बृहदारण्यकोपनिषद् १।४।११
१५. त्वं वा अहमस्मि भगवो देवतेऽहं वै त्वमसि भगवो देवते, इति । – जाबालोपनिषद्
१६. एष त आत्मा सर्वान्तरः । – बृहदारण्यकोपनिषद् ३।४।१
१७. तत्सत्यं स आत्मा तत्त्वमसि । – छान्दोग्योपनिषद् ६।८।७
१८. मनो ब्रह्म, आदित्यो ब्रह्म । – छान्दोग्योपनिषद् ३।१८।१

इत्थं कोऽपि ब्रह्मवित् किं भेददृष्टिं करोति ? न ।
अक्षुण्णा क्रियते तेन सैषा मृतिपरम्परा[२०] ॥३४॥

सर्वाः प्रकृतयो भिन्ना मनुते यः सदात्मनः[२१] ।
स श्रेयोमार्गतो भ्रष्टः सर्वदैवाऽभिजायते ॥३५॥

प्रबोधपूर्वो जीवात्मा प्रपञ्चं द्वैतमीहते ।
सर्वत्राऽऽत्माऽस्ति यो वेत्ति तदा कः कं प्रपश्यति ?[२२] ॥३६॥

दृश्यः प्रपञ्चः संसारस्तं सर्वं यदि बाधते ।
श्रुतेरभावो भवति वक्षिचेत् तद् विशिष्यते ॥३७॥

सुषुप्तौ तु पिता नास्ति, नास्ति मातापि वक्षि चेत्[२३] ?
श्रुतिरन्त्ये वदत्येवं वेदाऽवेदौ प्रशंसति ॥३८॥

अज्ञानाद् भवति ह्येतद् वक्षि चेत् तच्च युक्तिकम् ।
तवाऽज्ञानवशादेव तद् विद्धि ह्युपयुक्तकम् ॥३९॥

अहं ब्रह्मास्मि भावोऽयं कृतेऽज्ञानं विनश्यति[२४] ।
ब्रह्मैवाऽऽसीत् पूर्वमपि ज्ञानी ब्रह्म भविष्यति ॥४०॥

---

१९. अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद ।
— बृहदारण्यकोपनिषद् १।४।१०

२०. मनसैवानुद्रष्टव्यं नेह नानास्ति किञ्चन ।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥ — बृहदारण्यकोपनिषद् ४।४।१९

२१. सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद । — बृहदारण्यकोपनिषद् ४।५।७

२२. यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् । — बृहदारण्यकोपनिषद् २।४।१४

२३. अत्र पिताऽपिता भवति मातामाता लोका अलोका देवा अदेवा वेदा अवेदाः ।
— बृहदारण्यकोपनिषद् ४।३।२२

२४. अहं ब्रह्मास्मि । — बृहदारण्यकोपनिषद् १।४।१०

अत आत्मत्वरूपेण ब्रह्म ग्राह्यं भवेदिति[२५] ।
अन्ते श्रुतिर्निश्चयति सर्वं ब्रह्मैव भासते ॥४१॥

अत्राधिकरणे सूत्रमेकमन्त्ये वदत्यपि[२६] ।
आत्मा ब्रह्मैवाऽस्ति सदा वाक्यं 'तत्त्वमसी'त्यापि ॥४२॥

### ३. प्रतीकाधिकरणम् (ब्रह्मसूत्रम् ४।१।३।४)

शिष्यः –

'मनो ब्रह्म'[२७]तथाऽऽदिव्यत्यो ब्रह्मेति [२८]व्याहरन्नपि ।
प्रतीकोपासना कार्या श्रुतिरुद्गिरति स्वयम् ॥४३॥

सन्देहोऽत्र समायातस्तेषु गत्वा शनैः शनैः ।
गृहीते ह्यात्मनो ज्ञानं भवति नेह वा किमु ? ॥४४॥

वादिनो ब्रुवते चात्र ह्यात्मा ग्राह्योऽस्ति सर्वथा ।
आत्मत्वेन प्रसिद्धोऽस्ति श्रुतौ ब्रह्म यतो हि तत् ॥४५॥

प्रतीकमपि जानीयात् विकारं ब्रह्मणो हि तत् ।
ब्रह्मत्वं तत्र भवति ह्यात्मबुद्धिः कृते सति ॥४६॥

ब्रह्मन्नत्राऽऽज्ञापयतु युक्तं किं वादिनां मतम् ।
नो चेत् तदापि वदतु सिद्धान्तः कोऽस्ति युक्तिकः ॥४७॥

---

२५. न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते ब्रह्म सन् ब्रह्माप्येति ।
– नृसिंहोत्तरतापनीयोपनिषद् ५

२६. आत्मेति तूपगच्छन्ति ग्राहयन्ति च । – ब्रह्मसूत्रम् ४।१।३।३

२७. मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो ब्रह्मेति ।
– छान्दोग्योपनिषद् ३।१८।१

२८. आदित्यो ब्रह्मेत्यादेशः । स यो नाम ब्रह्मेत्युपास्ते ।
– छान्दोग्योपनिषद् ३।१९।१, ७।१।५

गुरुः –

आत्मबुद्धिः प्रतीके तु नैव कार्या कथञ्चन ।
यतः सर्वप्रतीकेषु ह्यात्मबुद्धिरसम्भवा ।।४८।।

ब्रह्मणोऽस्ति विकारं तत् प्रतीकं सर्वथैव हि ।
यदा प्रतीकं ब्रह्म स्यादात्मा ब्रह्म स्वयं कुतः ? ।।४९।।

अयुक्तं तद् भवेत् सौम्य ! सर्वांशे वादिनां मतम् ।
ब्रह्माऽभावप्रसङ्गे हि प्रतीकं दिशति गुरुः ।।५०।।

यदि नाशो विकाराणां सर्व नामादि ब्रह्म हि ।
नामादीनां विनाशश्चेत् प्रतीकत्वं कुतो भवेत् ? ।।५१।।

अतो हेतोरात्मदृष्टिः प्रतीके न हि दृश्यते ।
ब्रह्मैवाऽऽत्मप्रबोधे तु ह्यात्मदृष्टिः क्व कल्प्यते ? ।।५२।।

नो चेत् कर्तृत्वभोक्तृत्वे व्यक्तुं च कठिनायते ।
गते कर्तृत्वभोक्तृत्वे ब्रह्मैवाऽऽत्माऽस्ति सम्भवः ।।५३।।

मायाविकारो नष्टश्चेत् ब्रह्मैवाऽऽत्माऽनुभूयते ।
उपदेशो भवत्येव ह्युपास्तिर्नैव शंसिता ।।५४।।

अतः प्रतीकैः सहैव साम्यं भवति चेत् तदा ।
प्रतीके तु भवेन्नैव ह्यात्मग्रहणसम्भवः ।।५५।।

भिन्नं रुचकमस्त्येव स्वस्तिकं भिन्नमस्ति च ।
सुवर्णात्मकरूपेण त्वेकं रुचकस्वस्तिके ।।५६।।

तादृगेव प्रतीकं चेत् तथैवो पासकद्वयम् ।
एकीभूते ब्रह्म भाति, प्रतीकं तु विनश्यति ॥५७॥

अतो हेतो प्रतीके तु ह्यात्मदृष्टिः कथं भवेत् ? ।
तस्मादद्वैतसिद्धान्त अन्तिमे स्थापितो भवेत् ॥५८॥

अत्राधिकरणे सूत्रमेकं वक्ति तदन्ततः[२९] ।
प्रतीके ब्रह्मदृष्टिर्न भवत्येव हि तत्त्वतः ॥५९॥

### ४. ब्रह्मदृष्ट्यधिकरणम् (ब्रह्मसूत्रम् ४।१।४।५)

शिष्यः –
आदित्यादेस्तु या दृष्टिस्तदध्यासोऽस्ति ब्रह्मणि ।
या ब्रह्मदृष्टिर्भवति सोध्यासः सूर्यवर्चसि ॥६०॥

सन्देहोऽत्र समायातः क्व का दृष्टिः कथं भवेत् ? ।
अध्यासः करणीयो वा न कर्तव्यः कथं भवेत् ? ॥६१॥

वादिनः कथयन्त्यत्र शास्त्रेषु नियमो न हि ।
आदित्यादेर्दृष्टिरपि कर्तव्या ब्रह्मणि सदा ॥६२॥

आदित्य दृष्टया भवति ब्रह्म सच्चिदुपासितम् ।
उपासना शास्त्रयुक्ता भवति सप्रयोजना ॥६३॥

वादिनामित्थमायातं द्वैधरूपं मतं किमु ?
किमद्वैतमतं ब्रह्मन् ! श्रोतुमिच्छाऽस्ति तत्त्वतः ॥६४॥

---

२९. न प्रतीके न हि सः । –ब्रह्मसूत्रम् ४।१।३।४

गुरुः –

आदित्ये ब्रह्मदृष्टिः स्यादुत्कर्षाधायको भवेत् ।
यद्युत्कर्षा भवेद् दृष्टिस्तत्राऽध्यासो भवत्यपि ॥६५॥

सामान्यनियमश्चैष लोकेऽपीह विलोक्यते ।
दृष्ट्वाऽपि सैनिकं लोको मनुते पृतनापतिम् ॥६६॥

शुक्तौ रजतवद् दृष्टमादित्ये ब्रह्मरूपकम् ।
वाक्यशेषाद् द्वितीयाऽस्ति व्याप्तादित्यः प्रबुध्यते ॥६७॥

उपासनार्थमध्यासो 'यो वाचम्'[३०] 'स य'[३१] 'य'[३२] इति ।
ब्रह्मेति मत्वाऽऽदित्यं हि कार्या चोपासना त्वया ॥६८॥

नेयं ब्रह्मोपासनाऽस्ति ह्यादित्योपासनाऽस्त्यहो !
ब्रह्मैव फलदाताऽस्ति सर्वाध्यक्षस्तु ब्रह्म हि ॥६९॥

तृतीयाध्यायसूत्रेऽपि कृतमस्य तु वर्णनम्[३३] ।
तस्यैव सूचनं चात्र पुनरुक्तिः किमर्थकम् ॥७०॥

अत्रापि ब्रह्मणः कार्यमुपास्यत्वं प्रशंसितम् ।
प्रतिमादौ यथा दृष्टं शिवविष्ण्वाधिरोपणम् ॥७१॥

प्रतिमादौ यथाऽऽरोपो शिवविष्ण्वादयोऽभवन् ।
अध्यारोपः प्रतीकेऽपि ब्रह्मदृष्टिस्तथा कृता ॥७२॥

---

३०. यो वाचं ब्रह्मेत्युपास्ते । –छान्दोग्योपनिषद् ७।२।२
३१. स य एतमेव विद्वानादित्यं ब्रह्मेत्युपास्ते । – छान्दोग्योपनिषद् ३।१९।४
३२. यः सङ्कल्पं ब्रह्मेत्युपास्ते । – छान्दोग्योपनिषद् ७।४।३
३३. फलमत उपपत्तेः । – ब्रह्मसूत्रम् ३।२।८।३८

अत्राधिकरणे सूत्रमेकमस्ति प्रवक्ति तत्[३४] ।
अब्रह्मणि प्रतीकेऽपि कर्तव्या ब्रह्मधीरिह ॥७३॥

## ५. आदित्यादिमत्यधिकरणम् (ब्रह्मसूत्रम् ४।१।५।६)

शिष्यः –
'य एव[३५]' 'वाचि[३६]' 'लोकेषु[३७]' 'इयमेव[३८]' पृथग्विधैः ।
मन्त्रैः सामोपासना वाऽऽदित्याङ्गे किमु दृष्टयः ॥७४॥

तदङ्गादिषु दृष्टिर्वाऽऽदित्ये दृष्टिः प्रदीयते ।
सन्देहः पुनरायातो जिज्ञासाऽस्ति बलीयसी ॥७५॥

वादिनः प्रवदन्त्यत्र न कोऽप्यस्ति नियामकः ।
न साक्षान्नियमोऽस्त्यत्र हेतुरस्य न विद्यते ॥७६॥

प्रतीकयोर्द्वयोर्नास्ति वैशिष्ट्यं किमपीह न ।
यथाभिमतदृष्टिस्तु कर्तुमत्रापि शक्यते ॥७७॥

अयुक्तं वा युक्तमस्ति हे ब्रह्मन् ! वादिनां मतम् ?
सिद्धान्तमाज्ञापयतु स्वीकार्यं किं सयुक्तिकम् ? ॥७८॥

गुरुः –
तस्मादयुक्तमेतच्च दृश्यते वादिनां मतम् ।
युक्तमस्त्यद्वैतमतं सिद्धान्तोऽस्ति सयुक्तिकः ॥७९॥

---

३४. ब्रह्मदृष्टिरुत्कर्षात् । – ब्रह्मसूत्रम् ४।१।४।५
३५. य एवासौ तपति तमुद्गीथमुपासीत । – छान्दोग्योपनिषद् १।३।१
३६. वाचि सप्तविधं सामोपासीत । – छान्दोग्योपनिषद् २।८।१
३७. लोकेषु पञ्चविधं सामोपासीत । – छान्दोग्योपनिषद् २।२।१
३८. इयमेवर्गग्निः साम । – छान्दोग्योपनिषद् १।६।१

आदित्यादिकदृष्ट्याऽङ्गसंस्कारोऽस्ति सयुक्तिकः ।
कर्मणां फलमस्त्येव तत् स्यादतिशयं न किम् ? ॥८०॥

फलप्राप्तिर्न भवति विपरीतं फलं यदि ।
कर्माङ्गत आदित्यस्य संस्कारोऽस्ति दिवः किमु ? ॥८१॥

अक्रियात्मा देवतास्ता न सन्ति फलसाधकाः ।
कर्ताऽकर्ता च यज्ञानां समानफलभागिनः ॥८२॥

अतः सर्वेषु चाङ्गेषु कार्या आदित्यदृष्टयः ।
आधानं करणीयं स्यात् सिद्धान्त उपयुक्तकः ॥८३॥

अतोऽनङ्गं समाश्रित्याऽदित्यबुद्ध्यादिनामपि ।
उद्गीथादिषु चाङ्गेषु सिद्धान्त उपयुक्तकः ॥८४॥

अत्राऽधिकरणे सूत्रं वक्ति चोद्गीथकर्मणि[३९] ।
आदित्याङ्गेषु सद्बुद्धिः कार्या समृद्धिहेतवे ॥८५॥

### ६. आसीनाधिकरणम् (ब्रह्मसूत्रम् ४।१।६।७–१०)

शिष्यः –
कर्माङ्गैः क्रियमाणा या उपासना भवन्ति ताः ।
कर्माधीनाः सन्ति यदि तदाऽऽसनानि सन्ति नो ॥८६॥

सम्यग् विचारो नास्त्येव सोऽयं दर्शनमार्गणे ।
विज्ञानात्मकवस्तूनां सन्त्यधीनाः किमु स्वतः ॥८७॥

---

३९. आदित्यादिमतयश्चाङ्ग उपपत्तेः । –ब्रह्मसूत्रम् ४।१।५।६

कथं सोपासना कार्या ? सुप्त्वा प्रोत्थाय का स्थितिः ?
का स्थितिः पाल्यते चात्र ? नियमो नास्ति वा किमु ? ॥८८॥

उपासनावादिनोऽत्र तत्कार्यं मानसं भवेत् ।
वदन्ति नियमो नास्ति विना शारीरकस्थितिम् ॥८९॥

गुरुः –
वसित्वा क्रियते चात्र सर्वदा समुपासना ।
एकस्मिन् प्रत्यये कार्या प्रवाहोपासनाक्रिया ॥९०॥

गच्छतो धावतो वाऽपि सम्भवो नास्त्युपासना ।
गत्या तच्चित्तविक्षेपो भवेद् ध्यानमसम्भवम् ॥९१॥

[४०]'ध्यायती'वेति पाठोऽपि श्रुतौ दृष्टोऽस्ति शंसितः ।
उपासनायामासीनः स्थिरतां समपेक्षते ॥९२॥

[४१]'शुचौदेशे' प्रवदति स्मृतिश्च स्थिर आसने ।
योगशास्त्रं प्रवदति कार्यं पद्मासनादिकम् ॥९३॥

ध्यानं वोपासनं कार्यमुषित्वा स्थिर मासने ।
आयासः क्रियते नाऽत्र स्थिरत्वं समपेक्षते ॥९४॥

उषित्वोपासना कार्या परिशेषेण बुध्यते ।
श्रुतिस्मृतिप्रभाणेन खण्डितं वादिनां मतम् ॥९५॥

---

**४०. ध्यायतीव पृथिवी । –बृहदारण्यकोपनिषद् ७।६।१**
**४१. शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः । –गीता ६।११**

अत्राधिकरणे सूत्रचतुष्कं सर्वसम्मतम्[४२] ।
स्थिरमासनमास्थायोपासना शास्त्रसम्मता ॥९६॥

## ७. एकाग्रताधिकरणम् (ब्रह्मसूत्रम् ४।१।७।११)

शिष्यः –
किं तामुपासनां कर्तुं देशकालदिगादिनाम् ।
नियमावश्यकं कञ्चिद् यद्वा नावश्यकं किमु ? ॥९७॥

वादिनः प्रवदन्त्यत्र सन्देहः समुपागतः ।
वयं कर्मणि पश्यामो नियमाः सर्व एव ते ॥९८॥

वैदिकेतरसामान्ये चापि कर्मणि पश्यतु ।
दिग्देशकालनियमा दृष्टास्तूपासनाविधौ ॥९९॥

तदित्थं पूर्वपक्षाणां नियमे मतमागतम् ।
किं मतं वादिनां वक्तु किं मतं ? शास्त्रसम्मतम् ॥१००॥

गुरुः –
उपासनायामैकाग्र्यं सामान्यनियमोऽस्ति हि ।
दिग्देशकालनियमा न दृष्टाः श्रौतकर्मणि[४३] ॥१०१॥

इत्थमत्र विशेषोऽयं नियमो दृश्यते परम् ।
उपास्तौ नियमो नास्ति स आचार्यो वदत्यपि[४४] ॥१०२ ॥

---

४२. आसीनः सम्भवात् । – ब्रह्मसूत्रम् ४।१।६।७–१०
४३. समे शुचौ शर्करावह्निवालुका विवर्जिते शब्दजालाश्रयादिभिः ।
– श्वेताश्वतरोपनिषद् २।१०
४४. सति त्वेतस्मिंस्तद्गतेषु विशेषेष्वनियम इति सुहृद् भूत्वाऽऽचार्य आचष्टे ।
– शाङ्करभाष्यम्, ब्रह्मसूत्रम् ४।१।७।११

विशेष नियमो नास्ति त्वयैकाग्रेणचेतसा ।
उपासना सदा कार्या श्रुतिरुद्गिरति स्वयम्[४५] ॥१०३॥

अत्राधिकरणे सूत्रमेकमस्ति वदत्यपि[४६] ।
यत्रैकाग्र्यं मनो भाति तत्रैवोपासनां कुरु ॥१०४॥

### ८. आप्रयाणाधिकरणम् (ब्रह्मसूत्रम् ४।१।८।१२)

शिष्यः –
कार्या ह्युपासनावृत्तिः स्वेच्छया वा यदृच्छया ।
यद्वा मरणपर्यन्ता सा कार्या मानवेन हि ॥१०५॥

वादिनः कथयन्तीह सन्देहोऽत्र समागतः ।
आवृत्तिः समये किञ्चित् कार्या त्याज्या तदन्तरम् ॥१०६॥

न कार्या मरणान्ता साऽऽवृत्ति स्तन्मतमागतम् ।
वादिनां तन्मतान्ते तु मनो मे बहु शङ्कितम् ॥१०७॥

आज्ञापयत्वत्र गुरो ! साऽऽवृत्तिः क्रियते कथम् ?
स्वेच्छया किं तथाऽऽमृत्युपर्यन्ता किमुपासना ? ॥१०८॥

गुरुः –
कर्तव्या मृतिपर्यन्ता साऽऽवृत्त्या तदुपासना ॥
अन्त्ये तत्प्रत्ययादेव ह्यदृष्टफलमाप्यते ॥१०९॥

---

४५. 'मनोऽनुकूले' इति चैषा श्रुतिर्यत्रैकाग्रतां तत्रैवेत्येतदेव दर्शयति ।
– शाङ्करभाष्यम्, ब्रह्मसूत्रम् ४।१।७।११

४६. यत्रैकाग्रता तत्राविशेषात् । – ब्रह्मसूत्रम् ४।१।७।११

अन्यस्मिन् जन्मनि भुक्तात् तदुत्पन्नात् फलादपि।
भावनाप्रोत विज्ञान फलंमत्रापि जन्मनि[४७] ॥११०॥

मृतिकाले नरस्यात्र यादृक् चित्तविकल्पना[४८] ।
स नरः सेन्द्रियैः प्राणैस्तत्तद्देशं प्रयाति च ॥१११॥

प्रोक्ताभिः श्रुतिभिश्चात्र जलुकान्यायतः क्रमात्।
आमृत्युः सर्वथा कार्या नरैरपि च किन्नरैः ॥११२॥

[४९]'स यावत्' श्रुतिभिः 'सार्धं' 'यं यं वा' स्मृतिभिः सह[५०] ।
प्रयाणकाले यद्भावो जनस्तद्भावमाप्नुयात् ॥११३॥

[५१]प्रयाणकाले तु जनोऽचलेन मनसा यदि।
अच्युतादित्रयं [५२]ध्यात्वा शान्तं भावं समाश्रयेत् ॥११४॥

'सदा तद्भाव' इत्यादि प्रमाणैः प्रत्ययादपि।
अन्त्ये पुनर्जन्मनष्टं भवेदच्युतसंस्मृतेः ॥११५॥

एतस्मात् सर्वथा कार्याऽऽवृत्तिरामरणान्तिकम्।
एष वैदिकसिद्धान्तः सिद्धोऽभवदुपासने ॥११६॥

---

४७. सविज्ञानो भवति सविज्ञानमेवान्वक्रमति। – श्रुतिः
४८. यच्चित्तस्तेनैष प्राणमायाति, प्राणस्तेजसा युक्तः सहात्मना यथासङ्कल्पितं लोकं नयति इति चैवमादिश्रुतिभ्यः। –ब्रह्मसूत्रम्, शाङ्करभाष्यम्
४९. स यावत्क्रतुरयमस्माल्लोकात्प्रैति।
५०. यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेवरम्।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ – श्रीमद्भगवद्गीता ८।६
५१. प्रयाणकाले मनसाऽचलेन। – श्रीमद्भगवद्गीता ८।१०
५२. सोऽन्तवेलायामेतत्त्रयं (अक्षितमसि, अच्युतमसि, प्राणसंशितमसि)। – श्रुतिः

अत्राधिकरणे सूत्रमेकमस्ति च वक्ति तत्[५३] ।
आवृत्तिः सर्वथाकार्यामरणान्तं तमीश्वरम् ॥११७॥

## ९. तदधिगमाधिकरणम् (ब्रह्मसूत्रम् ४।१।९।१३)

शिष्यः –
ब्रह्मसाक्षात् कृते पश्चान् नश्यन्ति दुरितानि किम् ?
अथवा न विनश्यन्ति संशयः पुनरागतः ॥११८॥

वादिनः कथयन्त्यत्र भुक्त्वा कर्मफलं ततः ।
कर्माणि क्षयमेष्यन्ति ज्ञानिनां शास्त्रनिश्चयः[५४] ॥११९॥

देशकालनिमित्तानि मोक्षार्थं समपेक्षते ।
ब्रह्मबोधे कृते चापि न पापक्षयमेष्यति ॥१२०॥

गुरुः –
ब्रह्मसाक्षात् कृते पश्चात् पापानि न स्पृशन्ति तम्[५५] ।
पूर्वपापानि नश्यन्ति पद्मपत्रं यथा जलैः ॥१२१॥

ज्ञानिनां चित्तभित्तौ तु पापानि न स्पृशन्त्यपि[५६] ।
जलानि न स्पृशन्त्येव पद्मपत्रं यथा तथा ॥१२२॥

---

५३. आ प्रायणात्तत्रापि हि दृष्टम् । – ब्रह्मसूत्रम् ४।१।८।१२
५४. न हि कर्माणि क्षीयन्ते । नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ।
– महाभारतम् शान्तिपर्व २४२।७
५५. एवमेवंविदि पापं कर्म न श्लिष्यते । – छान्दोग्योपनिषद् ४।१४।३
५६. यथा पुष्करपलाश आपो न श्लिष्यन्ते । – छान्दोग्योपनिषद् ४।१४।३

अग्नौ यथा मुञ्जतलं भस्मीभवति पूर्णतः[५७] ।
तथा ब्रह्मज्ञस्य पापं भस्मीभवति बोनतः ॥१२३॥

सर्वकर्माणि नश्यन्ति हृद्ग्रन्थिर्भिद्यते भृशम्[५८] ।
ब्रह्मसाक्षात्कृते कर्तुश्छिद्यन्ते सर्वसंशयाः ॥१२४॥

'क्षीयन्ते न हि कर्माणि' स्मृतिरौत्सर्गिका मता ।
प्रायश्चितेन हि यथा सर्वकर्मक्षतिभवेत्[५९] ॥१२५॥

तदा नश्यन्ति पापानि ब्रह्मज्ञानं यदा भवेत् ।
श्रुतिस्मृतिपुराणाद्याः सिद्धान्तं ब्रुवतेऽनिशम् ॥१२६॥

अत्राधिकरणे सूत्रमेकं वक्तीह शास्त्रतः[६०] ।
यदा भवति ब्रह्मज्ञस्तस्य पापं व्यपोहति ॥१२७॥

### १०. इतरासंश्लेषाधिकरणम् (ब्रह्मसूत्रम् ४।१।१०।१४)

शिष्यः –
पुण्येन कर्मणा ज्ञानी लिप्तो भवति वा न वा ?
शङ्का चैषा समुत्पन्ना मनो जिज्ञासया युतः ॥१२८॥

वादिनः प्रवदन्त्यत्र ज्ञानी पुण्येन लिप्यते ।
श्रौत्रादिकर्मणः पुण्यैर्बोधोऽयं न विरुध्यते ॥१२९॥

---

५७. तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते ।
– छान्दोग्योपनिषद् ५।२४।३

५८. भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ – मुण्डकोपनिषद् २।२।८

५९. सर्वं पाप्मानं तरति, तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद । – श्रुतिः

६०. तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् । – ब्रह्मसूत्रम् ४।१।१०।१३

आज्ञापयत्वत्र गुरो ! युक्तं किं वादिनां मतम् ?
अयुक्तमथवा कोऽस्ति सिद्धान्त उचितोऽधुना ? ॥१३०॥

पूर्वाधिकरणन्यायादतिदेशं प्रगृह्णता ।
क्रियते गुरुणा चाऽत्राऽप्यद्वैतमतशंसनम् ॥१३१॥

गुरुः –
ज्ञानिनां पुण्यकर्माद्यैर्यथा पापं विनश्यति ।
न लिप्यते पुण्यपापैर्मुक्तो भवति बन्धनात् ॥१३२॥

यदा ज्ञानोदयो भाति नष्टे सुकृतदुष्कृते ।
यथा तमः स निर्लिप्तः श्रुतिः सूचयतीत्यपि[६१] ॥१३३॥

'आत्मा शुद्धोऽस्त्यकर्ताऽस्ति' बोधोऽयमुदिते सति ।
नश्यन्ति पुण्य पापानि तमः सूर्योदये यथा ॥१३४॥

तेनैव पापशब्देन पुण्यार्थोऽपि प्रगृह्यते ।
'हैवैषे'ति श्रुतिरिदं सङ्केतयति च स्फुटम् ॥१३५॥

सामर्थ्येनाऽपि विद्याया मुच्यन्ते बन्धहेतवः ।
अधर्म धर्मयोः श्लेषो न भवत्येव नश्यति ॥१३६॥

ज्ञानी भवति मुक्ताऽऽत्मा देहपातादनन्तरम् ।
धर्माधमौ परित्यज्य याति ब्रह्म सनातनम्[६२] ॥१३७॥

---

**६१. उ हैवैष एते तरति । – बृहदारण्यकोपनिषद् ४।४।२२**
**६२. आचार्यवान् पुरुषो वेद । तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य इति ।**
**– छान्दोग्योपनिषद् ६।१४।२**

अत्राधिकरणे सूत्रमेकं वक्ति तदन्ततः[६३] ।
ज्ञानिनः पुण्यपापाद्यैर्न लिप्यपन्ते हि तत्त्वतः ॥१३८॥

## ११. अनारब्धाधिकरणम् (ब्रह्मसूत्रम् ४।१।११।१५)

शिष्यः –
'ज्ञानिनां पुण्यपापाद्या नश्यन्ति' पूर्वमब्रवम् ।
अत्रापि मानसे मेऽत्र सन्देहः पुनरागतः ॥१३९॥

यस्य कार्यं समारब्धं नाऽऽरब्धं यस्य तस्य च ।
उभयोः पुण्यपापादिं किं नश्यन्ति ? न किं पुनः ? ॥१४०॥

वादिनः कथयन्त्यत्र समाने ते उभे ततः ।
अनारब्धं तथाऽऽरब्धं द्वावुभौ नश्यतो भृशम् ॥१४१॥

'उभे उ ह' श्रुतिर्वक्ति पुण्यादि कर्मलक्षणम्[६४] ।
ज्ञानी तरत्युभौ पुण्यपापे याति परां गतिम् ॥१४२॥

अत्राऽऽज्ञापयतु ब्रह्मन् ! अनारब्धस्य कर्मणः ।
नाशो भवति वा नाश आरब्धस्यापि कर्मणः ॥१४३॥

गुरुः –
ज्ञानोत्पत्तेः पूर्वकर्म तथा सञ्चितकर्म च ।
प्रारब्धकर्मणा साकं तिष्ठत्यन्यद् विनश्यति ॥१४४॥

---

६३. इतरस्याप्येवमश्लेषः पाते तु । ब्रह्मसूत्रम् ४।१।१०।१४
६४. उभे उ हैवेष एते तरति । – बृहदारण्यकोपनिषद् ४।४।२२

पुण्यपापादिभिः सृष्टं सञ्चितं पूर्वकर्मणः ।
फलभोगादृते नाशं न प्रारब्धस्य कर्मणः ॥१४५॥

तद्वेलामनतिक्रम्य विलम्बो ज्ञानिनां भवेत[६५] ।
मुक्तये पूर्वलब्धेन देहोऽनश्यति कर्मणा ॥१४६॥

प्रारब्धकर्मणां वेगः प्रक्षीणो न भवेद् यदा ।
तावदेव हि तद्भोगो मोक्षस्य प्रतिबन्धकः ॥१४७॥

प्रारब्धकर्मतः प्राप्तमायुर्भोगादिकं च यत् ।
भुक्त्वा मात्रं भवेन्मुक्ति र्ज्ञानिनामस्ति सम्भवा ॥१४८॥

अत्राधिकरणे सूत्रमेकं वक्ति निरन्तरम्[६६] ।
ज्ञानेन भस्मीभवति तदनारब्धकर्म तु ॥१४९॥

### १२. अग्निहोत्राधधिकरणम् (ब्रह्मसूत्रम् ४।१।१२।१६)

शिष्यः –
अग्निहोत्रादिकर्माणि नित्यकर्माणि यानि च ।
पूर्वसञ्चिततुल्यानि ज्ञानाद् भस्मीभवन्ति किम् ? ॥१५०॥

वादिनः कथयन्त्यत्र ह्यग्निहोत्रादिकर्म तु ।
नित्यानि काम्यकर्माणि ज्ञानाग्नौ प्रदहन्ति च ॥१५१॥

गुरो ! भवान् प्रवदतु ह्यग्निहोत्रादिकर्म किम् ।
नश्यन्ति किं वा रक्षन्ति पूर्वसञ्चितकर्मवत् ॥१५२॥

---

६५. आचार्यवान् पुरुषो वेद । तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये ।
– छान्दोग्योपनिषद् ६।१४।२

६६. अनारब्ध कार्ये एव तु पूर्वे तदवधेः । – ब्रह्मसूत्रम् ६।१।११।१५

गुरुः –

नश्यन्ति कतिचिदंशास्तेषां सर्वात्मना परम् ।
न नश्यन्ति सुरक्षन्ति चित्तशुद्ध्यर्थहेतवे ॥१५३॥

सूत्रे तुना कृता शङ्का रक्षणार्थं समागता ।
अग्निहोत्रादि कर्माणि ब्रह्मज्ञानैकसाधनम् ॥१५४॥

ज्ञानस्य कार्यं यच्चास्ति तेषां कार्यं तदेव हि ।
अधीतसर्ववेदेन प्राप्तव्यं फलमस्ति तत्[६७] ॥१५५॥

श्रुतौ समागतं दृष्टं कर्मैव साधनं भवेत् ।
ज्ञानकर्मद्वयोः काचिद् भिन्नतापि प्रदृश्यते ॥१५६॥

नास्यां सगुणविद्यायाः कर्तृत्वस्य निवर्तनम् ।
सगुणज्ञानपश्चात् तु चाग्निहोत्रादिकं भवेत् ॥१५७॥

अग्निहोत्रादिकर्माणि काण्वे स्वर्गार्थसाधनम् ।
क्रियाऽभीष्टा तौ वदतो जैमिनिवादरायणौ ॥१५८॥

तथाप्येषां भवेन्नाशो ज्ञानसूर्योदिते यथा ।
तमोवत् तानि नश्यन्ति सर्वकर्मफलानि च ॥१५९॥

अत्राधिकरणे सूत्रद्वय मस्ति वदत्यपि[६८] ।
अग्निहोत्रादिकर्माणि भवन्ति ज्ञानसाधनम् ॥१६०॥

---

६७. तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन ।
– बृहदारण्यकोपनिषद् ४।४।२२

६८. अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् । – ब्रह्मसूत्रम् ४।१।१२।१६–१७

## १३. विद्याज्ञानसाधनाधिकरणम् (ब्रह्मसूत्रम् ४।१।१३।१८)

शिष्यः –

उपासनाविशिष्टानि नित्यकर्माणि यानि च ।
विद्यायामुपयोगीनि भवन्ति तानि वा न वा ॥१६१॥

उपासनाविशिष्टानि कथयन्त्यत्र वादिनः ।
विद्यायामुपयोगीनि नित्यकर्माणि सन्ति नः ॥१६२॥

भवानत्र प्रवदतु किं युक्तं वादिनां मतम् ? ।
अयुक्तं यदि तत् किं स्यात् सिद्धान्त उपयुक्तकः ? ॥१६३॥

गुरुः –

'यदेवे'ति श्रुतिर्ब्रूते विद्यायुक्तः सुधीजनः[६९] ।
श्रद्धायोगेन युक्तात्मा यत्कर्माणि करोति च ॥१६४॥

अविद्वत्कर्मतो दृष्टं यदेतद्वीर्यवत्तरम् ।
तथापि विद्यया हीनं साधनं त्वग्निहोत्रकम् ॥१६५॥

आत्मा तूपनिषद्गम्यो यदाऽयं ज्ञायते पुनः[७०] ।
अग्निहोत्रादयो विद्याहेतवो वदति श्रुतिः ॥१६६॥

विद्यायुक्तो विहीनो वा कर्माणि कुरुते जनः ।
मोक्षार्थमुभयं कर्म चाग्निहोत्रादिकं तथा ॥१६७॥

---

६९. यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति ।
– छान्दोग्योपनिषद् १।१।१०

७०. तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन ।
– बृहदारण्यकोपनिषद् ४।४।२२

ज्ञानोदये च तत्पूर्वं यत्कर्म कुरुते जनः ।
पूर्वसञ्चितपापानि जन्मनि कृतकर्मणः ॥१६८॥

ब्रह्मज्ञानैकहेतोस्तद् भवति प्रतिबन्धकम् ।
अग्निहोत्रादिकार्येण नश्यन्ति दुरितादिकम् ॥१६९॥

श्रवणादिककार्येण विनष्टे दुरितादिके ।
तात्पर्यादिं समाकृष्य श्रौताऽऽभ्यन्तरकारणम् ॥१७०॥

तैश्च सोपासनैः कार्यैः कर्म तन्निरुपासनम् ।
उभयोस्तारतम्येन विद्यायामस्ति साधनम् ॥१७१॥

अत्राधिकरणे सूत्रमेकमस्ति च वक्ति च[७१] ।
सोपासनं कर्म तत् सद् भवति ज्ञानसाधनम् ॥१७२॥

### १४. इतरक्षपणाधिकरणम् (ब्रह्मसूत्रम् ४।१।१४।१०)

शिष्यः –
अनेकजन्मदेनाऽपि प्रारब्धकर्मणा युतः ।
पुरुषस्तस्य मुक्तिः स्यान्न स्याद्वा शास्त्रतः किमु ॥१७३॥

तत्तत् प्रारब्धकर्माऽपि यावदस्ति फलोन्मुखम् ।
विद्यालोपस्तेन भवेन्न मुक्तिर्ज्ञानिनां भवेत् ॥१७४॥

गुरो वक्तु तदत्राऽपि युक्तं किं वादिनां मतम् ?
ब्रह्मन् ! नास्ति तदेतच्चेत् सिद्धान्त उचितोऽस्ति कः ? ॥१७५॥

---

७१. यदेव विद्ययेति हि । – ब्रह्मसूत्रम् ४।१।१३।१८

गुरुः –

तदनारब्धकं कर्म ज्ञानेनैव विनश्यति ।
आरब्धकर्मणो नाशं भुक्त्वा भोगान् भवेदिह ॥१७६॥

तावत्कालं ज्ञानिनस्तु विलम्बो भवतीत्यथ[७२] ।
ब्रह्म भूत्वा गच्छति स देहपातादनन्तरम् ॥१७७॥

मिथ्याज्ञानं प्रज्वलति सम्यग्ज्ञानं यदा भवेत् ।
प्रारब्धकर्मणां नाशात् सुधीः कैवल्यमाप्नुयात् ॥१७८॥

अत्राधिकरणे सूत्रमेकं वक्ति प्रमाणतः[७३] ।
प्रारब्धकर्मणां भोगात् तन्नाशे स विमुच्यते ॥१७९॥

ब्रह्मसूत्रे कारिकायां चतुर्थाध्यायवर्णितः ।
एष प्रथमपादोऽत्र समनूद्य समापितः ॥१८०॥

॥ इति ब्रह्मसूत्रकारिकायां चतुर्थाध्याये प्रथमः पादः ॥

७२. तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये । – छान्दोग्योपनिषद् ६।१४।२
७३. भोगेन त्वितरे क्षपयित्वा सम्पद्यते । – ब्रह्मसूत्रम् ४।१।१४।१९

ॐ तत्सद्ब्रह्मणे नमः

अथ ब्रह्मसूत्रकारिकायां

# चतुर्थेऽध्याये द्वितीयः पादः

(अस्मिन् पादे वागाधिकरणाद् दक्षिणायनाधिकरणं यावद् एकादशाधिकरणानि सन्ति । अत्रोत्क्रान्तिगते निरूपणं विहितम् ।)

## १. वागाधिकरणम् (ब्रह्मसूत्रम् ४।२।१।१–२)

शिष्यः –

मृत्युशय्याऽभिपन्नस्य वागादीनिन्द्रियाण्यहो ।
जनस्य हृदये यान्ति सुस्पष्टं वदति श्रुतिः[1] ॥१॥

प्रथमं मानसे गत्वा वागादीनि मिलन्त्यतः ।
तदन्ते परमे देवे तदात्मनि मिलन्त्यहो ॥२॥

स्वरूपेण मिलन्त्यस्मिन् वृत्तिमात्रेण तानि किम् ?
तेषां स्वरूपं वा वृत्तिः सन्देहश्चित्तमागतः ॥३॥

पूर्वपक्षा वदन्त्यत्र स्वरूपलयमेति च ।
श्रुतिर्वाङ्मनसीत्यादि दर्शयन्ती न वृत्तये ॥४॥

आज्ञापयत्वत्र गुरो ! युक्तं किं वादिनां मतम् ?
अयुक्तं यदि कोऽस्त्यत्र सिद्धान्त उचितोऽस्ति भो ! ॥५॥

---

१. अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम् । – छान्दोग्योपनिषद् ६।८।६

गुरुः –

वाणीनां न हि वाणीनां वृत्तीनां विलयो भवेत् ।
वाणी प्रमिलिते भूयात् कार्यकारणसंक्षयम् ।।६।।

वाणीनां तु मनो नास्ति तदुपादानकारणम् ।
उत्पत्तिर्मनसो जाता मनस्येव मिलन्त्यतः ।।७।।

घटस्याऽपि भवत्यत्र मृत्तिकासु लयो यथा ।
तादृगेव हि वाणीनां कारणे मानसे लयः ।।८।।

वाणी जनमलङ्कुर्यादित्यतो मनसोऽभवत् ।
तदुत्पत्तिरतो हेतो रन्त्ये मनसि तल्लयः ।।९।।

वाणीनां नास्ति मनसि वाण्या वृत्तेर्लयो भवेत् ।
मनसीत्येव जानीयात् श्रौततात्पर्यनिर्णयम् ।।१०।।

अत्राधिकरणे सूत्रद्वयमन्तिमनिर्णयम्[२] ।
मनस्येव भवेद् वाण्या वृत्तीनां विलयोऽप्यतः ।।११।।

## २. मनोऽधिकरणम् (ब्रह्मसूत्रम् ४।२।२।३)

शिष्यः –

प्राणेषु विलयः सत्यं स्वरूपं मनसो वा ?
वृत्तेर्वा वादिनोऽप्यत्र स्वरूपं लयश्चेत्यपि ।।१२।।

अन्नोदकाभ्यां मनसः प्राणा हेतुर्भवन्त्यपि[३] ।
अत एव स्वरूपेण मनः प्राणेषु लीयते ।।१३।।

---

२. वाङ्मनसि दर्शनाच्छब्दाच्च । – ब्रह्मसूत्रम् ४।२।१।२

३. अन्नमयं हि सोम्य मन आपोमयः प्राणः । – छान्दोग्योपनिषद् ६।५।४

गुरो ! वक्तु तदत्रापि मनः प्राणेषु याति किम् ?
स्वरूपेणाऽथवा किं वा सवृत्या मिलति मनः ? ॥१४॥

गुरुः –
येन सर्वाणि बाह्य नीन्द्रियवृत्तीनि गृह्यते ।
आत्मन्येवोपसंहारकर्ता सौम्य ! मनोऽस्ति तत् ॥१५॥

प्राणेषु विलयं यान्ति तादृङ्मानसवृत्तयः ।
वाक्यादेवोत्तरं चैतत् स्मर्तव्यं निश्चयादपि ॥१६॥

सुषुप्सूणां मुमूर्षूणां प्राणानां चलनात्मिकाः ।
वृत्तयस्तत्र तिष्ठान्ति शान्ता मानसवृत्तयः ॥१७॥

अतो न हि स्वरूपेण मनः प्राणेषु लीयते ।
मनसो न भवत्येव तदुपादानकारणम् ॥१८॥

स्वरूपेण मनस्तत्र प्राणेषु न हि लीयते ।
मनसो वृत्तयः शान्ताः प्राणेष्वत्र मिलन्त्य हो ! ॥१९॥

अत्राधिकरणे सूत्रमेकं वक्तीह शास्त्रतः[४] ।
मनसो वृत्तयः सर्वाः प्राणेष्वेव मिलन्त्यपि ॥२०॥

### ३. अध्यक्षधिकरणम् (ब्रह्मसूत्रम् ४।२।३।४।६)

शिष्यः –
जीवे वा पञ्चभूते वा प्राणानां क्व लयो भवेत् ?
वादिनः कथयन्त्यत्र प्राणा भूते मिलन्त्यपि ॥२१॥

---

४. तन्मनः प्राण उत्तरात् । – ब्रह्मसूत्रम् ४।२।२।३

'प्राणस्तेजसि' मन्त्रोऽयं प्रमाणं श्रुतिदर्शितम्[५] ।
मिलन्ति तेजसि प्राणाः कथयन्त्यपि वादिनः ॥२२॥

'प्राणा जीवे मिलन्तीति' श्रुतौ क्वापि न दृश्यते ।
अत एवाऽत्र किं विद्वन् ! भूते प्राणा मिलन्ति वा ? ॥२३॥

आज्ञापयत्वत्र विद्वन् ! भूते प्राणा मिलन्ति किम् ? ।
शास्त्रे प्रमाणं किमिति जीवे प्राणा मिलन्ति वा ? ॥२४॥

गुरुः –
पूर्वया प्रज्ञया साकं द्वे [६]विद्याकर्मणी अपि ।
विज्ञानरूपात्मनि ते प्राणा यान्ति मिलन्त्यपि ॥२५॥

[७]'एवमेवेमे'ति श्रुतिर्वागादीनीन्द्रियाण्यपि ।
मिलन्त्युत्क्रान्तिकाले तु सर्वाण्यात्मनि, वक्ति च ॥२६॥

देहं हित्वा यदा याति जीवात्मा तदनुक्रमात्[८] ।
मिलन्ति प्राणास्तेनैव वागाद्यैरिन्द्रियैः सह ॥२७॥

विज्ञानयुक्तो जीवात्मा ह्यन्तर्विज्ञानसंयुतः[९] ।
प्राणा वागादीन्द्रियाणि मिलन्त्येवाऽन्तरात्मनि ॥२८॥

---

५. प्राणस्तेजसि । – श्रुतिः

६ शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनुत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च । – बृहदारण्यकोपनिषद् ४।४।२

७. एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति यत्रैतदूर्ध्वोच्छ्वसी भवति । – श्रुतिः

८. तमुत्क्रान्तं प्राणोऽनूत्क्रामति । – बृहदारण्यकोपनिषद् ४।४

९. सविज्ञानो भवति ।– बृहदारण्यकोपनिषद् ४।४।२

अतः प्राणा विलीयन्ते तस्मिन् जीवात्मनि स्थिते ।
प्राणा भूतेषु लीयन्ते ततस्तज्जीवमाध्यमात् ॥२९॥

अत्राधिकरणे सूत्रत्रयमस्ति च वक्ति च[१०] ।
जीवे प्राणा विलीयन्ते ततो भूतेषु यान्ति च ॥३०॥

### ४. आसृत्युपक्रमाधिकरणम् (ब्रह्मसूत्रम् ४।२।४।७)

शिष्यः –
किमुत्क्रान्तिः समानाऽस्ति विदुषोऽविदुषोरपि ।
यद्वाऽसमानास्त्युभयोरुत्क्रान्तिः किमु कथ्यताम् ? ॥३१॥

वादीः –
पुनरुत्पत्तयेऽविद्वान् भवेद् भूते समाश्रितः ।
विद्याविदिति चित्तोऽसो विद्वानमृतमश्नुते[११] ॥३२॥

उत्क्रान्तिरसमानाऽस्ति गती स्त उभयोरुभौ ।
संसारः फलमेकस्य मोक्षोरन्यस्य सुन्दरः ॥३३॥

अनुत्क्रामन्ति हि प्राणा लीयन्ते ज्ञानिनोऽत्र हि ।
'न तस्ये'ति श्रतिर्वक्ति मुक्तिर्भवति ज्ञानिनः[१२] ॥३४॥

इदं मतं वादिनोऽस्ति गुरो ! वदतु भो भवान् ।
उत्क्रान्तौ किमु पार्थक्यमस्ति वा नास्ति किं गुरो ! ॥३५॥

---

१०. सोऽध्यक्षे तदुपगमादिभ्यः ।– ब्रह्मसूत्रम् ४।२।३।४

११. अमृतत्वं हि विद्वानश्नुते । – श्रुतिः

१२. न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते ब्रह्म सन् ब्रह्माप्येति ।
– नृसिंहोत्तरतापनीयोपनिषद् ५

गुरुः –
श्रुति'र्वाङ्मनसि' वाक्याद् ज्ञानिनोऽज्ञानिनोरपि ।
उत्क्रान्तिमार्गस्त्वेकोऽस्ति तत ऊर्ध्वं पृथक् फलम्[13] ॥३६॥

श्रुतौ प्रदृश्यते सौम्य ! श्रवणं त्वविशेषकम् ।
जानीहि देवयानान्तमुत्क्रान्तौ साम्यमस्त्यपि ॥३७॥

तत्पश्चादर्चिरादौ तु देवयानादनन्तरम् ।
विद्वान् विमुक्तो यात्येव ब्रह्मलोकं ततः परम् ॥३८॥

अत्राधिकरणे सूत्रमेकमस्ति च वक्ति च[14] ।
हित्वा क्लेशमविद्या च मुमुक्षुर्मुच्यते भृशम् ॥३९॥

### ५. संसारव्यपदेशाधिकरणम् (ब्रह्मसूत्रम् ४।२।५।८।११)

शिष्यः –
स्वरूपलयमाप्नोति भूतस्य परमात्मनि ।
अथवा किं वृत्तिलयो भवति परमात्मनि ॥४०॥

वादिनः कथयन्त्यत्र स्वरूपलयमेत्यपि ।
तस्याऽन्तः परमात्मा हि तदुपादानकारणम् ॥४१॥

गुरो ! वदत्वत्र भवान् युक्तं किं वादिनां मतम् ?
यदि तन्नास्ति हे ब्रह्मन् ! सिद्धान्त उचितोऽस्ति कः ? ॥४२॥

---

१३. क. देवायानस्य वा पथः प्रतिपदं पितृयाणस्य वेति दक्षिणोत्तरमार्गः ।
– बृहदारण्यकोपनिषद् ६।२।१६। शाङ्करभाष्यम्
ख. शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्ययावर्तते पुनः ॥ – श्रीमद्भगवद्गीता ८।२६
१४. समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य । – ब्रह्मसूत्रम् ४।२।४।७

गुरुः –

आकाशतेज इत्याद्याः सूक्ष्मा भूतेन्द्रियाश्रयाः ।
यावज्ज्ञानोदयं तावत् प्रवर्तन्ते हि ते समे ।।४३।।

जीवा अविद्यासंयुक्ता गत्वा विविधयोनिषु[१५] ।
शरीरं धारयन्त्यत्र ह्यज्ञानाच्छन्नरूपिणः ।।४४।।

अज्ञानिनोऽतीव मूढा यान्ति स्थावरयोनिषु ।
श्रुत्यादौ दृश्यते चैतद् यथा कर्म यथा श्रुतम् ।।४५।।

सूक्ष्मभूतेऽभिसञ्जाते तत्स्वरूपलयो भवेत् ।
यान्ति ब्रह्मणि देहान्ते शास्त्रादिः किमु संक्षयेत् ? ।।४६।।

मिथ्या संज्ञानसंसृष्टं यत् स्यात् संसारबन्धनम् ।
सम्यग् ज्ञानं विना नैव क्षीयते कर्मबन्धनम् ।।४७।।

परदेवत्वरूपं तद् यदि स्यात् प्रकृतिस्तदा ।
सुषुप्तिकालसदृशो बीजभावोऽभिवर्तते ।।४८।।

यथोक्तमस्ति यत्तेजस्तत् प्रमाणस्वरूपतः ।
सूक्ष्मं तदन्तर्नाड्या हि निर्यात्येवेति वेदवाक् ।।४९।।

सूक्ष्मत्वात् तेजसः स्थूलो देहो दग्ध्वाऽपि दाहतः ।
लिङ्गदेहं न दहति चिताऽग्निरिति वेदवाक् ।।५०।।

---

**१५. योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।**
**स्थाणुमन्येऽनुसंयन्ति यथा कर्म यथाश्रुतम् ।। –कठोपनिषद् ५।७**

तदुष्मा स्थूलदेहस्य सूक्ष्मं तेजोऽस्ति धर्मभाक्[१६] ।
जीवो जीवेत् तदस्तित्वे न जीवेत् तद्गते मृतः ॥५१॥

लयो भवति भूतस्य ज्ञानिनां तु स्वरूपतः ।
अज्ञानिनांऽतु भूतेऽस्ति वृत्तेर्भवति तल्लयः ॥५२॥

न मन्यते यदीत्थं तु जीवो जन्मान्तरे ततः ।
न जायते पुनरिति मतं सिद्धान्तपक्षतः ॥५३॥

अत्राऽधिकरणे सूत्रं चतुष्कं चानुमोदते[१७] ।
ज्ञानिनां विलयं यान्ति भूताः शास्त्रानुसारतः ॥५४॥

### ६. प्रतिषेधाधिकरणम् (ब्रह्मसूत्रम् ४।२।६।१२।१४)

शिष्यः –

प्राणोत्क्रान्तिनिषेधं किं 'न तस्य' कुरुते श्रुतिः ।
किं शरीरं ? न वा जीवस्तन्निषेधः कुतः कथम् ? ॥५५॥

वादिनः कथयन्त्यत्र सन्देहे प्राण उत्क्रमः ।
शरीरादेव निर्याति नैव निर्याति जीवतः ॥५६॥

अन्यथा सर्वथा देहो भविष्यत्यजरामरः ।
वादिनां मतमायातं स्पष्टमुत्तरमुच्यताम् ॥५७॥

गुरुः –

नोत्क्रामन्ति हि ते प्राणा यद्वा तद्वा वदन्तु ते[१८] ।
ज्ञानिनां विलयं यान्ति प्राणा अस्माद्धि लोकतः ॥५८॥

---

१६. उष्ण एव जीविष्यञ्शीतो मरिष्यन् । – श्रुतिः

१७. तदाऽपीतेः संसारव्यपदेशात् । – ब्रह्मसूत्रम् ४।२।५।८।११

१८. न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति । – बृहदारण्यकोपनिषद् ४।४।६

सुतप्ते तदयःपिण्डे संपतन् जलबिन्दुवत् ।
प्राणा विलयमायान्ति तदुदाहरणं विदुः ॥५९॥

नोत्क्रामन्ति हि ते प्राणाः शास्त्रं वदति ज्ञानिनाम् ।
उत्क्रामन्ति हि ते प्राणा अज्ञानां वदति श्रुतिः ॥६०॥

शिरसश्चक्षुषो वाऽन्यान् मुखात् कर्णाद् विनिर्गताः[१९] ।
प्राणास्तैरिन्द्रियैः सार्धं जीवो निर्याति देहतः ॥६१॥

जीवः सकामो गत्वाऽपि पुनरायाति भूतले[२०] ।
स पुनर्जायते कामी म्रियते च मुहुर्मुहुः ॥६२॥

निष्कामविदुषः प्राणा नोत्क्रामन्ति न यान्ति च[२१] ।
भवन्ति ब्रह्मरूपास्ते ब्रह्मणीह मिलन्त्यपि ॥६३॥

ज्ञानिनां तु गतिर्नास्ति तान् न पश्यन्ति देवताः[२२] ।
ते तु ब्रह्मणि लीयन्ते वदत्येतच्च भारतम् ॥६४॥

न गतिर्ब्रह्मवेतॄणां बहिः प्राणा न यान्ति च ।
'ब्रह्मविद् ब्रह्म भवति' श्रुतिरुद्घोषति भृशम्[२३] ॥६५॥

---

१९. चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनुत्क्रामन्ति । –बृहदारण्यकोपनिषद् ४।४।२

२०. इति नु कामयमानः । – बृहदारण्यकोपनिषद् ४।४।६

२१. अथाकामयमानः । – बृहदारण्यकोपनिषद् ४।४।६

२२. सर्वभूतात्मभूतस्य सम्यग्भूतानि पश्यतः ।
देवा अपि मार्गे मुह्यन्त्यपदस्य पदैषिणः ॥ – महाभारतम्

२३. क. ब्रह्मैव सन् ब्रह्माप्येति । – बृहदारण्यकोपनिषद् ४।४।६
ख. न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते ब्रह्मैव सन् ब्रह्माप्येति ।
– नृसिंहोत्तरतापनीयोपनिषद् ५
ग. ब्रह्म वेद ब्रह्मैव भवति । – मुण्डकोपनिषद् ५
घ. ब्रह्मविदाप्नोति परम् । – तैत्तिरीयोपनिषद् २।१।१

अत्राधिकरणे सूत्रत्रयं पूर्वोत्तरायितम्[२४] ।
नोत्क्रामन्ति हि ते प्राणा ज्ञानिनां वदति स्फुटम् ॥६६॥

## ७. वागाधिकरणम् (ब्रह्मसूत्रम् ४।२।७।१५)

शिष्यः –
ज्ञानकर्मेन्द्रियादीनि वस्तुतस्तत्वदर्शिनः ।
स्वकारणे किं मिलन्ति ? ब्रह्मण्येव मिलन्ति किम् ? ॥६७॥

वादिनः कथयन्त्यत्र ते गृहीत्वा 'गताः कलाः'[२५] ।
वागादीनि मिलन्त्यग्नौ तदुपादानकारणे ॥६८॥

प्राणाद्यास्ते कलाभिख्या प्रतिष्ठा शब्दकारणात् ।
स्वे कारणे मिलन्त्येव ब्रह्मणि न मिलन्ति ते ॥६९॥

आज्ञापयत्वत्र मतं वादिनां तत् समागतम् ।
प्राणा अग्नौ किं मिलन्ति वा ब्रह्मणि मिलन्ति किम् ? ॥७०॥

गुरुः –
ज्ञानिनां प्राणशब्दाख्या ज्ञानकर्मेन्द्रियाण्यपि ।
भूतादीनि मिलन्त्येव तदात्मन्येव निश्चितम् ॥७१॥

सरितः सकला यान्ति महानद्यां ततोऽर्णवे[२६] ।
तथैव षोडशकला मिलन्ति पुरुषं गताः ॥७२॥

---

२४. प्रतिषेधादिति चेन्न शारीरात् । –४।२।६।१२–१४
२५. गताः कलाः पञ्चदश प्रतिष्ठाः । – मुण्डकोपनिषद् ६।५
२६. एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाऽपुरुषं प्राप्यास्तं गच्छन्ति ।
– प्रश्नोपनिषद् ६।५

वागादीनीन्द्रियाणि स्वकारणे प्रमिलन्ति किम् ?
वादिनां मतमेतत् तु सत्यमस्ति मृषापि तत् ॥७३॥

व्यवहारापेक्षया तु निश्चियं श्रुतिसम्मतम् ।
घटादिवन्मिलन्त्येव पृथिव्यां संक्षये सति ॥७४॥

ब्रह्मज्ञानां कलाः सर्वा ब्रह्मण्येव मिलन्त्यहो ! ।
अंशाशिभावसंबद्धा (लग्ना) एकाकारायतेऽन्तिमे ॥७५॥

अज्ञानिनां कला यान्ति जलतेजादिहेतुषु ।
ज्ञानिनां तु कलाः सर्वा यान्ति ब्रह्मणि संस्थिताः ॥७६॥

अत्राधिकरणे सूत्रमेकं वक्ति च तत्वतः[२७] ।
ब्रह्मज्ञानां कलाः सर्वा ब्रह्मण्येव मिलन्त्यहो ! ॥७७॥

### ८. अविभागाधिकरणम् (ब्रह्मसूत्रम् ४।२।८।१६)

शिष्यः –
वागाद्याः सकला यान्ति यथाऽऽत्मनि मिलन्त्यपि ।
मिलन्ति सावशेषास्ताः किं विशेषं विनैव ताः ॥७८॥

सावशेषाऽभिमन्यन्ते सन्दिहन्ति च वादिनः ।
मिलन्त्येव कलाः सर्वाः कथयन्त्यनुमानतः ॥७९॥

आज्ञापयत्वत्र गुरो ! किं युक्तं वादिनां मतम् ?
यदि नास्ति मतं तत्तु किं स्याद् युक्तं हि शास्त्रतः ? ॥८०॥

---

२७. तानि परे तथा ह्याह । – ब्रह्मसूत्रम् ४।२।७।१५

गुरुः –

अविभक्ताः कलाः सर्वा नामरूपाश्च शास्त्रतः[२८] ।
विनश्यत्यत्र जीवाऽऽत्मा सुस्थिरो ब्रह्मणि स्वतः ॥८१॥

ब्रह्मवित् तत्त्वतो वक्ति तमेव पुरुषं परम् ।
स एव निष्कलं तत्वं परं ब्रह्माऽमृतं हि तत् ॥८२॥

अविद्यायाः समुत्पन्नाः सर्वा वागादयः कलाः ।
भस्मीभवन्ति ज्ञानाग्नौ ज्ञानिनां तत्क्षणादिह ॥८३॥

अज्ञानिनां कला यान्ति सविशेषस्वरूपकाः ।
जायन्ते ते पुनर्जीवा नानायोनिषु कर्मतः ॥८४॥

अत्राऽधिकरणे सूत्रमेकं वक्ति प्रमाणतः[२९] ।
वागादयो दहन्त्यत्र ज्ञानी भवति ब्रह्मवित् ॥८५॥

## ९. तदोकोऽधिकरणाऽधिकरणम् (ब्रह्मसूत्रम् ४।२।९।१७)

शिष्यः –

परविद्याप्रसङ्गस्तु विगतस्तदनन्तरम् ।
पुनश्चापरविद्यायाः प्रसङ्गः समुपागतः ॥८६॥

गतिरुत्क्रान्तिमार्गान्ता विबुधाबुधयोः समा ।
दृष्टा तत्परमार्गस्तु भिन्नोऽस्ति परविद्यया ॥८७॥

उपासकस्य चान्यस्य समानाऽस्ति न वा ततः ।
उत्क्रान्तेरनुमार्गस्य गतिः सन्देह आगतः ॥८८॥

---

२८. भिद्येते तासां नामरूपे इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति । – प्रश्नोपनिषद् ६।५
२९. अविभागो वचनात् – ब्रह्मसूत्रम् ४।२।८।१६

वादिनः कथयन्त्यत्र हृत्प्रद्योतनकारणात् ।
विदुषोऽविदुषश्चापि तदुत्क्रान्तेः समानता ॥८९॥

विबुधाऽबुधयोर्विद्वन् ! किमुत्क्रान्तिः समा भवेत् ?
समाना नास्ति चेद् वक्तु कथं सा विषमाऽस्त्यहो ! ॥९०॥

शिष्यः –
विबुधाऽबुधयोरेकं हृदयाग्रप्रदीपकम्[३०] ।
शिरः प्रद्योतते नाड्या हृदयस्याग्रभागतः ॥९१॥

विद्वान् प्रमुच्यते मूर्ध्नो यद्वा कर्णाक्षिनासिकैः ।
मुखाद्वाऽविदुषः प्राणा अन्यमार्गात् प्रयान्ति च ॥९२॥

नाड्यो हृदयवर्तिन्यः शतञ्चैकाऽभिवर्तते[३१] ।
द्वासप्ततिसहस्राणि नाड्योऽन्या देहमध्यतः ॥९३॥

तेषां मध्ये गता सैका नाडी मूर्धानमास्थिता ।
तेन मार्गेण निर्याति ब्रह्मज्ञोऽमृतमश्नुते ॥९४॥

अन्यनाडी माध्यमेनाऽविद्वांसो यान्ति बाह्यतः ।[३२]
जायन्ते ते पुनर्लोके स्वकर्मफलभोगिनः ॥९५॥

अतो हि विदुषामेवमुत्क्रान्तिर्गतिरुत्तमा ।
अन्यापेक्षा विशिष्टाऽस्ति श्रुतिरुद्गिरति स्वयम् ॥९६॥

---

३०. तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः । – बृहदारण्यकोपनिषद् ४।४।२

३१. शतञ्चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका ।
तयोर्ध्वमायन्नमृतत्वमेति । – छान्दोग्योपनिषद् ८।६।६

३२. विष्वङ्ङन्या उत्क्रमणे भवन्ति । – छान्दोग्योपनिषद् ८।६।६

अत्राधिकरणे सूत्रमेकं वक्ति प्रमाणतः[३३] ।
शिरोद्वारेण (ब्रह्मरन्ध्रेण) निर्याति ज्ञानी त्वमृतमश्नुते ॥९७॥

## १०. रश्म्यधिकरणम् (ब्रह्मसूत्रम् ४।२।१०।१८–१९)

शिष्यः –
[३४]'अथ ये'ति सह श्रुत्या 'अथ यत्' श्रुतिना सह[३५] ।
[३६]'अथ यत्रै' 'तयो'राद्यैश्छान्दोग्य श्रुतिभिः सह[३७] ॥९८॥

सर्वासां सारमादाय समानाभिः सरीतिभिः ।
रात्रौ वा दिवसे याति ब्रह्मणा सह रश्मिभिः ॥९९॥

उत्क्रान्तौ दिवसे याता जीवः सूर्यस्य रश्मिभिः ।
रात्रौ वा स प्रयात्येवं जीवो रश्म्युदिते सति ॥१००॥

सन्देहोऽयं यदाऽऽयातः पूर्वपक्षा वदन्ति ते ।
रात्रावस्तमिते सूर्ये नास्तित्वं तस्य रश्मिणाम् ॥१०१॥

रश्मिभिः सह गन्तास्यादुत्क्रान्तिर्दिवसे यदि ।
रात्रौ चेत् न मुमुक्षोस्ते प्राणाः संयान्ति रश्मिभिः ॥१०२॥

रश्मिभिः सह सम्बन्धो नाडीनां दिवसे भवेत् ।
उत्क्रान्तिसमयो रात्रौ सम्बन्धो नैव रश्मिभिः ॥१०३॥

---

३३. तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया । – ब्रह्मसूत्रम् ४।२।९।१७
३४. अथ या एता हृदयस्य नाड्यः । – छान्दोग्योपनिषद् ८।६।१
३५. अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म । – छान्दोग्योपनिषद् ८।१।१
३६. अथ यत्रैदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते । – छान्दोग्योपनिषद् ८।६।५
३७. तयोर्ध्वमायन्नमृतत्वमेति । – छान्दोग्योपनिषद् ८।६।६

गुरो ! ऽधुना पूर्वपक्षं वादिनां मतमागतम् ।
युक्तं वाऽयुक्तमित्यत्र प्रमाणैरभिधीयताम् ॥१०४॥

गुरुः –
नाडीनां रश्मिसम्बन्धो दिने न भवतीत्यपि ।
वादिनां यन्मतं प्राप्तमस्वीकार्यं प्रविद्धि तत् ॥१०५॥

नाडीनां रश्मिसम्बन्धो यावज्जीवो भवत्यतः ।
नाडीनां रश्मिसम्बन्धाभावो रात्रौ च नास्त्य हो ! ॥१०६॥

अमुष्मादिति मन्त्रेण क्रियते रश्मिवर्णनम्[३८] ।
हेमन्ते शैशिरे वापि रश्म्यभावो न विद्यते ॥१०७॥

दिनतापं तु सूर्यो हि धरते च निशास्वपि[३९] ।
नाडीनां रश्मिसम्बन्धो भवति सार्वकालिकः ॥१०८॥

प्राणानामूर्ध्वमुत्क्रान्तिर्मुक्तस्य न विलम्बते[४०] ।
मनसो वेगतो यायादादित्यमुपतिष्ठते ॥१०९॥

निशायां वा दिने वा स्यादुत्क्रान्तौ ज्ञानिनां गतिः ।
रश्मिष्वेव भवेदेवं श्रुतिरुद्गिरति स्वयम् ॥११०॥

अत्राऽधिकरणे सूत्रद्वयं वक्ति विशेषतः[४१] ।
रात्रौ वापि दिने ज्ञानी मृतो याति स रश्मिभिः ॥१११॥

---

३८. अमुष्मादादित्यात्प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः । – छान्दोग्योपनिषद् ८।६।२
३९. अहरेवैतद्रात्रौ दधाति । – श्रुतिः
४०. स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छति । – छान्दोग्योपनिषद् ८।६।५
४१. रश्म्यनुसारी । – ब्रह्मसूत्रम् ४।२।१०।१८–१९

## ११. दक्षिणायनाऽधिकरणम् (ब्रह्मसूत्रम् ४।२।११।२०–२१)

शिष्यः –

योो दक्षिणायने ज्ञानी म्रियते सोऽपि निर्भ्रमः ।
ब्रह्मीभवति वा नैवाऽधुना सन्देग्धि मे मनः ॥११२॥

वादिनः कथयन्त्यत्र म्रियते चोत्तरायणे ।
स तु ब्रह्मीभवत्येव श्रुतिस्मृतिप्रमाणतः[४२, ४३]॥११३॥

भीष्मः प्रतीक्षते मर्तुं स यथैवोत्तरायणे ।
म्रियते चेन्न मुच्येत मोक्षार्थी दक्षिणायने ॥११४॥

हे ब्रह्मन्नत्र सन्देहे मोक्षार्थमुत्तरायणम् ।
आवश्यकमस्ति न वा स प्रमाणं प्रवक्तु माम् ॥११५॥

गुरुः –

उत्तरायणकालो वा यदि स्याद् दक्षिणायनः ।
प्राशस्त्यो ज्ञानिनामर्थे सर्वः कालः समोऽस्त्यपि ॥११६॥

स्मार्तोपासकभक्तानामुल्लेखास्ते दिनादयः ।
श्रौतोपासकजिज्ञासोः कृते तन्नियमो मृषा ॥११७॥

एतस्मात् कारणाद् विद्वान् यस्मिन् काले मृतेऽपि सः ।
स्वयं ब्रह्मीभवत्येव विद्यायाः फलमाप्नुयात् ॥११८॥

---

४२. आपूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान् । – छान्दोग्योपनिषद् ४।१५।५

४३. यत्र काले त्वनावृत्तिमावृत्तिञ्चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ – श्रीमद्भगवद्गीता ८।२३

[44]'अग्निर्ज्योति'रादिमन्त्रा अग्निहोत्रार्थमागताः ।
तानि वाक्यानि कर्मार्थं ज्ञानिनां तदुपेक्षते ॥११९॥

स्वपितुः शन्तनोः ख्यात्यै भीष्मप्रसङ्ग आगतः ।
मुक्त्यर्थं तस्य नोल्लेखो भीष्मकालः प्रशंसितः ॥१२०॥

उत्तरायणकालोऽयमातिवाहिकदैवतः ।
[45]'आतिवाहिकास्तल्लिङ्गा' इति सूत्रे प्रदर्शितः ॥१२१॥

'आतिवाहिकशब्दोऽयं स्मृतिशास्त्रेऽपि दृश्यते ।
लोकान्तरप्रयाणार्थं देवतां स्मारयत्यपि ॥१२२॥

श्रुतौ स्मृतौ नैव दृष्टो विरोधोऽस्य प्रसङ्गतः ।
फलं जानीहि विद्याया ब्रह्मप्राप्तिर्न संशयः ॥१२३॥

अत्राधिकरणे [46]सूत्रद्वयमस्ति मतैक्यतः ।
मुक्तिविद्याफलं ज्ञेयं विद्ययाऽमृतमश्नुते ॥१२४॥

ब्रह्मसूत्रे कारिकायां चतुर्थाध्यायवर्णितः ।
मया द्वितीयपादोऽपि समनूद्य समापितः ॥१२५॥

॥ इति चतुर्थेऽध्याये द्वितीयः पादः ॥

---

४४. अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ॥ – गीता ८।२४,२५

४५. आतिवाहिकास्तल्लिङ्गात् । – ब्रह्मसूत्रम् ४।३।४।४

४६. अतश्चायनेऽपि दक्षिणे । – ब्रह्मसूत्रम् ४।२।११।२०,२१

ॐ तत्सद्ब्रह्मणे नमः

अथ ब्रह्मसूत्रकारिकायां

# चतुर्थेऽध्यायः तृतीयः पादः

(अस्मिन् पादे अर्चिराद्यधिकरणादप्रतीकालम्बनसहितानि षडधिकरणानि सन्ति। एतेष्वधिकरणेषु सगुणोपासकानां भक्तानामुत्तरगतिवर्णनं विहितम्।)

## १. अर्चिराद्यधिकरणम् (ब्रह्मसूत्रम् ४।३।१।१)

शिष्यः –

उपाक्रामति यं मार्गं स उत्क्रान्तिसमानकः।
परन्तु विविधा मार्गाः श्रुतिशास्त्रेण वर्णिताः ॥१॥

'अथैतैः'[१] 'तेऽर्चिषम्'[२] 'सूर्यः'[३] 'स एतम्'[४] 'च' 'यदा'[५] इति।
शब्दप्रोच्चारिता मार्गाः श्रुतिशास्त्रेण वर्णिताः ॥२॥

किं ते परस्परं भिन्ना मार्गाः ? सन्देग्धि मे मनः।
किं वा सर्वे समा मार्गा अभिन्ना एकरूपकाः ॥३॥

वादिनः कथयन्त्यत्र पन्थानस्ते विभिन्नकाः।
भिन्ना उपासनार्थाङ्गा भिन्नप्रकरणात्मकाः ॥४॥

---

१. अथैतैरेव रश्मिभिरूर्ध्वं आक्रमते। – छान्दोग्योपनिषद् ८।६।५
२. तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहः। – बृहदारण्यकोपनिषद् ६।२।१५
३. सूर्यद्वारेण ते विरजाः प्रयान्ति। – मुण्डकोपनिषद् १।२।११
४. स एतं देवयानं पन्थानमासाद्याग्निलोकमागच्छति। – कौषीतकिब्राह्मणोपनिषद् १३
५. यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति। – बृहदारण्यकोपनिषद् ५।१८।१

‘अथैतैः’[६] सह मन्त्रेण ‘स यावत्’[७] श्रुति संयुताः ।
विभिन्न मार्गाः सन्त्यत्र त्वरावाक्येन गृह्यते ॥५॥

गुरुः –
ब्रह्मणः प्रेप्सवो यान्ति अर्चिरादिकमार्गतः ।
योऽस्ति पञ्चाग्निविद्यायां ‘योऽचामी’ श्रुतिशंसितः[८] ॥६॥

विशेषणविशिष्टं तद् वैदग्धपदभूषितम् ।
तथापि ब्रह्म गन्तव्यं मार्ग एकोऽस्ति शास्त्रतः ॥७॥

विद्याप्रकरणं भिन्नं भिन्नानि कथितान्यपि ।
प्रत्यभिज्ञानमात्रेण गन्तव्यं चैकमार्गतः ॥८॥

गन्तव्यस्य न भेदोऽस्ति भेदो गतिषु नास्ति च ।
‘तेषु’ श्रुतिर्वदति च न भेदो ब्रह्ममार्गणे[९] ॥९॥

ब्रह्मलोकं गतो ब्रह्माऽऽकल्पान्तं तत्र तिष्ठति ।
मुक्त ब्रह्मणि सर्वेऽन्ये विमुक्तास्ते प्रयान्ति च ॥१०॥

ब्रह्म भूत्वा स्वयं याति पृथिव्यां न निवर्तते
सैषाऽस्ति ज्ञानिनां मुक्तिः श्रुतिरुद्गिरति स्वयम् ॥११॥

---

६. अथैतैरेव रश्मिभिः । – छान्दोग्योपनिषद् ८।१८।१
७. स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छति । – छान्दोग्योपनिषद् ८।६।५
८. येऽचामी अरण्ये श्रद्धां सत्यमुपासते । – बृहदारण्यकोपनिषद् ६।२।१५
९. क. तेषु ब्रह्मलोकेषु पराःपरावतो वसन्ति । – बृहदारण्यकोपनिषद् ६।२।१५
   ख. तस्मिन् वसन्ति शाश्वतीःसमाः । – बृहदारण्यकोपनिषद्
   ग. न च पुनरावर्तते । – छान्दोग्योपनिषद् ८।१५।१
   घ. तेषां न पुनरावृत्तिः । – बृहदारण्यकोपनिषद् ६।२।१५

अर्चिरादेरपेक्षायां गन्तव्ये याति सत्वरम् ।
क्षिप्रतार्थं समायाति न तस्मादन्यथा भवेत् ॥१२॥

जयो भवति सर्वत्र स तु ब्रह्मासमोऽस्ति हि[१०] ।
स याति ब्रह्मचार्येव ब्रह्मलोकं विनिर्भयः[११] ॥१३॥

उत्क्रान्तिमार्गौ द्वौ दृष्टावर्चिर्धूमौ विचारितौ[१२] ।
अनयोर्यो न यात्येवं तस्य स्थानं तृतीयकम् ॥१४॥

अर्चिरादौ वेदमार्गैः सन्ति पर्वाण्यनेकशः ।
वर्णिताः सन्ति नान्यत्र मार्गा दृष्टा अनेकशः ॥१५॥

'भूयसां चानुगुण्येन अल्पीयसा'मिति श्रुतः ।
न्यायो यदि गृहीतः स्यात्तेन संसूचितोऽस्ति च ॥१६॥

अत्राधिकरणे सूत्रं ब्रह्ममार्गाऽवबोधकम्[१३] ।
एक एवाऽर्चिमार्गोऽस्ति ब्रह्मप्राप्तिकरो भृशम् ॥१७॥

---

१०. सा या ब्रह्मणो जितिर्या व्युष्टिस्तां जितिं जयति तां व्युष्टिं व्यश्नुते ।
– कौषीतकिब्राह्मणोपनिषद् १।४

११. तद् य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दति । – छान्दोग्योपनिषद् २।४।३

१२. अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येत्तृतीयं स्थानम् । – छान्दोग्योपनिषद् ५।१०।८

१३. अर्चिरादिना तत्प्रथितेः । – ब्रह्मसूत्रम् ४।३।१।१

## २. वाय्वधिकरणम् (ब्रह्मसूत्रम् ४ ।३।२।२)

शिष्यः –

शंसनं वायुलोकस्य 'स एतम्' कुरुते श्रुतिः[१४] ।
तथा निवेशनं वायोः 'तेऽर्चिषम्' कुरुते न हि[१५] ॥१८॥

वायोरुल्लेखमपि च 'यदा वै' कुरुते श्रुतिः[१६] ।
इत्थं विभिन्न श्रुतिषु भिन्नता समुपागता ॥१९॥

अर्चिरादिकमार्गेऽपि दृश्यते वायुसंक्रमः ।
एष भ्रमः समुत्पन्नो दृश्यते क्वापि न क्वचित् ॥२०॥

अर्चिरादिकमार्गेऽपि किं वायोः सन्निवेशनम् ?
अथवा किं न भवति सन्देग्धि हृदयं मम ॥२१॥

वादिनः कथयन्त्यत्र वायुलोकस्य संक्रमः ।
तदभावो भवत्यत्र सुस्पष्टं दृश्यते श्रुतौ ॥२२॥

अर्चिरादौ न भवति तद्धेतोर्वायुसंक्रमः ।
श्रुतौ विरुध्यते तस्य क्रमोऽत्र न मिलत्यपि ॥२३॥

आज्ञापयत्वत्र गुरो ! किं वायोरर्चिसंक्रमः ?
वायुमार्गे सन्निवेशो भवति तस्य वा न वा ? ॥२४॥

---

१४. स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम् । – कौषीतकिब्राह्मणोपनिषद् १।३

१५. तेऽर्चिषमेवाभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुङ्ङेति मासांस्तान् मासेभ्यः संवत्सरं संवत्सरादादित्यम् । – छान्दोग्योपनिषद् ५।१०।१,२

१६. यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति ।

–बृहदारण्यकोपनिषद् ५।१०।१

गुरुः –

अर्चिरादौ तत्र मार्गे वायोरस्ति निवेशनम् ।
श्रुति'र्यदा वै' कुरुते सुस्पष्टं तस्य शंसनम् ॥२५॥

वायोश्छिद्रान्निर्गतोऽयं जीवः संयाति वस्तुतः ।
आदित्यमण्डले सत्यं दृश्यते श्रुतिसम्मतम् ॥२६॥

तस्मिन् मार्गे देवयाने 'स एतम्' वदति श्रुतिः ।
अग्निवायुः क्रमाद् ज्ञानी संयाति वरुणालयम् ॥२७॥

पौर्वापर्यविचारेण क्रमोल्लेखो न दृश्यते ।
क्रमावस्थितपाठेन बुध्यते तच्छ्रुतौ न हि ॥२८॥

वायुप्रदत्तं यच्चाऽस्ति रथचक्रसमानकम् ।
स्वयमुद्गमते छिद्रादादित्यमुपतिष्ठति ॥२९॥

स्मृत्वा चैनं क्रमं चान्या श्रुतिरुद्गिरति स्वयम् ।
अविशेषकरूपेण विशेषक्रम इष्यते ॥३०॥

वाजसनेया ब्रुवते मासं देवायने स्थितिः[१७] ।
ततोऽर्चिरादिमार्गेण चादित्यमुपतिष्ठति ॥३१॥

यावत्संवत्सरं ज्ञानी वायुलोकं प्रतिष्ठति[१८] ।
सैष क्रमो दृश्यतेऽत्र श्रुतिः संवदति स्वयम् ॥३२॥

उल्लेखो देवलोकस्य छान्दोग्ये नैव दृश्यते ।
सम्वत्सरसमुल्लेखो बृहदारण्यकेऽपि न ॥३३॥

---

**१७. मासेभ्यो देवलोकं देवलोकादादित्यम् । – बृहदारण्यकोपनिषद् ६।२।१५**
**१८. वायुमब्दात् । – छान्दोग्योपनिषद्**

सम्वत्सरं गृहीत्वाऽऽद्यं देवलोकं प्रयाति च ।
सन्निवेशक्रमाद्याति सोऽर्चिरादिकमार्गतः ॥३४॥

इत्थमत्र विवेकेन तद्वायोरर्चिरादिषु ।
सन्निवेशो भवत्येव ज्ञानिनोऽप्यर्चिरादिषु ॥३५॥

अत्राधिकरणे सूत्रमेकं वक्ति क्रमादिह[१९] ।
वायुलोके पूर्वमेति देवलोकं प्रयात्यतः ॥३६॥

### ३. तडिदधिकरणम् (ब्रह्मसूत्रम् ४।३।३।३)

शिष्यः –
अर्चिरादिकमार्गेषु वरुणस्य निवेशनम् ।
सन्दिग्धं हृदयं मेऽत्र विद्यते वा न विद्यते ॥३७॥

वायुतुल्यो न दृष्टोऽयं तदत्र श्रुतिशंसनम् ।
अतो वादी कथयति वरुणस्य न वेशनम् ॥३८॥

आज्ञापयत्वत्र गुरो मार्गे तत्राऽर्चिरादिके ।
वरुणस्याऽस्ति किं स्थानं शास्त्रं किं वक्ति हे गुरो ! ॥३९॥

गुरुः –
प्रथमाऽऽदित्यचन्द्राभ्यां पश्चात् क्रमोऽस्ति विद्युतः[२०] ।
अर्चिरादिकमार्गस्य वर्णनं कुरुते श्रुतिः ॥४०॥

विद्युत्सम्बन्धिवर्षायाः ख्यातो वरुणदेवता ।
अचिरादिकमार्गेऽस्य विद्यते सन्निवेशनम् ॥४१॥

---

१९. वायुमब्दादविशेषविशेषाभ्याम् । – ब्रह्मसूत्रम् ४।३।२।२
२०. आदित्याच्चन्द्रमसम् । – छान्दोग्योपनिषद् ४।१५।५

विद्युन्मार्गेण ब्रह्मज्ञो लोकमायाति वारुणम् ।
दृष्टोऽर्चिरादिके मार्गे वरुणस्येदृशोऽस्ति हि ॥४२॥

यदा विद्योतते विद्युत् मेघो गर्जति घर्घरम्[२१] ।
वर्षत्याकाशतो भूमौ वृष्टिर्झरति झर्झरम् ॥४३॥

तदित्थं जलदेवोऽस्ति वरुणोऽस्त्यपि जानती ।
इन्द्रादिश्रुतिः कुरुते शंसनं वरुणोपरि ॥४४॥

अन्यत् स्थानविशेषं तु वरुणार्थं न दृश्यते ।
आगन्तुकत्वात् तस्यार्थं स्थानमस्त्येतदन्तिमम् ॥४५॥

तदित्थं श्रुतिशास्त्रस्य विहिते परिशीलने ।
अर्चिरादिकमार्गेऽस्ति विद्युत्स्थानं तदन्तिमम् ॥४६॥

अत्राधिकरणे सूत्रमेकं वक्ति विशेषतः[२२] ।
अर्चिरादिक्रमे विद्युत् ततोऽस्ति वरुणोऽन्तिमे ॥४७॥

## ४. आतिवाहिकाधिकरणम् (ब्रह्मसूत्रम् ४।३।४।४–६)

शिष्यः –
अर्चिराद्या मार्गचिह्नं ? भोगभूमेः किमस्ति वा ।
ब्रह्मलोकप्रणेतारस्ते किं वा शङ्कितं मनः ॥४८॥

वादिनः कथयन्त्यत्र मार्गचिह्नास्तदर्चिषः ।
स्वरूपतो ग्रामतुल्या उपदिष्टास्तदर्चिषः ॥४९॥

---

२१. विद्योतते स्तनयति वर्षिष्यति वा । – छान्दोग्योपनिषद् ७।११।१
२२. तडितोऽधि वरुणः सम्बन्धात् । – ब्रह्मसूत्रम् ४।३।३।३

अर्चिषो हि समुद्गम्य दिवसे शुक्लपक्षके ।
ब्रह्मलोकं नयत्येव नेता तं ब्रह्मवित्तमम् ॥५०॥

किं भोगभूमयस्ते स्युरग्निलोकाश्तदर्चिषः[२३] ।
आतिवाहिकनेतारस्ते कथं स्युरचेतनाः ? ॥५१॥

आज्ञापयत्वत्र गुरो ! वादिनां मतमागतम् ।
तेऽर्चिराद्या हि सकला भवेयुर्वाऽऽतिवाहिकाः ॥५२॥

गुरुः –
अर्चिराद्या हि ते सर्वे जीवाः सन्त्याऽऽतिवाहिकाः ।
ब्रह्मलोके तत्पुरुषस्थाने ते हि नयन्त्यथ[२४] ॥५३॥

मूर्च्छिता ज्ञानिनाः सर्वे यान्ति मार्गेऽर्चिरादिके ।
येऽर्चिराद्येऽधिसंयान्ति वस्तुतस्ते ह्यचेतनाः ॥५४॥

एतस्मात् कारणाद् ये ते देवता आभिमानिकाः ।
आतिवाहिकरूपास्ते ज्ञं नयन्त्यर्चिरादिके ॥५५॥

नैव ते मार्गचिह्नानि सौलभ्या दिनरात्रिषु[२५] ।
भोगार्थमसमर्थास्ते कथं स्युर्भोगभूमयः ॥५६॥

विद्युल्लोकं गमयति ज्ञानिनं सर्वदेवताः ।
तत्पुरुषः समागत्य वारुणं च नयत्यपि ॥५७॥

---

२३. क. अग्निलोकमागच्छति । – कौषीतकिब्राह्मणोपनिषद् १।३
ख. मनुष्यलोकः पितृलोको देवलोकः । – बृहदारण्यकोपनिषद् १।५।१६
२४. चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान्ब्रह्म गमयति ।
– छान्दोग्योपनिषद् ४।१५।५
२५. अहोरात्रेषु ते लोकेषु सज्जन्ते । – शतपथब्राह्मणम्

ततोऽपि तं तत्पुरुषो ब्रह्मलोकं नयत्यपि[२६] ।
अमानवस्तत्पुरुषो नेता वेदजुघोषितः ॥५८॥

अर्चिराद्या हि ते मार्गा आतिवाहिकदेवताः ।
सिद्धान्त एष सिद्धोऽभूत् श्रुतिरुद्घोषितो भृशम् ॥५९॥

अत्राधिकरणे सूत्रत्रितयेनार्चिरादिकाः[२७] ।
आतिवाहिकदेवास्ते सन्तीत्युक्ता यथार्थतः ॥६०॥

## ५. कार्याधिकरणम् (ब्रह्मसूत्रम् ४।३।५।७–१४)

शिष्यः –

अर्चिरादिकमार्गैर्ये यान्ति ब्रह्मविदो हि ते ।
अपरब्रह्मणि यान्ति वा परब्रह्मणि क्व ते ॥६१॥

संशयेऽत्र समापन्ने 'गति'शब्देन वादिनः ।
अपरं ब्रह्म नयति बादरिर्वक्ति तन्मतम् ॥६२॥

भणन्ति वादिनोऽन्येऽपि तेऽर्चिरादिकमार्गगाः ।
सत्परब्रह्मणि यान्ति तेषां तत्पदमन्तिमम् ॥६३॥

यतो हि 'ब्रह्म' शब्देन सत् परब्रह्म कथ्यते ।
आज्ञापयत्वत्र विद्वन् ! ब्रह्म तद् वाचकं पदम् ? ॥६४॥

गुरुः –

'ब्रह्मलोकानिति' पदं गतियुक्तं विशेषणम्[२८] ।
अतोऽपरं ब्रह्म याति परं ब्रह्म नयात्यतः ॥६५॥

---

२६. स एतान् ब्रह्म गमयति । – छान्दोग्योपनिषद् ४।१५।६
२७. आतिवाहिकस्तल्लिङ्गात् । – ब्रह्मसूत्रम् ४।३।४।४–६
२८. स एतान्ब्रह्म गमयति । – छान्दोग्योपनिषद् ४।१५।५

प्रलयान्ते यदा ब्रह्मा मुक्तो भवति ते तदा[२९] ।
ब्रह्मणा सह ते ब्रह्मविदो मुक्ता भवन्त्यपि ॥६६॥

अवाङ्मनो गोचरेऽत्र न गतिर्याति ब्रह्मणि ।
'अस्थूला'दि पदैः श्रुत्या तत्र सर्वं निषिध्यते[३०] ॥६७॥

तस्य कार्यब्रह्मणोऽपि प्राप्तिः स्याद् वदति श्रुतिः[३१] ।
मायाविकारो हि कार्यब्रह्मणि जायते गतिः ॥६८॥

नामरूपादिगतयः शून्या निर्गुणब्रह्मणि[३२] ।
श्रुतिरुद्घोषति व्याप्तं नीलं खमिव सर्वतः[३३] ॥६९॥

सायुज्यात् समरूपत्वात् ब्रह्मा ब्रह्म जुद्योषितः ।
अन्यथाऽज पदासीनो ब्रह्मा सामान्यदेववत् ॥७०॥

व्यापकं तत् परं ब्रह्म सुलभं ज्ञानिनां कृते ।
सह कार्यब्रह्मणा ते मुक्ता भवन्ति ज्ञानिनः ॥७१॥

---

२९. ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परम्पदम् ॥ – कूर्मपुराणम् १।१२।२६९
३०. अस्थूलमनण्वह्रस्वमदीर्घम् । – बृहदारण्यकोपनिषद् ३।८।८
३१. प्रजापतेः सभां वेश्म प्रपद्ये । – छान्दोग्योपनिषद् ८।१४।१
३२. नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म । – छान्दोग्योपनिषद् ८।११
३३. क. आकाशवत्सर्वगतश्च नित्यः । – श्रुतिः
ख. यत्साक्षादपरोक्षाद् ब्रह्म । – बृहदारण्यकोपनिषद् ३।४।१
ग. य आत्मा सर्वान्तरः । – बृहदारण्यकोपनिषद् ३।४।१
घ. आत्मैवेदं सर्वम् । – छान्दोग्योपनिषद् ७।२५।२
ङ. ब्रह्मैवेदं विश्वमिदं वरिष्ठम् । – मुण्डकोपनिषद् २।२।११

अत्राधिकरणे सूत्रमष्टकं वक्ति साम्प्रतम्[३४] ।
ज्ञानिना. ब्रह्म संयान्ति ते कार्यब्रह्मणा सह ॥७२॥

## ६. अप्रतीकालम्बनाधिकरणम् (ब्रह्मसूत्रम् ४।३।६।१५–१६)

शिष्यः –
यावत् कार्यब्रह्मगतिः सद्ब्रह्मणि गतिर्न हि ।
सिद्धं गुरो ! ऽ त्र पृच्छामि प्रतीकोपासनामपि ॥७३॥

अमानवस्तत्पुरुषः प्रतीकोपासकानपि ।
किं ब्रह्मलोकं नयति ? सन्देग्धि हृदयं पुनः ॥७४॥

उपासकगतिः कार्यब्रह्मान्तं भवतीत्यपि ।
वादिनः कथयन्त्यत्र 'सर्वाषाम्' सूत्रतोऽधुना[३५] ॥७५॥

सूत्रानुसारं सामान्या ये विद्यां समुपासते ।
ब्रह्मलोकं प्रयान्त्येव तत्र तत्पुरुषं प्रति ॥७६॥

इत्थमत्र गुरो ! वक्तु तत्प्रतीकमुपासकाः ।
किमर्चिराद्यैर्मार्गैस्ते ब्रह्मलोकं प्रयान्ति किम् ? ॥७७॥

गुरुः –
प्रतीकोपासकानेतान् तत्पुमर्थोऽप्यमानवः ।
ब्रह्मलोकं न नयति न्यायतो विद्धि 'तं यथा'[३६] ॥७८॥

---

३४. कार्यं बादरिरस्य गत्युपपत्तेः । – ब्रह्मसूत्रम् ४।३।५।७–१४
३५. अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् । – ब्रह्मसूत्रम् ३।३।१८।३१
३६. तं यथा यथोपासते तदेव भवति । – न्यायः

यद् ब्रह्मभावनारूपं ब्रह्म प्राप्त्यर्थकं क्रतुः ।
ब्रह्मावाप्तौ ज्ञानिनां तन्मुख्यं हेतुर्निगद्यते ॥७९॥

ये प्रतीकोपासकास्ते न ब्रह्मक्रतवः परम् ।
ब्रह्मलोकं प्रगन्तुं च योग्यपात्राणि नैव ते ॥८०॥

परं पञ्चाग्निविद्याया यान् बुधान् समुपासकान् ।
श्रुतिरेवं शंसति स नयत्येवातिवाहिकः[३७] ॥८१॥

विभिन्नश्रुतिवाक्यानि प्रमाणानि विचारयन्[३८] ।
ब्रह्मलोकं न प्रयाति बुद्ध्यते तदुपासकाः ॥८२॥

उपासनाफलं यादृग् भुञ्जते तदुपासकाः ।
प्रतीकोपासकस्तादृ गुपास्ते र्विन्दते फलम् ॥८३॥

[३९]सूत्र द्वयं प्रवक्त्यत्र यत्प्रतीकमुपासकाः ।
ब्रह्मलोकं न प्रयान्ति यान्ति ब्रह्मविदो जनाः ॥८४॥

ब्रह्मसूत्रे कारिकायां चतुर्थाध्यायवर्णितः ।
पादस्तृतीयोऽप्यत्रैव समनूद्य समापितः ॥८५॥

॥ इति ब्रह्मसूत्रकारिकायां चतुर्थाध्याये तृतीयः पादः ॥

---

३७. स एनान् ब्रह्म गमयति । – छान्दोग्योपनिषद् ४।१५।५

३८. क. यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति । – छान्दोग्योपनिषद् ७।१।५
ख. वाग्वाव नाम्नो भूयसी । – छान्दोग्योपनिषद् ७।२।१
ग. यावद् वाचो गतं तत्राऽस्य यथाकामचारो भवति । – छान्दोग्योपनिषद् ७।२।२
घ. मनो वाव वाचो भूयः । – छान्दोग्योपनिषद् ७।३।१

३९. अप्रतीकालम्बनान्नयतीति बादरायण उभयथादोषात्तत्क्रतुश्च ।
– ब्रह्मसूत्रम् ४।३।६।१५–१६

ॐ तत्सद्ब्रह्मणे नमः

अथ ब्रह्मसूत्रकारिकायां

# चतुर्थेऽध्याये चतुर्थः पादः

(अस्मिन् पादे सम्पद्याविर्भावाधिकरणदारभ्य जगद्व्यापाराधिकरणान्तानि सप्ताधिकरणानि सन्ति । एतेष्वधिकरणेषु ब्रह्मप्राप्तेर्ब्रह्मलोकस्थितेश्च निरूपणं विहितमस्ति ।)

## १. सम्पद्याविर्भावाधिकरणम् (ब्रह्मसूत्रम् ४।४।१।१–३)

शिष्यः –

ज्ञानी जीवो यदा देहात् प्रस्थानं कुरुते ततः[1] ।
हित्वा देहात्मभावं स स्वयं ब्रह्माधितिष्ठति ।।१।।

मुक्तिः स्वरूपं किमुत किं वा काम्योऽस्ति स्वर्गवत् ?
प्राचीना वा नवीना किं ? मुक्तिः सन्देग्धि मे मनः ।।२।।

गृहीत्वा चाऽभिनिष्पत्तिं सन्देहे सति वादिनः ।
उत्पत्तियुक्तं ब्रुवते मुक्तिं तत्फलशंसनम् ।।३।।

गुरुः –

आत्मस्वरूपमात्रेण मुक्तिराविर्भवेदिह ।
लभ्यते नान्यधर्मात् सा सुस्पष्टं वदति श्रुतिः ।।४।।

‘स्वेन रूपेणे’ति वाक्ये स्वशब्दो यः समागतः ।
तत्त्वतस्तेन जानीहि प्राचीना मुक्तिरित्यतः ।।५।।

---

१. एवमेवैष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रुपेणाऽभिनिष्पद्यते । – छान्दोग्योपनिषद् ८।१२।३

अभिनिष्पत्तिरित्यर्थमाविर्भावोऽस्ति बुध्यते ।
अज्ञानध्वंसिते पश्चान्मुक्तिस्तस्य फलं स्वतः ॥६॥

अशरीरः शुद्ध आत्मा स्पृश्यते न प्रियाऽप्रियैः[२] ।
यतो [३]पापविनिर्मुक्त आत्माऽस्ति श्रुतिशंसितः ॥७॥

अभिनिष्पत्तिरुत्पत्तिरुभौ पर्यायवाचकौ ।
शब्दार्थवाहकौ चैतौ पूर्वावस्थाद्यपेक्षया ॥८॥

निवृत्तरोगो मनुजो यथाऽरोगी भवत्यतः ।
[३]पाप्मादिदोषनिर्मुक्तो मुमुक्षुर्मुच्यते स्वतः ॥९॥

अत्र प्रकरणप्राप्त आत्मा ज्योतिर्भवत्यतः ।
'तद् देवा ज्योतिषां' श्रुत्या ह्यात्मा ज्योतिर्निगद्यते[४] ॥१०॥

नैतज्ज्योतिर्भौतिकं हि प्रकृतं चापि हीयते[५] ।
आगत्याऽप्रकृतं तत्र स्वार्थं व्यर्थायते पुनः ॥११॥

नवीना नास्ति सन्मुक्तिः सिद्धा चैषा सनातनी ।
नाऽस्थिरा स्वर्गतुल्याऽस्ति मुक्तिरेषा निरञ्जना ॥१२॥

अत्राधिकरणे सूत्रत्रयं वक्ति समन्ततः[६] ।
प्राचीना मुक्तिरस्त्येषा नवीना नास्ति स्वर्गवत् ॥१३॥

---

२. अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः । – छान्दोग्योपनिषद् ८।१२।१

३. य आत्माऽपहतपाप्मा । – छान्दोग्योपनिषद् ८।७।१

४. क. परं ज्योतिरूपसम्पद्य । – छान्दोग्योपनिषद् ८।१२।३
ख. तद्देवा ज्योतिषां ज्योतिः । – बृहदारण्यकोपनिषद् ४।४।१६

५. प्रकृतहान्यप्रकृतप्रक्रियाप्रसङ्गात् । – शाङ्करभाष्यम्, ब्रह्मसूत्रम् ४।४।१।३

६. सम्पद्याविर्भावः स्वेनशब्दात् । – ब्रह्मसूत्रम् ४।४।१।१–२

## २. अविभागेन दृष्टत्वाधिकरणम् (ब्रह्मसूत्रम् ४ ।४।२।४)

शिष्यः –

परं ज्योतित्वेन प्राप्तं स्वरूपोत्पत्यनन्तरम् ।
ब्रह्मविद् ब्रह्मणश्चैको पृथग् वा तदनन्तरम् ॥१४॥

ब्रह्मविदविभागेन वा परात्मस्वरूपतः ।
बह्मणि विद्यते किं वा सन्देहः पुनरागतः ॥१५॥

श्रुतिं 'स तत्र पर्येति' गृहीत्वा पूर्वपक्षिणः[७] ।
द्वैतभावं समाश्रित्य स्वात्मन्यस्ति वदन्त्यपि ॥१६॥

अधिकारणभावेनाऽधिकर्तव्यस्य कर्मणः ।
निर्देशनादेव ज्योतिः संप्राप्नोतीह ब्रह्मवित्[८] ॥१७॥

अत्र श्रुतिर्निर्दिशति कर्मकर्तु र वस्थितिम् ।
जीवः पृथगवस्थानं स्वात्मन्येव प्रकल्पयेत् ॥१८॥

आत्माजीवौ पृथगिति हे गुरो ! मतमागतम् ।
आज्ञापयत्वत्र सत्यं किं जीवः पृथगात्मनः ? ॥१९॥

गुरुः –

एकरूपेण वसति मुक्तात्मा परमात्मनि ।
[९]'त्वमेवाऽऽत्मा तत्वमसि' [१०]श्रुतिरेवं वदत्यपि ॥२०॥

---

७. स तत्र पर्येति । – छान्दोग्योपनिषद् ८।१२।३
८. ज्योतिरूपसम्पद्य । – छान्दोग्योपनिषद् ८।१२।३
९. अभयं वै जनक प्राप्तोऽसि । – बृहदारण्यकोपनिषद् ४।२।४
१०. तत्त्वमसि । – छान्दोग्योपनिषद् ६।८।७

[11]'ब्रह्मैव भूत्वा वसति नान्यज्जीवोऽभिपश्यति[12] ।
तत्राऽन्यद्द्वितयं नास्ति जीवोऽन्यं नैव पश्यति[13] ॥२१॥

यथा शुद्धे जले चान्यद् जलं शुद्धं विमिश्रितम् ।
एकरूपेण मिलति शुद्धं स्वच्छं विनिर्मलम्[14] ॥२२॥

ब्रह्मवेत्तुर्मुनेरात्मा तथैवैकत्वमाश्रितः ।
तिष्ठत्यद्वैतभावेन दृष्टान्तान् वदति श्रुतिः ॥२३॥

आगतो भेदनिर्देश आत्माऽभेदस्थितोऽप्यतः ।
भेदस्त्वौपाधिको दृष्टः सत्यमद्वैत दर्शनम् ॥२४॥

अपृच्छन्नारदो ब्रह्म कस्मिन्नस्ति प्रतिष्ठितम्[15] ।
सनत्कुमारः प्रोवाच स्वे महिम्नि प्रतिष्ठितम् ॥२५॥

यः स्वे महिम्नि रमते स्वात्मक्रीडो रतश्च यः[16] ।
भेदोपचारार्थमिदं श्रुतिवाक्यं प्रबोधताम् ॥२६॥

अत्राधिकरणे सूत्रमेकं वक्ति प्रमाणतः[17] ।
भेदो बाह्योपचारार्थमभेदः श्रुतिघोषितः ॥२७॥

---

११. अहं ब्रह्मास्मि । – बृहदारण्यकोपनिषद् १।४।१०
१२. यत्र नान्यत्पश्यति । – छान्दोग्योपनिषद् ७।२४।१
१३. न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत् । – बृहदारण्यकोपनिषद् ४।३।२३
१४. यथोदकं शुद्धे शुद्धमसिक्तं तादृगेव भवति ।
एवं मुनेर्विजानत आत्मा भवति गौतम ॥ – कठोपनिषद् ४।१५
१५. स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि । – छान्दोग्योपनिषद् ७।२४।१
१६. आत्मरतिरात्मक्रीडः । – छान्दोग्योपनिषद् ७।२५।२
१७. अविभागेन दृष्टत्वात् । – ब्रह्मसूत्रम् ४।४।२।४

## ३. ब्रह्माधिकरणम् (ब्रह्मसूत्रम् ४।४।३।५–७)

शिष्यः –

'स्वेन रूपेण' निष्पन्नः स्वं रूपमधितिष्ठति[१८] ।
सिद्धः स आत्मा त्वेतेन नाऽन्ये रूपे वितिष्ठति ॥२८॥

पाप्मादिदोषरहितः स आत्मा ब्रह्मरूपभाक् ।
सत्यकामादिसहितः स आत्मा बोधरूपधृक् ॥२९॥

तदित्थं श्रुतयः काश्चिन्निर्गुणं वर्णयन्त्यपि ।
'स तत्रादि श्रुतिः काश्चित् सगुणं वर्णयन्ति च[१९] ॥३०॥

एकस्मिन् समये तौ द्वौ मुक्तात्मा क्रमशोऽपि वा ?
आप्नोति किं वा नाऽऽप्नोति ? सन्देहः पुनरागतः ॥३१॥

वादिनः कथयन्त्यत्र तौ द्वौ सगुणनिर्गुणौ ।
एकक्षणे नाप्नुतस्तौ परस्परविरोधिनौ ॥३२॥

एतस्मात् क्रमशः प्राप्तौ सगुणं निर्गुणं द्वयम् ।
एकक्षणे नाप्नुतस्तद् द्वयं वदन्ति वादिनः ॥३३॥

तदत्र वदतु ब्रह्मन् पूर्वपक्षः सयुक्तिकः ?
अयुक्तश्चेत् तदा वक्तु सिद्धान्त उचितोऽस्ति कः ? ॥३४॥

---

**१८. स्वेन रूपेणाऽभिनिष्पद्यते स उत्तमः पुरुषः । – छान्दोग्योपनिषद् ८।१२।३**

**१९. स तत्र पर्येति जक्षन् क्रीडन् रममाणः । – छान्दोग्योपनिषद् ८।१२।३**

गुरुः –

अपहतत्वादिधर्मा ये सन्ति ते भेदकारकाः[२०] ।
शब्दा विकल्पा ये सन्ति ह्यात्मनो भेदकल्पकाः ॥३५॥

निवृत्तेः पाप्मनः पश्चादात्मा निष्पापमेति च ।
आत्मस्वरूपोऽस्ति सच्चित् सदाऽऽविर्भवतीत्यपि ॥३६॥

प्रज्ञानघन आत्माऽस्ति तस्माद्धेतोरपि स्वतः[२१] ।
सत्यकामत्वादिधर्माश्चिद्रूपेण वसन्त्यपि[२२] ॥३७॥

अनेका रतां नास्ति सूत्रं वदति ब्रह्मणि[२३] ।
आत्मैव बोधरूपेण सदाऽऽविर्भवतीत्यपि ॥३८॥

मुक्तात्मनि न तिष्ठन्ति सर्वज्ञत्वादिका गुणाः ।
अज्ञानस्य विनष्टत्वात् गुणास्तस्मिन् वसन्ति नो ॥३९॥

प्रमाताभेदतः क्वापि धर्मास्ते सविशेषकाः ।
मुक्तात्मनि वितिष्ठन्ति चैकस्मिन् समयेऽपि च ॥४०॥

अत्राधिकरणे सूत्रत्रयमस्ति वदत्यपि[२४] ।
गुणा ज्ञानिषु तिष्ठन्ति प्रमाताभेदकारणात् ॥४१॥

---

२०. य आत्माऽपहतपाप्मा । – छान्दोग्योपनिषत् ८।७।१

२१. एवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव ।
– बृहदारण्यकोपनिषद् ४।५।१३

२२. सत्यकामः सत्यसङ्कल्पः । – छान्दोग्योपनिषद् ८।७।१

२३. न स्थानतोऽपि परस्योभयलिङ्गम् । – ब्रह्मसूत्रम् ३।२।११

२४. ब्राह्मेण जैमिनिरूपन्यासादिभ्यः । – ब्रह्मसूत्रम् ४।४।३।५

## ४. सङ्कल्पाधिकरणम् (ब्रह्मसूत्रम् ४।४।४।८–९)

शिष्यः –

ज्ञानी सङ्कल्पमात्रेण स्वपित्रादीन् मिलत्यपि[२५] ।
श्रुतौ समागतः किन्तु गुरो ! संशय उत्थितः ॥४२॥

सङ्कल्पः केवलं हेतुः किं वा निमित्तकारणम् ।
सङ्कल्पेन सहाऽन्ये वा सन्ति ? संशय उत्थितः ॥४३॥

सङ्कल्पमात्रात् पितरः किं तत्र समुपस्थिताः ।
लौकिकं कर्मवत् किं वा निमित्तं तत्र कारणम् ? ॥४४॥

सङ्कल्पमात्रं मन्येत न भोगः पुष्कलो भवेत् ।
आशामोदकतुल्यं तद् भोगो निष्फलतामियात् ॥४५॥

भवानत्र प्रवदतु युक्तं किं वादिनां मतम् ?
अयुक्तं यदि तद् वक्तु सिद्धान्त उचितोऽस्ति कः ? ॥४६॥

गुरुः –

'सङ्कल्पमात्रात् पितरः समुत्तिष्ठन्ति' वाक्यतः ।
श्रुतौ पितृणां सुष्पष्टं शंसनं परिदर्शितम् ॥४७॥

अन्यं निमित्तं मन्येत तद् भवेत् श्रुतिबाधितम् ।
अज्ञानां ज्ञानिनां मध्ये सङ्कल्पे तद् विलक्षणम् ॥४८॥

सङ्कल्पस्याऽप्यबन्ध्यत्वादेतदस्ति सुनिश्चितम् ।
बुधोऽनन्याधिपो विद्वान् भवति श्रुतिनिश्चितः ॥४९॥

---

२५. स यदि पितृलोककामो भवति सङ्कल्पादेवाऽस्य पितरः समुत्तिष्ठन्ति ।
– छान्दोग्योपनिषद् ८।२।१

यथा राजा भवेल्लोक कामचारः सुनिश्चितः[२६] ।
तथैव विद्वान् सर्वत्र सङ्कल्पात् सिद्धिमेति च ॥५०॥

अत्राधिकरणे सूत्रद्वयं स्पष्टं प्रभाषते[२७] ।
सङ्कल्पादेव मुक्तात्मा ज्ञानी लोकान् समश्नुते ॥५१॥

## ५. अभावाधिकरणम् (ब्रह्मसूत्रम् ४।४।५।१०–१४)

शिष्यः –

सङ्कल्पादेव पितरः समुत्तिष्ठन्ति सर्वदा[२८] ।
इति सिद्धमुपर्येव श्रुतिवाक्यप्रमाणतः ॥५२॥

देहाभावेऽपि रमते जीवोऽयं ब्रह्मलोकगः[२९] ।
श्रुतिवाक्यं वदत्येवमाचार्याभ्यां सहैव हि ॥५३॥

प्राप्तव्या विदुषा तत्र ऐश्वर्यादिकसिद्धयः ।
कथं देहाद्यभावात् ताः प्राप्याः सन्देह आगतः ॥५४॥

वादिनः कथयन्त्यत्र निर्देह पुरुषे कथम् ?
सम्भवौ सदसद्भावौ चैककाले न सम्भवेत् ? ॥५५॥

अतः पुरुषभेदे तु चैककालेऽपि सम्भवेत ।
एकस्मिन् समय तस्मिन् पुंसि द्वौ नैव सम्भवौ ॥५६॥

---

२६. अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति । – छान्दोग्योपनिषद् ८।१।६
२७. सङ्कल्पादेव तु तच्छ्रुते । – ब्रह्मसूत्रम् ४।४।४।७
२८. सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति । – छान्दोग्योपनिषद् ७।२।१
२९. क. मनसैतान् कामान् पश्यन् रमते । – छान्दोग्योपनिषद् ८।१२।५
ख. य एते ब्रह्मलोके । – छान्दोग्योपनिषद् ८।१३।१

आज्ञापयत्वत्र गुरो ! किं युक्तं वादिनां मतम् ?
अयुक्तं यदि तद् वक्तु सिद्धान्त उचितोऽस्ति कः ? ॥५७॥

गुरुः –
सशरीरत्वसङ्कल्पं मुक्तात्मा कुरुते यदा ।
सत्यमायाति सङ्कल्पः जीवो देही भवत्यपि ॥५८॥

देहं नेच्छति चेज्जीवो देहभिन्नोऽपि जायते ।
सत्यसंकल्पकामत्वाद् विचित्रा भवति स्थितिः ॥५९॥

यथा दशाहयज्ञोऽपि विधिना यात्यहीनताम् ।
तथैव ज्ञानिनां देहो भावाऽभावो भवत्यपि ॥६०॥

यथा स्वप्नेऽपि देहस्याऽभावे वस्तु विजृम्भते ।
तथैव ज्ञानिनां मोक्षं लभ्यन्ते पितरोऽपि च ॥६१॥

यथा जाग्रति लभ्यन्ते पित्राद्याः कार्यकारणे ।
तथा मोक्षेऽपि लभ्यन्ते सङ्कल्पात् पितरस्तदा ॥६२॥

विषयेऽस्मिन् विरोधो न जाग्रत्स्वप्नस्य साम्यता ।
देहभावेऽप्यभावेऽपि मुक्तात्मा भोगमश्नुते ॥६३॥

अत्राधिकरणे सूत्रपञ्चकं विद्यते हि तत्[३०] ।
ज्ञानी सङ्कल्पमात्रेण पित्रादीन् परिलक्ष्यति ॥६४॥

---

३०. अभावं वादरिराह ह्येवम् । – ब्रह्मसूत्रम् ४।४।५।१०–१४

## ६. प्रदीपाधिकरणम् (ब्रह्मसूत्रम् ४।४।६।१५–१६)

शिष्यः –

आचार्यो जैमिनिर्वक्ति मुक्तात्मा किं निरात्मकः ?
यद्वा स सात्मको भाति सन्देहोऽत्र समागतः ॥६५॥

वादिनः कथयन्त्यत्र सर्वे देहा न सात्मकाः ।
आत्मा मनो न भवतोऽनेकात्मानः स्वरूपकाः ॥६६॥

अतो वसति मुक्तात्मा देहे चैके निरन्तरम् ।
अनेके न भवन्त्येवाऽऽत्मानो मुक्ता यथार्थतः ॥६७॥

गुरो ! तदत्र वदतु मुक्तात्मा बहवः किमु ?
अथवा न भवन्त्येव सप्रमाणं प्रवक्तु माम् ॥६८॥

गुरुः –

विकारशक्तियुक्तश्चेदेकोऽपि बहु दृश्यते ।
दीपकोऽनेकरूपेण तथा मुक्तोऽपि दृश्यते ॥६९॥

सङ्कल्पशक्तिद्वारा हि मनांसि प्रभवन्त्यपि ।
मनोऽनुरूपाश्चात्मानो बहवः सम्भवन्त्यपि ॥७०॥

सृष्टा देहाननेकांश्च तदुपाधिप्रभेदतः ।
आत्मा नैकेषु देहेषु प्रविशत्येव भेदतः ॥७१॥
योगशास्त्रं कथयति योगी चानेकरूपधृक् ।
तथा भवति मुक्तात्मा बहवो वदति श्रुतिः[३१]॥७२॥

---

३१. स एकधा भवति त्रिधा भवति । – छान्दोग्योपनिषद् ७।२६।२

शङ्कन्ते वादिनोऽत्रैव स्पष्टं निगदति श्रुतिः[३२] ॥
अद्वैतः परमात्माऽस्ति कथं द्वैतो निगद्यते ॥७३॥

सिद्धान्तिनो गदन्त्यत्र श्रुति सिद्धान्तवादिनः ।
सुषुप्तेरिह दृष्टान्तः 'स्वमपीतः' प्रमाणतः[३३] ॥७४॥

सम्पद्वदन्तः कैवल्यं ब्रह्म ते ब्रह्म यन्ति च[३४] ।
क्वचित् ते श्रुतिकैवल्यं सुषुप्तिं च क्वचित् पुनः ॥७५॥

स मुक्तात्मा कदाचित्तु सोपाधीन् धरति बहु ।
क्वचित् सोपाधिरहितः कैवल्यं धरति क्वचित् ॥७६॥

अत्राधिकरणे सूत्रद्वयं श्रुत्यनुसारतः[३५] ॥
कदाचिदेको मुक्तात्मा क्वचिन्नैकविधोऽपि च ॥७७॥

### ७. जगद्व्यापाराधिकरणम् (ब्रह्मसूत्रम् ४।४।७।१७–२२)

शिष्यः –
ये सन्त्युपासका भक्ताः सर्वे सगुणब्रह्मणः ।
ईशसायुज्यमायान्ति ते सर्वे मनसा सह ॥७८॥

---

३२.क. तत् केन कं विजानीयात् । – बृहदारण्यकोपनिषद् ४।५।१५
ख. न तु तद् द्वितीयमस्ति ततोऽन्यदविभक्तं यद्विजानीयात् ।
– बृहदारण्यकोपनिषद् ४।३।३०
ग. सलिल एको द्रष्टाऽद्वैतो भवति । – बृहदारण्यकोपनिषद् ४।३।३२
३३. स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते । – छान्दोग्योपनिषद् ६।८।१
३४. कैवल्यम् ब्रह्मैव सन् ब्रह्माप्येति । – बृहदारण्यकोपनिषद् ४।४।६
३५. प्रदीपवदावेशस्तथा हि दर्शयति । – ब्रह्मसूत्रम् ४।४।६।१५–१६

ऐश्वर्यमस्ति तेषां यत् साङ्कुशं वा निरङ्कुशम् ?
निरङ्कुशं वादिमतं सन्देहः पुनरागतः ? ॥७९॥

दर्शयन्ति प्रमाणानि आप्नोत्यादीनि कानिचित्[३६]
कामचार्यस्ति सर्वत्र वदन्ति शास्त्रदर्शकाः ॥८०॥

तदत्र वदतु ब्रह्मन् ! युक्तं किं वादिनां मतम् ?
अयुक्तं यदि तद् वक्तु सिद्धान्त उचितोऽस्ति कः ? ॥८१॥

गुरुः –
अणिमादिकमैश्वर्यं मुक्तात्माऽऽप्नोति निर्मलम् ।
व्यापारं जगतो हित्वा स ईशः सृष्टिसर्जकः ॥८२॥

ईशादन्यतराः सर्वे सृष्टि संहारकारकाः ।
अव्यवस्थितचित्तास्ते संसृष्टिंनाशयन्त्यपि ॥८३॥

ज्ञानी स्वाराज्यमाप्नोति पश्याऽतिशयशंसनम् ।
प्रशंसा ज्ञानिनश्चैषा महदैश्वर्यसूचिका ॥८४॥

श्रुतिरेवं वर्णयति द्वे रूपे ब्रह्मणो भृशम् ।
निरङ्कुशं साङ्कुशं च ज्ञानी मुक्तो भवत्यपि ॥८५॥

---

३६. आप्नोति स्वाराज्यम् । – तैत्तरेयोपनिषद् १।६।२
३७. जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च । – ब्रह्मसूत्रम् ४।४।७।१७
३८. एतावानस्य महिमा ततो ज्यायांश्च पूरुषः ।
पादोऽस्य सर्वा भूतानि, त्रिपादस्यामृतं दिवि । – छान्दोग्योपनिषद् ३।११।६

ब्रह्मज्योतिः स्वयं ज्योतिस्तज्ज्योतिः स्वप्रकाशकम्[३९] ॥
प्राप्यते ब्रह्मणो ज्योतिः सर्वैस्तैर्भास्करादिभिः ॥८६॥

ब्रह्मलोकं मार्गयतो भूलोकस्थानुपासकान् ।
हिरण्यगर्भो भणति यथाऽहं भुङ्क्त तज्जलम्[४०]॥८७

ये तत्पूजां प्रकुर्वन्ति तेन पूज्यो भवत्यसौ[४१] ।
श्रौता मन्त्राः सर्व एते चार्थवादं दिशन्त्यहो ॥८८॥

प्राणात्मप्रतिरूपत्वव्रतयोगेन लक्ष्यते[४२] ।
सायुज्येन प्राप्नुवन्ति स्थानैक्यं साम्यवैभवम् ॥८९॥

ईशेन सह साम्यत्वं भोगदृष्ट्यैव दृश्यते ।
जगत्सृष्ट्या लक्ष्यते न साम्यं मुक्तस्य शास्त्रतः ॥९०॥

शिष्यः –
ते निरङ्कुशमैश्वर्यं प्राप्नुवन्ति न चेद् यदा ।
भुवि किन्ते निवर्त्तन्ते गुरो ! वदतु किं न वा ? ॥९१॥

गुरुः –
अर्थवादं वदन्त्येते भोगं लोकस्य ब्रह्मणः ।
केचिदेवं वर्णयन्ति त्वं नाऽऽधत्स्व मनस्ततः ॥९२॥

---

३९. क. न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति । – कठोपनिषद् ५।५
ख. न तद्भासयते सूर्यो न शशाङ्को न पावकः । – गीता १५।६
४०. तमाहापो वै खलु मीयन्ते लोकोऽसौ । – श्रुतिः
४१. स यथैतां देवतां सर्वाणि भूतान्यवन्त्येव हैवंविदं सर्वाणि भूतान्यवन्ति । – श्रुतिः

हिरण्यगर्भभक्तास्ते सद्भक्ता इव कर्मठाः ।
भुक्त्वा भोगान् हि तत्रत्यान् पुनरायान्ति ते भुवि ॥९३॥

ऐश्वर्यमाप्तो मुक्तात्मा तादृशं न निवर्तते ।
नाडीमूर्धन्यमार्गेण मुक्तात्मा मुच्यते भुवः[४३] ॥९४॥

ऐश्वर्यं नाशवानस्ति मुक्तात्मा न निवर्तते ।
'कार्यात्यये' वक्ति सूत्रं मुक्तात्मा न निवर्तते[४४] ॥ ९५॥

सम्यग्दर्शनतो यस्याऽज्ञानं ध्वंसनमेति च ।
नित्याऽऽनन्दे निमग्नोऽयं ज्ञानी ब्रह्म समश्नुते ॥९६॥

नित्याऽऽनन्दे निमग्नोऽयं बुद्धो ब्रह्म समश्नुते ।
नित्याऽऽनन्दे निमग्नोऽयं विद्वानमृतमश्नुते ॥९७॥

पुनर्नाऽऽयाति मुक्ताऽऽत्मा सिद्धो मुक्तोऽमृतोऽस्ति सः ।
तथा सगुण विद्याया ज्ञातुर्मुक्तिः प्रसिद्ध्यति ।
तथैव सगुणां विद्यां ज्ञाता यो मुक्तिमेति सः ॥९८॥

न तेषां 'पुनरावृत्तिः' श्रुतिरुद्गिरति स्वयम्[४५] ।
मुक्ताऽऽत्मा ब्रह्मविद् भाति पुनर्जन्म न विद्यते ॥९९॥

---

४२. तेनो एतस्यै देवताय सायुज्यं सलोकतां जयति । – बृहदारण्यकोपनिषद् १।५।२३
४३. तयोर्ध्वमायन्नमृतत्वमेति । – छान्दोग्योपनिषद् ८।६।६
४४. कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् । – ब्रह्मसूत्रम् ४।३।५।१०
४५. क. तेषां न पुनरावृत्तिः । – बृहदारण्यकोपनिषद् ६।२।१५
ख. एतेन प्रतिपाद्यमाना इमं मानवमावर्तं नावर्तन्ते । – छान्दोग्योपनिषद् ४।१५।१
ग. ब्रह्मलोकमभिसम्पद्यते । – छान्दोग्योपनिषद् ८।१५।१
घ. न च पुनरावर्तते । – छान्दोग्योपनिषद् ८।१५।१

अत्राऽधिकरणे सूत्रषट्कं तत् सर्वसम्मतम्[४६] ।
पुनर्नाऽऽयान्ति ब्रह्मज्ञा ब्रह्माऽऽनन्दा भवन्त्यतः ।।९९।।

ब्रह्मसूत्रे कारिकायां चतुर्थाध्यायवर्णितः ।
पादश्चतुर्थोऽपि मया समनूद्य समापितः ।।१००।।

।। इति ब्रह्मसूत्रकारिकायां चतुर्थाध्याये चतुर्थः पादः ।।

४६. जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च । – ब्रह्मसूत्रम् ४।४।७।१७–२२

# उपसंहारः

कविर्मनीषी विदुषां वरेण्यः

शरत्कुमारोऽस्ति बुधाऽग्रगण्यः ।

वेदान्तवेत्ता व्यवहारविज्ञो

धर्माऽनुगोऽपीह जगद्विधिज्ञः ॥

(१)

वेदान्तविद्याविषयेऽधिलग्नः

सुधीर्मनीषी गुणवान् मनोज्ञः ।

शरत्कुमारो विबुधोऽतियत्नाद्

याः कारिका निर्मितवान् सुयोगात् ॥

(२)

वेदान्तविद्यामधिगम्य तासां

सारल्यभाषाविहितोऽनुवादः ।

वेदान्तविद्यारुचिमानसानां

तत्पाठकानां मुदमातनोतु ॥

(३)

अधीतब्रह्मविद्यायाः पूर्वाऽपरसमन्वयम् ।

कृत्वाऽविरोधं सम्पाद्य साधनापूर्वकं फलम् ॥

(४)

अध्यायेषु चतुर्ष्वत्र ब्रह्मसूत्रैर्विभाजितैः ।

अद्वैतब्रह्मणः सिद्धिः सप्रमाणं विचारिता ॥

(५)

शरत्कुमारकविना नेपालीकारिकाः कृताः ।
तासामध्ययनादत्र संस्कृतेऽनूदिता मया ॥

(६)

यदत्र स्खलितं किञ्चित् प्रमादाद् विभ्रमादपि ।
मान्या मयि दयावन्तः सन्तः संशोधयन्तु तत् ॥

(७)

लेखकोऽयं कदाचिन्न ह्यच्युतो भवतीत्यतः ।
परःसहस्रं दोषाःस्युस्त्रुटयोमेऽभिलोक्यताम् ॥

(८)

विहाय मक्षिकापातं सज्जना गुणगृध्नवः ।
गुणेष्वेव समाकृष्टा भवन्ति भ्रमरोपमाः ॥

(९)

नाऽहं संस्कृतशास्त्रज्ञः क्व वेदान्तः सुदुस्तरः ।
नाऽहं कविः कवित्वेऽपि कुशलो नैव सक्षमः ॥

(१०)

न हि विद्याऽभिमानेन संस्कृते लिखिता मया ।
अनुकूलयितुं वाणीं कवित्वे यत्नवानहम् ॥

(११)

स्मरणात् कीर्तनात् पाठात् प्रश्नात् पत्रादिलेखनात् ।
अभ्यासाऽऽचरणाद् भूयादनुकूला सरस्वती ॥

(१२)

नैव सन्त्युपमोत्प्रेक्षासूक्तयो हृदयङ्गमाः ।
अनुप्रासादयश्चार्थाऽलङ्कारा गुणवृत्तयः ॥

(१३)

ये मण्डयन्ति शतशः काव्यं चेतो हरन्ति च।
वाचने श्रवणेऽपीह मधुधारा वहन्त्यपि ॥

(१४)

न क्वाऽपि तत्पुरुषोऽव्ययीभावः कृतो नहि।
बहुव्रीहिः कुतो भूयात् द्वन्द्वोऽपि घटते कथम् ॥

(१५)

केवलं मानसोत्साहात् क्रियते कर्मधारणम्।
विना येन कथं जीवो जीवतीह निरन्तरम् ॥

(१६)

श्लेषप्रसादसमतामाधुर्यगुणवृत्तियुक्।
सारस्वताः प्रकुर्वन्ति प्रसन्नं काव्यमीदृशम् ॥

(१७)

प्रीयास्तां मे हरिहरौ कारिकाः पठनादिमाः।
ब्रह्माऽऽनन्देन सुस्नातान् पातां शुद्धान् शरीरिणः ॥

(१८)

'मोहक्षयो' भवति यत्र यदा तदैव
'मोक्षो' भवेद् बुधजनस्य परस्य चाऽपि।
नो चेत् तदा न हि भवेत् पठितस्य साधो–
रन्यस्य वाऽपि गतिरन्यतरा सदैव ॥

(१९)

गभीरबुधभीमकान्ततनयो न वेदान्तिकः
स्वदोषपरिमार्गणाक्षममतिर्गुणाभावतः।
इहापि जनभाषयारचितशारदी–
सुकोमलपदैर्मया सुजनतुष्टयेऽनूदिताः ॥

(२०)

देवीप्रसादतनयो बुधभीमकान्त–

स्तस्याऽऽत्मजेन कवितारुचिमानसेन ।

नित्यं बुधैरभिहितेन जनेन लक्ष्मी–

कान्तेन मुग्धहृदयेन कृतोऽनुवादः ॥

(२१)

हरिरेव गतिर्हरिमेव भजे

हरिणाऽधिकृतोऽस्मि नमो हरये ।

करुणाऽस्तु हरेः सकलं नु हरे–

रहमस्मि हरौ शिवमस्तु हरे ! ॥

(२२)

# लेखकस्य प्रकाशिता ग्रन्थाः

१. ज्ञान र भक्ति – २०६३
२. रासपञ्चाध्यायी – २०६४
३. ब्रह्मसाक्षात्कार – २०६५
४. उपनिषत्सार – २०६७
५. ब्रह्मसूत्रसार – २०६७
६. मणिरत्नमाला अनुवाद – २०६७
७. अध्यास र चतुःसूत्री – २०६८
८. वेदान्तपरिभाषासार – २०६८
९. श्रीकृष्णाय वयन्नुमः – २०६९
१०. परमसत्य – २०६९
११. अध्यास – २०६९
१२. अद्वैतसिद्धिः १ खण्ड – २०६९
१३. अद्वैतसिद्धिः २ खण्ड – २०७०
१४. अन्तिम उपदेश – २०७०
१५. ब्रह्मविद्या – २०७०
१६. अजातवाद – २०७१
१७. पराविद्या – २०७१
१८. अपरोक्षाऽनुभूति – २०७२
१९. औपनिषद पुरुष – २०७२
२०. द्रष्टा र दृश्य – २०७२
२१. श्रीमद्भागवत-अवतरणिका – २०७४
२२. अष्टावक्रगीता-अनुवाद – २०७५
२३. अवधूतगीता-अनुवाद – २०७५
२४. ऋते ज्ञानान्न मुक्तिः – २०७५
२५. ब्रह्मसूत्रकारिका – २०७८
२६. उपनिषत्कारिका – २०७८
२७. महावाक्य – २०७८
२८. वेदान्तचम्पू – २०७८
२९. ब्रह्मसूत्रकारिका-संस्कृतम् – २०७९
३०. सङ्क्षेपशारीरकसारसङ्ग्रहःसंस्कृतम् – २०७५
३१. उपनिषतकारिका-संस्कृतम् – २०७९
३२. उसैको लागिको समीक्षा – २०२६
३३. ऋतुमन्थन, समीक्षा – २०४४
३४. सिर्जनाका फूलहरू, कविता – २०५१
३५. बहादुर शाह, खण्डकाव्य – २०५२
३६. श्रद्धाञ्जलि, शोककाव्य – २०५२
३७. गीत तथा भजनहरू – २०५२
३८. अमरसिंहको चिट्ठी, काव्य – २०५३
३९. क्रान्तिदूत, खण्डकाव्य – २०५३
४०. विविधयात्रा, कविता – २०५५
४१. यात्रैयात्रा, कविता – २०५८
४२. पत्रैपत्र, कविता – २०५९
४३. पृथ्वीविजय, काव्य – २०६२
४४. तीर्थहरूको यात्रावृत्तान्त – २०६४
४५. अनुस्मृति (जीवनयात्रा) – २०६७
४६. वन्दना – २०६८
४७. कविशतक – २०६८
४८. अष्ट्रेलियाको दैनिकी – २०६९
४९. आभास – २०७२
५०. कवितामञ्जरी – २०७४
५१. इन्दिरास्मृतिकाव्य – २०७९

ISBN 993712722-X
9789937127226